**जया देवी :**

देवीपुराण में देवराज इन्द्र को जया देवी की पूजा व स्तुति करते हुये दिखलाया गया है।[१] (१५/२) ब्रह्मा पर्यन्त देवता उससे उदारता एवं दया की कामना करते हैं। जया देवी को परमतत्व बतलाते हुये पुराणकार कहता है कि योगादि के द्वारा उसका ध्यान किया जाता है एवं तभी परमसिद्धि प्राप्त होती है।[१] (१५/८) अनेक अनुष्ठानों एवं यज्ञविद्याओं द्वारा उसकी पूजा की जाती है एवं उसको अनादि और अनन्त कहा गया है।[२] (१५/६३) एक स्थान पर तो यहां तक कहा हैं कि देवी शिव के शरीर से उत्पन्न हुई हैं एवं अन्यत्र शिव द्वारा प्रपूजित भी कहा है। वह सारे विश्व की माता है। (६/१६) पुराणकार कई राक्षसों के वध का श्रेय इस देवी को देता है। अपने सौम्य स्वरूप में देवी भक्तों एवं बालकों के रोगों को दूर करती है। वात, पित्त, कफ से उद्भूत अनेक रोग देवी पूजा से शान्त हो जाते हैं; दुर्घटना से पीड़ित व्यक्ति बच जाते हैं यहां तक कि विष का प्रभाव भी दूर हो जाता है। सर्पदंश, भूतबाधा, महापातक एवं मस्तिष्क का असन्तुलन आदि असाध्य रोग भी देवी कृपा से ठीक हो जाते है।[४] (६/४१-४३)

**सर्वमंगला :**

इस देवी को प्रस्तुत पुराण में कभी मंगला[५] के नाम से एवं (८६/३)[६] कभी सर्वमंगला नाम से अभिहित किया गया है। (३७/५-२)[७] मुख्य रूप से दानव रुरु के साथ युद्ध एवं उसके वध की कथा इनके साथ जोड़ी गई है। वैसे यह सौम्य प्रकृति की देवी है और संहारक तत्व से रहित है। स्थान स्थान पर पुराणकार उन्हें सुख सौभाग्यप्रदान करने वाली कहता है। परब्रह्म से एकात्म्य स्थापित किया गया है एवं भैरवी, काली, दुर्गा आदि भी इसी के रूप बतलाये गये हैं।[८] (८६/३) इनकी पूजा का प्रकार कुछ विशिष्ट ही बतलाया गया है, और इसप्रकार की पूजा विधि सभी सौम्य प्रकृति की देवियों की बतलाई गई है।

१—आश्विन शुक्ल पक्ष में देवी की पूजा एवं उपवास। माघ, श्रावण और चैत्रमास में कृष्ण पक्ष की अष्टमी से शुक्लपक्ष की अष्टमी तक १६ दिन पूजा होती है। (८६/२)[९]

२—ब्राह्मणों, गुरुओं आदि को भोजन एवं उनका आदर सत्कार।

३—स्त्रियों एवं कन्याओं का पूजन और उनको भोजन कराना।

४—देवी के स्तोत्रों का पाठ और विभिन्न नामों से उसकी पूजा।[१०]

५—बलि पूजा और मद्य एवं मांस की बलि देना।

६—होम, वसुधारा दान आदि।

७—सांस्कृतिक कार्यक्रम, रात्रि जागरण, नाट्य, नृत्य आदि।[११]

---

१. देवी पुराण—१५/८
२. वही १५/६३
३. वही ६/१६
४. वही ६/३१-४३
५. मंगलारूपिणी देवी अथवा रुरुघातिनीम्। देवीपुराण ८६/–३
६. वही ८६/१–२५
७. देवीपुराण ३७/२-५
८. वही ८६/३
९. वही ८६/२
१०. वही ८६/१-१२
११. वही ८६/६

८—दक्षिणा दान—प्रसाद चढ़ाना, ब्राह्मणों आदि को दान।

९—रथयात्रा महोत्सव एवं सामाजिक पूजा का प्रकार।

१०—मानसिक पूजा—ध्यान दर्शन आदि=परमभक्ति का स्वरूप।

देवीपुराण के अनुसार मंगला देवी की स्थापना मातृकाओं के अन्तर्गत की जानी चाहिए एवं इनके एक तरफ वैष्णवी तथा दूसरी ओर ब्राह्मी की मूर्ति स्थापित होनी चाहिए।[1]

## विन्ध्यवासिनी :

विन्ध्याचल में सतत निवास करने के कारण देवी का नाम विन्ध्यवासिनी पड़ गया है। घोरासुर का वध करने के लिये उनका अवतार हुआ था। (हिमालय में नन्दा देवी के नाम से उसकी पूजा होती है) पूर्ण विधि विधान, मन्त्र, पुण्य, क्रिया तथा मानसिक भक्ति-भाव से पूजा किये जाने पर वह भक्तों की सभी इच्छाएं पूर्ण करती है परन्तु स्त्रियों, बच्चों, दीनों तथा भक्तों पर वह अत्यन्त कृपालु रहती है।[2]

दवीपुराण देवी विन्ध्यवासिनी के रूप का विशिष्ट वर्णन करता है। इस पुराण की विषय वस्तु देवी के क्रियाकलापों, अवतारों तथा योग और मन्त्र आदि से परिपूर्ण है। विन्ध्यवासिनी का स्वरूप बतलाते हुये उन्हें कुमारी रूप में प्रदर्शित किया गया है तथा सिंहवाहिनी बतलाया गया है। उनका संग्राम विभिन्न राक्षसों के साथ होता है जिसमें वे विजय प्राप्त करती हैं तथा संसार में सुख, शान्ति, और समृद्धि का साम्राज्य स्थापित करती हैं। उनके ऐश्वर्य के वर्णन में पुराणकार यह भी प्रदर्शित करता है कि सभी देवता ब्रह्मा, विष्णु आदि समेत देवी की सेवा में तत्पर रहते हैं।[3] बहुत सी स्त्री देवता भी उनकी परिचारिकाओं में परिगणित की गयी हैं।

महामुनि नारद अपने पौराणिक रूप में उपस्थित होते है एवं महादैत्य वज्रदण्ड के यहाँ आकर उसको एक त्रिलोक सुन्दरी कन्या के विषय में सूचना देते हैं। यह कन्या विन्ध्य में निवास करती है तथा दिव्य लोक की अपूर्व सुन्दरी है यह जानने के बाद वज्रदण्ड के मन में बड़ी ही उत्कट लालसा उत्पन्न हुई कि इस दिव्य सुन्दरी पर्वतकन्या का उपभोग किया जाय। तभी उसने अपनी सेना के साथ विजय यात्रा प्रारम्भ की। मार्ग में उसे बहुत सारे अपशकुन दिखाई दिये परन्तु फिर भी वह यात्रा पर चलता ही रहा।[4] विन्ध्य पर्वत पर पहुंचने के बाद उसने देवी को देखा और तब उसकी लालसा और भी अधिक बढ़ गई। प्रथम तो उसने अपने सेनापति दुर्मुख को युद्ध के लिए भेजा और वह युद्ध करते हुये विजया देवी के हाथों मारा गया। तदनन्तर काल नामक दानव आगे बढ़ा परन्तु वह भी जया देवी के द्वारा यमपुरी पहुंचा दिया गया।[5]

---

१. देवीपुराण ७८/२१
२. वही ९२/९-११
३. वही ७/२०
४. वही २/१-३५
५. वही १३/१-२८

## नन्दा देवी :

नन्दा देवी हिमालय में निवास करती हैं। इसी नाम के एक तीर्थ की देवी पुराण में काफी महिमा गायी गई है। नन्दा तीर्थ या नन्दापुरी के वैभव के वर्णन की देवी भागवत पु० के मणिद्वीप के वर्णन से तुलना की जा सकती है। इस पुरी में सभी प्रकार की वैभव सामग्री विद्यमान रहती है क्योंकि वहाँ पर सारे जगत् की अधिष्ठात्री देवी निवास करती है। नन्दा देवी का विशेष रूप से अवतरण रुरु दैत्य का विनाश करने के लिए हुआ था। रुरु ने ब्रह्माजी से वरदान प्राप्त किया था अजेयता का अत: वह सभी देवताओं को पीड़ित करता रहता था।[1] उससे रुष्ट होकर देवगण विष्णु की शरण में पहुंचे, एवं सारी कथा सुनायी। विष्णु ने शिव और शक्ति की स्तुति की और तब शिव के साथ रुरु का घमासान युद्ध हुआ। तदनन्तर ब्रह्माजी भी स्त्रीरूप में सहातार्थ आ पहुचे। ब्रह्माजी के क्रोध या तेज से ब्रह्माणी की उत्पत्ति हुई जो हंस पर विराजमान हैं, हाथों में कमण्डलु एवं हथियार लिए हुए हैं एवं वह दैत्यों का संहार करने को उद्यत हुई।[2]

## उमा शिव :

देवीपुराण में देवी को भगवान शिव की पत्नी[3] स्वीकार किया है एवं कई बार शिव के साथ उनकी स्तुति भी की गई है। यहाँ तक की वेदान्तियों की भांति संसार को ही शिव शक्तिमय बतलाया गया है।[4] यह शक्ति संसार का नियमन करती है, कारणों का भी कारण है, और सभी योग सम्प्रदायों व विद्याओं की उद्भावक है। रौद्री या महारौद्री रूप में सभी देवताओं से वन्दनीय है और विद्यास्वरूपा है। साक्षात् क्रोधमूर्ति है, दुष्टों व राक्षसों के लिए मृत्युस्वरूपा है। वह क्रिया, शक्ति, काल, जल, भक्ति, पराविद्या सभी कुछ तो है। शिव के रूप एवं गुणों की अशदायी होने के कारण परवर्ती युग में अर्धनारीश्वर रूप विकसित हुआ[5] जो भारतीय मूर्ति कला का भव्यतम रूप माना जाता है।

## क्षेमंकरी :

इस देवी को आद्या शक्ति रूप में स्वीकार किया गया हैं। यह देवी का भीषण स्वरूप है जो देवताओं की प्रार्थना पर सुबल नामक दैत्य का वध करने के लिये प्रकट हुआ था।[6] वह देवी वृद्धा के रूप में प्रकट हुई थी। वह कृशकाय है, रक्तशिराएं उभरी हुई हैं, मांसरहित शरीर है, आँखें अन्दर को धंसी हुई हैं; कान आधे दिखाई देते हैं, चिन्तामग्न, मुख फटा हुआ है, सैकड़ो अस्त्रशस्त्रों से सुसज्जित यह रूप बड़ा ही भयावह है। क्रौञ्चद्वीप देवी का निवास स्थान है तथा वह आठ विद्याओं

१. देवीपुराण ९३/५-१०२
२. वही ८४/२०-२६
३. वही ८३/६६
४. वही ८३/४६
५. वही ८३/४७-१२०
६. वही ३९/१३६-१३९

से निरन्तर घिरी रहती है। देवताओं की रक्षा करने के कारण ही देवी का नाम क्षेमंकरी पड़ा एवं अधिकतर इसकी पूजा श्राद्धपक्ष में होती है। मांस, मदिरा, स्वर्ण, मत्स्य आदि की बलि कुलमार्ग या वाममार्ग पद्धति से दी जाती है और यह देवी पूर्णरूप से तान्त्रिक है।

## दुर्गा :

देवीपुराण के अनुसार भगवती दुर्गा की पूजा गणेश, नवग्रह या शिव के साथ की जानी चाहिए। भवन निर्माण, दुर्ग निर्माण, नगर निर्माण एवं सेतु निर्माण के समय भी दुर्गा देवी का पूजन होता है।[१] (७३/५८)वस्तुतः दुर्गा यह नाम भी (दुर्ग की अधिष्ठातृ देवता) दुर्ग से सम्बन्ध रखता है, अतएव इस पुराण में हमें गिरिदुर्गा, वनदुर्गा आदि नाम भी प्राप्त होते हैं।[२] देवीपुराण में ऐसे निर्देश भी प्राप्त होते हैं जिनमें कहा गया है गोपुर का निर्माण करते समय दुर्गा महिषमर्दिनी की मूर्ति स्थापित की जानी चाहिए। दुर्ग का निर्माण करते हुए बलि भी प्रदान की जानी चाहिए एवं द्वारों का नाम करण भी देवी के नामों पर किया जाना चाहिए।[३]

दुर्गा देवी के अनेक रूप बतलाये गये हैं, फिर भी वह एक है। उसकी भुजाएं भी कभी दस, कभी आठ कभी चार और कभी १८ भुजाओं वाली भी बतलाया गया है। दुर्गा का वेदान्त के ब्रह्म के साथ एकात्म्य स्थापित किया गया है।[४] कई स्थानों पर देवी को काल–अर्थात् रुद्र से जोड़ दिया गया है अर्थात् शिव की संहारक शक्ति का नाम ही काली है और उसीसे ब्रह्मा, विष्णु आदि देवताओं की उत्पत्ति बतलाई गई है[५]। देवी को कभी देवताओं की शक्ति या देव पत्नी कहा गया है और साथ ही साथ उनकी नियन्त्रण कर्त्री शक्ति होने के कारण वह देवमाता भी कहलाती हैं।[६]

## साहित्य :

देवीपुराण में संस्कृत साहित्य की विभिन्न विधाओं; विद्याओं एवं शास्त्रों के बारे में महत्वपूर्ण प्रमाण उपलब्ध होते हैं। इतिहास; काव्य, नाटक, आख्यायिका, ज्योतिषशास्त्र, आयुर्वेद शास्त्र; वीणा शास्त्र आदि का उल्लेख मिलता है। इसके अतिरिक्त देवी शास्त्र का पुनः पुनः उल्लेख मिलता है जिससे ज्ञात होता है कि देवीपुराण के निर्माण से पूर्व ही देवी सम्बन्धी साहित्य प्रचुर मात्रा में उपलब्ध हो रहा था। ऐसे पुराणों का भी उल्लेख है जिनमें देवी का वर्णन है अर्थात देवी पुराण के अतिरिक्त अन्य पुराणों में भी देवी सम्बन्धी सामग्री मिलती थी। इसी प्रकार एक स्थान पर 'पौराणिका देव्यः' पद का प्रयोग किया गया है अर्थात् पौराणिक और तान्त्रिक देवियों को पृथक् २ रूप में स्वीकार कर लिया गया था।

---

१. देवीपुराण ३६/१३०-१७६
२. वही ७३/५८
३. वही ७२/१२४-१२७
४. वही ६/२३-३१ सप्तशती १०/५
५. वही ८१/४-१२
६. वही ७/३६

यद्यपि उपपुराणों का परिगणन उन मूल्यवान् ग्रंथों एवं अभिलेखों के रूप में किया गया है जो प्राचीन भारतीय, इतिहास, संस्कृति, सामाजिक जीवन, राजनीतिक उथल-पुथल एव धार्मिक भावनाओं के विषय में मूल्यांवन सामग्री संजोये हुये हैं, फिर भी अभी तक विद्वानों एवं मनीषियों का ध्यान इस ओर आकृष्ट नहीं हो सका है। कलकत्ता विश्वविद्यालय के प्रोफेसर राजेन्द्र चन्द्र हाजरा के अतिरिक्त किसी अन्य विद्वान ने अपनी लेखनी इस विषय पर नहीं उठाई है। यद्यपि डा० हाजरा ने उपपुराण सम्बन्धी अध्ययन काफी परिश्रम से किया है परन्तु उनका अध्ययन इन पुराणों के विषय में बहुत ही कम सामग्री उपलब्ध कराता है एवं एक प्रकार से प्राथमिक ज्ञान ही हो पाता है इनके ग्रन्थों से। डा० हाजरा, ऐसा प्रतीत होता है कि अधिकतर वर्णनात्मक ही रहे हैं और इसी के कारण इस बड़ी भारी ज्ञान निधि का मूल्यांकन कुछ सीमा तक ही हो सका है। उपपुराणों की शक्ति सम्बन्धी सामग्री का अध्ययन मैंने अपनी 'शक्ति कल्ट इन एन्शेन्ट इंडिया' नामक पुस्तक में किया है। इस अध्ययन को प्रस्तुत करते हुये मुझे उपपुराणों में बड़ी ही मूल्यवान एवं वैविध्यपूर्ण सामग्री के दर्शन हुये हैं जो मैं आगामी कृतियों में विद्वानों के समक्ष रखूंगा। शेष अभी तक किसी भी विद्वान ने इन मूल्यवान कृतियों पर कार्य नहीं किया है।

इस पुराण का सम्पादन उपलब्ध पांण्डुलिपियों के आधार पर किया गया है। पाण्डुलिपियां बहुत ही कम संख्या में उपलब्ध हुई हैं। यथाशक्ति मैंने पाठ को शुद्ध करने की चेष्टा की है परन्तु फिर भी अशुद्धियां रह गई हैं। तथापि मैं आशा करता हूँ कि देवीपुराण के इस संशोधित संस्करण के प्रकाशित होने से पुराण विद्या तथा देवी विद्या के क्षेत्र में एक नया कीर्तिमान स्थापित हो सकेगा एवं विद्वानों का ध्यान इस ओर आकृष्ट होगा, इस दिशा में नये २ कार्यो में प्रवृत्ति होगी और उपपुराण साहित्य का अगाध भण्डार भी प्रकाश में आने लगेगा। तथा उस भण्डार के अध्ययन से प्राचीन भारतीय विद्याओं पर यथेष्ट प्रकाश पड़ेगा और इस **प्रकार मां** सरस्वती के शृंगार में अभिवृद्धि होगी।

सरस्वती श्रुति महती महीयताम्।

**अन्त** में अपना यह विनम्र प्रयास मां भगवती के श्री चरणों में सादर, सविनय अर्पित करता हूँ।

लोकानां हितकामाय तवाप्याराधनाय च।
अमृतं ज्ञानं संपाद्य समर्पये सुरेश्वरि॥

# ॥ अथ देवीपुराणम् ॥

॥ श्रीगणेशाय नमः ॥

प्रथमोऽध्यायः ।

## ओं नमश्चण्डिकायै[1] ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्[2] ॥

नमस्कृत्य शिवां देवीं सर्वभागवतां शुभाम् । पुराणं सम्प्रवक्ष्यामि यथोक्तं ब्रह्मणा[3] पुरा ॥१॥

ऋषय ऊचुः ।

भगवंस्त्वं समस्तस्य दृष्टादृष्टस्य तत्त्ववित् । पुराणार्थं वयं सर्वे आगता भुवि[4] भाविताः ॥२॥
कथ्यतां यत्र घोराद्या भूताः साम्प्रतदानवाः । भविष्याश्च विनाशिष्ये देवी देवनमस्कृता ॥३॥
इन्द्रस्य च दिवः प्राप्तिर्हृतराज्यस्य दानवैः । यथा शक्रो जयं[5] चक्रे देवदेवनमस्कृतः ॥४॥
अवतारा मुनिश्रेष्ठ षष्ठिभेदगता यथा[6] । पूजयेत् स पृथु राजा देवीं सर्वार्थसाधनीम् ॥५॥
यथा मातृसमुत्पती रुरोर्नाशो महात्मनः । चामुण्डा येन वा देवी येन वा सर्वमङ्गला ॥६॥
निरुक्तानि च नामानि[7] वह्नं सन्तर्पणं यथा[8] । वसुधाराविधिस्तात[9] देवतास्थापनादिकम् ॥७॥
यत्र मायो महामायो निहतो रामसायकैः । यत्र संस्थापिता देवी बहुधा वसुधातले ॥८॥
स्तोत्राणि च विचित्राणि शिवाद्यैः शुभहेतुभिः । कृतानि बहुभेदानि तथा माहात्म्यवर्णना ॥९॥
शिवस्य च तथा[10] स्तोत्रं यामलं विष्णुब्रह्मणोः । कृतं लोकोपकाराय शुक्रेण च महास्तवम्॥१०॥

---

१. ग—पुस्तके अस्ति । पाण्डुलिपि–लेखकेन च 'ओउम्' इति लिखितम् ।
२. क—चिन्हित पुस्तके नास्ति । ग—पुस्तकेऽपि नास्ति । तथा— नमस्कृत्य जगन्मात्र कुम्भयोनिप्रियाश्रिये इत्यधिकः पाठः ।
३. यथोक्तैमृषिभिः क, ग चिह्नितपुस्तके
४. भाव —क, ग ।
५. शक्रोच्छ्रय—ख, ग ।
६. तथा– क ।
७. सर्वाणि–ग ।
८. तथा-क ग
९. विधिस्तात-ख, ग ।
१०. यथा-क ।

रथयात्रादयः पुण्याः कथा पापप्रणाशणीः[१] । खट्वावधं महाघोरं मायकोत्पत्तिकीर्त्तनम् ॥११॥
कीर्त्तनं विघ्ननाशस्य[२] यागादिभिः समर्च्चनम् । महाशान्तिविधानञ्च पुष्पाद्यैरभिषेचनम् ॥१२॥
वीक्ष्य[३] शक्रस्य यञ्चक्रे गुरुकामप्रसाधनम् । नानासदानि[४] दुर्गाणि शिल्पानि विविधानि च ॥१३॥
यत्र सङ्कीर्त्तयेद् ब्रह्मा मन्वादीनां प्रपृच्छताम् । वर्णाश्रमस्थितिर्यत्र आचारस्य च कीर्त्तनम् ॥१४॥
कीर्त्तनं यत्र देवानां[५] साङ्ख्यमाहात्म्यवर्णनम् । यत्र मृत्युग्रहादित्यग्रस्ता अवान्तरे नृपाः ॥१५॥
अर्च्चया सर्वेश्वरी पूर्वं शक्रादिभिर्यथा नुता[६] । वृत्राघशमनी[७] तात भूमिशुद्धिकरी परा ॥१६॥
हरिश्चन्द्रादयः स्वस्था[८] भूता देवीप्रसादतः ।
माण्डव्यो मुनिशार्दूलो यत्र पूजयते शिवाम् । यत्रायुर्वेदसंसिद्धिं धन्वन्तरिरवाप्तवान्[९] ॥१७॥
प्रादुर्भावस्तथा विष्णोर्व्रताश्च नियमादयः । वेदव्रतानि यज्ञानां कथनं साधनं तथा ॥१८॥
ग्रहाणाञ्च गतिश्चोर्ध्वं चक्रचारानुकीर्तनम् । संस्थानं संस्थितिर्यत्र नागानां तलवासिनाम् ॥१९॥
कालसङ्ख्याप्रमाणन्तु[१०] युगभेदप्रकीर्त्तनम् । लोकेषु शब्दसङ्ख्यानं[११]शुभाशुभ-विवेचनम्[१२] ॥२०॥
पद्ममालाविधिः पुण्यः सम्बन्धो[१३] योगकीर्त्तनम् । प्रत्यक्षाणि च लक्ष्याणि योगिनां सुखसिद्धये।२१।
ध्वजदानप्रसङ्गेन पुष्पाणि विविधानि च । दानभेदा महापुण्या विद्यादानं तथोत्तमम् ॥२२॥
व्रतानि चोपवासाश्च यमाश्च नियमास्तथा । जलेन[१४] स्थापनं देव्याः प्रासादवलयादिषु[१५] ॥२३॥
ग्रहभेदगता पूजा शान्तोग्रविधिना यथा । साधते[१६] सर्वकार्याणि तथा नो वक्तुमर्हसि ॥२४॥
समस्तव्यस्तभेदेन क्रमाचारानुलोमतः[१७] । यथाबुद्धिस्तथा[१८] तत्त्वं युगकालानुरूपतः ॥२५॥
यथा प्रसीदते देवी आत्म-भावानुरूपतः । कर्म-यज्ञ-विधानेन तथा कथय सुव्रत ॥२६॥
एवं पृष्टस्तु तैः सर्वैर्वसिष्ठो मुनिसत्तमैः । यथा-न्याय-विधानज्ञैः श्रूयतामिदमब्रवीत् ॥२७॥

---

१. प्रणाशनाः क ग　२. विघ्नराजस्य–ग　३. ऋक्षे–क ग ।
४. नानास्पदान—क, नानास्पदानि । ५. वेदानां —ग । ६. प्लुता–क । ७. वृत्राघशमनी–ख ।
८. स्वःस्थाः—क ।　९. रवाप्नुयात्–ख ।　१०. प्रमाणञ्च–क ।
११. लोकेषण्ठयब्दसंस्थानं शुभाशुभविवेचकम् क, शेऽन्यसं इत्यपि पाठः ख, चिन्हित पुस्तकस्य पाठान्तरे ।
१२. पद्यमिदं ग–पुस्तके नास्ति ।　१३. सम्बन्धं–ग ।　१४. चालनं ग, क ।
१५. प्रसादेन नयादिषु– ख ।　१६. साधने–क ।
१७. क–पुस्तके क्रमाचारान्० इत्यतः यज्ञविधानेन इति यावत् पाठो नास्ति क्रमवाचा–ग ।
१८. यथा बुद्धि यथा तत्त्वं–ग ।

आद्याध्यानेन संक्षेपात् पुराणं समुदाहृतम् । पादे त्रैलोक्यविजये सर्वकामप्रसाधनम् ॥२८॥

वसिष्ठ उवाच

श्रूयतां[1] संविधास्यामि सर्व-काम-प्रसाधकम् । देव्याः सम्पूजनं यत्र महाभाग्यं पदे पदे ॥२९॥

चतुष्पाद-विभागेन[2] यथा-युग-क्रमागता । देवी सर्वसुखावाप्तिं प्रयच्छति प्रपूजिता ॥३०॥

कथां पुण्यविवृद्ध्यर्थं पौराणीं मुनिसत्तमैः । भवद्भिर्यदहं पृष्टस्तदगस्त्यो[3] वदिष्यति ॥३१॥

शिवाद् विष्ण्वादिभिः प्राप्ता ब्रह्मणो मातरिश्वना । तथा मन्वत्रिभृगुभिरस्माकमवतारिता ॥३२॥

अगस्त्याच्चित्र[4]-नृपगैर्लोके ख्याति गमिष्यति ॥३२॥

ये च भक्त्या यथान्यायं क्रमाच्छ्रोष्यन्ति मानवाः । न तेषां दुष्कृतं किञ्चिद् भविष्यति मनागपि ।३३।

समस्तं यदि चार्धं वा पादं पादार्धमेव वा । नियमादर्थसम्प्राप्तिस्तावद् भाव्यं सुखार्थिभिः ॥३४॥

अविच्छेदेन संसिद्धि प्रयच्छति यथेप्सिताम् । विच्छेदाद् विफलं याति इहलोके सुखावहम् ॥३५॥

उत्पत्तिकीर्तनं सृष्टेः प्रथमं समुदाहृतम् । विजयेदेवपादेतुऋषीणांपरिपृच्छताम् ॥३६॥

शक्राख्यानं महापुण्यं घोरोत्पत्तिविनाशनम् । दुन्दुभेर्निधनं यत्र घोरः संवर्धितो महान् ॥३७॥

तपस्तप्त्वा वरं लेभे विष्णुना प्रभविष्णुना । मन्त्राद्याः[5] साधिता यत्र नृपा नागा रसातले ॥३८॥

यत्र[6]नादं सुतस्तस्य शक्रात्[7] प्राप्तो गतो दिवम् । विजित्य[8] यत्र स-मायां छद्मितो गुरुणा-पुनः ।३९

देवी यत्र गता विन्ध्यं ब्रह्मविष्णुसुपूजिता । पदमालां महाविद्यां नारदो जपते यथा[9] ॥४०॥

घोर-प्रलोभनार्थाय महिषाहवकाङ्क्षया[10] । तथा[11] खट्वादिमायानां वधो यत्र कृतः सुरैः ॥४१॥

देवं रुद्रं समाराध्य बहुभेदार्थता शिवा । त्रैलोक्याभ्युदयं नाम द्वितीयं परिकीर्तितम् ॥४२॥

निशुम्भशुम्भमथनं तृतीयं पादमुत्तमम् ॥४३॥[12]

---

१. श्रूयतामभिधास्यामि क । २. चतुष्पद०—क ।
३. कथिष्यति-ख । ४. अगस्त्या गीस्तु-ख ।
५. मर्त्याद्याः क, ग । सद्यः समाधिता इति ख-पुस्तकस्य पाठान्तरे । ६. यत्र रूपं-ग ।
७. शुक्रात्-ग ।
८. विजित्य यत्र मायोऽसौ चुम्बितो, क, विजित्य यत्र मायाऽसौ छद्मितो गुरुणा पुनः ग ।
९. तथा-क । १०. महिषाहरकांक्षया ख । ११. यथा-क । १२. पदमु० ग, क ।

अन्धकस्य महायुद्धं देवदानवसङ्गरम् । देवदेवं हरं स्तुत्वा भृङ्गित्वमाप्नुयात् पुनः[1] ॥४४॥

युद्धं देवासुरं[2] नाम तारकस्य गुहस्य च । अवतारं कुमारस्य कामस्य तनुनाशनम् ॥४५॥

आराधनञ्च रुद्रस्य शक्रार्थं कृतवान् हरिः । अवतारं च देवस्य सैनापत्यं गुहस्य च[3] ॥४६॥

उमा काली-समुत्पत्तिर्देवताराधनं यथा । कृत्वा देवी पतिं लेभे शङ्करं सर्वशङ्करम्[4] ॥४७॥

उद्वाहं कल्पयेद् यत्र हिमवानचलोत्तमः । होता यत्र समुत्पत्तिर्बालिखिल्यादयो महान् ॥४८॥

ऋषयः सर्वदेवानामादित्य-रथसानुगाः । गतयश्च यथा चित्राः कर्मणः सुविपाकजाः ॥४९॥

महाश्वेता-समुत्पत्ती[5] रवि-रक्षा-नियोजिता । यत्र जम्भादयो देवा ग्रहरूपा व्यवस्थिताः ॥५०॥

हिताय पूजिता यत्र शिवदूती-तनूद्गता । ग्रहयागः कृतो-यत्र ब्रह्मणामिततेजसा ॥५१॥

हिताय सर्वभूतानां मातरो लोकमातरः । स्थिता लोकविभेदेन बालानां हितकाम्यया ॥५२॥

एवं संक्षिप्य चोद्धृत्य[6] पुराणं ब्रह्मभाषितम् । पवित्रं[7] सर्वलोकानामुपकाराय कीर्त्तितम् ॥५३॥

एवञ्चानुक्रमाद् यस्तु समस्तं व्यस्तमेव वा[8] । अर्धं पादार्धं पादं वा आद्याध्यायत्रयञ्च वा ॥५४॥

यथाविद्याविधानेन कीर्त्तयेच्छ्रणुयाच्च वा । वेदार्थ-तत्त्व-सहितं सर्वकाम-स्प्रदायकम् ॥५५॥

शिव-ब्रह्म-हरेः कीर्ति-कारकं शुभकारकम् । सर्वकामानवाप्नोति प्रेहितान्[9] मनसा नरः ॥५६॥

सुखं कीर्ति धनं पुत्रान् कल्प्यतां जनसंसदि । श्रवणादाप्नुयाच्चेदं पुराणं शिवभाषितम् ॥५७॥

पाठस्थानानि गोष्ठञ्च[10] देवीदेवगृहाणि च । विचित्राणि च पुण्यानि सौधानि सुशुभानि च ॥५८॥

नदी-तीर-द्रुमोद्यान-विविक्त-जन-संसदि । कीर्तयेच्चोपलिप्तेषु[11] धूप-गन्ध-स्रगादिभिः ॥५९॥

एक-चित्त-समाधानस्तद्गतेनान्तरात्मना । भावयंश्चाथ सद्भावं विशुद्धेनान्तरात्मना[12] ॥६०॥

शृणुयान्न शठो नीचः खलभावः सदा क्षमी । अभक्तो न च देवानां न द्वेषी न च मत्सरी ॥६१॥

देवीं देवाञ्छिवादीन् यः सूर्यब्रह्महरींस्तथा । गुरुविप्रहितो भक्तः स लभेत हितं फलम्[13] ॥६२॥

नृपवाहन उवाच

सर्वकामप्रदा देवी त्वया चेन्द्रात् पुरा यथा । श्रुता विद्या महाभाग तथा नो वक्तुमर्हसि ॥६३॥

१. सुरः क, ग। २. देवं मृदुं क, ग। ३. तु-क। ४. सुरशङ्करम्-क, ग।
५. स्वविपाकजाः-क, ग। ६. राजरक्षा क। गजरक्षा-ग। ७. संक्षिप्यतोदघृत्य-ग।
८. परिचित्रं-ग। न्यूनमेव-क, ग। ९. स सर्वकामानाप्नोति ईप्सितान् क, ग।
१०. गोष्ठानि क, ग। ११. चावलिप्ते च, क, ग। १२. ग पुस्तके नास्ति पंक्तिरियम्।
१३. लेभे विपुलं हितम्-क।

अनुग्रहार्थं सर्वेषां[1] खड्गमालाञ्जनादिकम् । या विद्या गुटिकाद्यानां बहुभेदा प्रकीर्त्तिता[2] ॥

तां हिताय महाभाग क्रिया-कर्म-गतां वद ॥६४॥

चित्राङ्गद उवाच

यदिच्छति भवान् श्रोतुं विद्यां विद्याविशारद ।

कृतविद्योऽसि[3] त्वं वत्स अगस्त्यं परिपृच्छताम् ॥६५॥

स च जानाति धर्मात्मा सर्वविद्याविधीनिमान् । अवान्तरगतां भूतां वर्तमानां भवात्मिकाम् ॥६६॥

एवमुक्तः[4] स गुरुणा सर्व-विद्यार्थ-पारगः । गतो यत्राश्रमे श्रेष्ठेऽगस्त्यो ब्रह्मविशारदः ॥६७॥

अचिरं[5] मतिमाधाय कृत्वा चार्थ-प्रसाधने । विद्यानांदिव्यसिद्धीनांनृपयानोमहामतिः ॥६८॥

एकचित्तः शिवे भक्तः सर्वकामप्रसिद्धये[6] । मुनिमाश्रममासाद्य ददृशे शुभ-वृद्धये ॥६९॥

इति श्रीदेवीपुराणेऽगस्त्याश्रमगमनं नाम [प्रथमोऽध्यायः][7]

---

१. भूतानां क, ग ।
२. गुटिकानां नहि वेदा व्यवस्थिता क, ग ।
३. कृतविद्याश्रमं क ।
४. एवञ्चोक्तः—क, ग, ।
५. आचरन्—ख,
६. समृद्धये—क. ग ।
७. इत्याद्ये देवीपुराणेऽगस्त्याश्रमवर्णनम्—क, गमनम्-ग ।



# द्वितीयोऽध्यायः ।

कामिकां साधयित्वा तु विद्यां सर्वार्थसाधनीम् । नृपवाहनो महात्मा अगस्त्यस्याश्रमं गतः ॥१॥
यत्र वेदध्वनेः शब्दः श्रूयते पुण्यकर्मणाम् । वेदाभ्यासरता यत्र ऋषयो धर्मचारिणः ॥२॥
विद्यावेदकवेत्तारो यत्र सिद्धा ह्यनेकशः । विमुक्ता[1]दुस्त्यजैर्दोषैर्यत्र तिष्ठन्तिजन्तवः ॥३॥
यत्र रोगभयं नास्ति यत्र प्रीतिरनुत्तमा । यत्र मातङ्गसिंहाना[2] मेकत्रैवाभवद्गृहम् ॥४॥
अश्वाश्च महिषैर्यत्र क्रीडन्ते सहिताः सदा । विरुद्धान्यपि सत्त्वानि रमन्ते[3] एकतः सदा ॥५॥
यं सम्प्राप्य गताः सर्वे पापिष्ठा अपि सत्क्रियाम्[4] । ऋषयो ह्यपवर्गाय तपस्तेपुर्मुमुक्षवः[5] ॥६॥
सनकः सनत्कुमारश्च नारदात्रेयगौतमाः । पुलस्त्यः पुलहो भानुः शङ्खो जाबालिपाणिनी[6] ॥७॥
भृग्वङ्गिरसवासिष्ठमाण्डव्या ऋषिसत्तमाः । शाण्डिल्यो महर्षिर्वह्निरन्येऽपि मुनिपुङ्गवाः ॥८॥
शौर्य-धैर्य-बलोपेता ज्ञान-निर्दग्ध-किल्विषाः । एकभक्ता ह्यभोक्तारो[7] नक्तोपासनतत्पराः ॥९॥
एकान्तरोपवासाश्च[8] त्रिरात्रपञ्चरात्र्यदाः । दशरात्रभुजश्चान्ये पक्ष-मास-भुजोऽपरे ॥१०॥
क्षीरपाः फलमूलादः[9] कन्दपत्राशनाः परे । संवत्सरान्तरैकादा[10] धात्री विल्वादिभोजनाः ॥११॥
शाक-यावक-गोमूत्र-गोमयाहारकाः परे । स्नान-पूजा-जपासक्ता होमसक्ता विमुक्तये ॥१२॥
ब्रह्म-विष्णु-शिव-स्कन्द-उमा-दुर्गाप्रपूजने । निरता यत्र तिष्ठन्ति सर्व-सिद्धि-फलप्रदे ॥१३॥
तत्राश्रमपदे रम्ये चागस्त्यस्तिष्ठते मुनिः । येन वाक्पाशबन्धेन विन्ध्याद्रिः सुनियामितः ॥१४॥
रवि-मार्ग-विघातार्थं यः संवर्धितुमुद्यतः । यस्योदये भवेत् तोयं शुद्धं स्वच्छं सुनिर्मलम् ॥१५॥
प्रदुष्टं विष-भौजङ्ग-मेघनिःस्यन्ददूषितम् । तस्याश्रमं समासाद्य प्रणामं कृतवान् नृपः ॥१६॥

---

१. द्वंदजै० क, ग
२. सिद्धानां क ।
३. वसन्ते क ।
४. सर्वेऽति पापाऽस्ति क, ग ।
५. तपन्ते तेह स्वर्गिणः क, ग
६. शङ्खो जाबालिको मुनी क ।
७. न भोक्तारो क, ग ।
८. त्रिरात्र० क, ग ।
९. मूलादाः ख ।
१०. संवत्सरैकान्तरादाः-क, ग ।

मुनीनां प्रतिपूजान्तु आसनार्घ्यफलाम्बुभिः । यथा ऋत्विग्गुरुश्चैव नृप आचार्यबान्धवाः ॥१७॥
तपस्वी पूजनीयास्तु ये चान्ये गृहमागताः[1] । ततो नृपो मुदा युक्तः पृच्छते वेदजं विधिम् ॥१८॥

नृपवाहन उवाच ।

भगवन् कर्मणा केन विद्याधरपतिर्भवेत् । भूतवानचले[3]तस्मिन्नूनेतदाख्याहि मे प्रभो ॥१९॥

अगस्त्य[4] उवाच ।

शिवेन या पुरा विद्या विष्णोर्दत्ताऽथ विष्णुना । पितामहस्य तेनापि शक्रस्य प्रतिपादिता ॥२०॥
यथा वत्स विधानेन सर्वकामार्थसाधिका । धर्मदा मोक्षदा देवी तथा मे गदतः श्रृणु ॥२१॥
कृत्वा क्रतुशतं विधिवद् दिवं प्राप्तो यदा[5] हरिः । ब्रह्मा ऋषिवरैर्युक्तो गतास्तद्दर्शनाय वै ॥२२॥
शक्रेण च समायान्तं दृष्ट्वा देवं पितामहम् । त्यक्त्वा सिंहासनं तूर्णं दण्डवत् पतितो भुवि ॥२३।
चरणौ पूजयित्वा स तुतोष कमलासनम् । स्तोत्रेणानेन नृपते प्रजेशं विश्वभावनम् ॥२४॥

इन्द्र उवाच ।

नमस्ते वेदगर्भाय उत्पत्ति-स्थिति-हेतवे । संहारहेतवे देव त्रिगुणाय त्रिमूर्त्तये ॥२५॥
निर्गुणाय गुणातीत शिवाय परमात्मने । अनादि[6]रादि–मध्यान्त––विश्वमूर्त्ते भवाय च ॥
अद्य मे सफलं जन्म क्रतवः फलदा मम ॥२६॥
त्वद्दर्शनेन देवेश विपाप्माहमसंशयम् । सर्वकामप्रदं देव अमोघं तव दर्शनम् ॥२७॥
तथापि हि सुरश्रेष्ठ तव पादेऽचला मतिः । च्यवनं न च स्वर्गान्मे तथा त्वं वरदो भव ॥२८॥
एवमुक्तस्तु इन्द्रेण ब्रह्मा विस्मयमागतः । अनेकानि सहस्राणि मम भक्तिरतानि च ॥२९॥
वरदान–प्रहृष्टानि बाधयन्ति दिवौकसः । तदा[7] च मां कदा विन्ध्यादयमेव[8] सुराधिपः ॥३०॥
विध्नते वरपुष्टाङ्गः किं वा भक्तिरतोऽथवा । द्विजवंश–समुत्पन्नः सुराणां पूजने रतः ॥३१॥
धर्मात्मा[9] वेदसद्भाव न तु विध्नते क्वचित् । एवं मत्वा ततस्तस्य वरदानं हि चिन्तते ॥३२॥

---

१. स्वगृहमागताशयाः ख । स्वगृहमागतान् यान् ग। २. विद्यजं क, ग ।
३. भूतो वा न चलेत् क, ग । ४. अगस्ति क.ग । ५. यथा–क ।
६. रादि– ग पुस्तके नास्ति । ७- तथा क ग । ८. कदाचित् स्याद क, ग ।
८. वेदात्मा क । धर्मार्थ ग ।

अस्माकं शिवविष्णोश्च शक्तिराद्या परापरम्[1] ।
विश्वरूपा[2] महादेवीं त्वं सजस्व[3] सुखावहाम्[4] ॥३३॥

इन्द्र उवाच ।

परा वा अपरा वाऽथ तथा चैव परापरा । केन विज्ञायते देवी किं वा सा च तथोत्तमा ॥३४॥
त्वं परश्चापरो[5] देव तथा चैव परापरः । पूज्यो ध्येयश्च वन्द्यश्च नान्यं वेद्मि द्विजोत्तम ॥३५॥

ब्रह्मोवाच ।

सत्यमेतत् सुरश्रेष्ठ तथापि कथयामि ते । आसीद् घोरो महादैत्यः सर्वदेवविमर्दकः ॥३६॥
विद्यावांस्तपवांश्चैव बलवान् बुद्धिशास्त्रवान्[6] । महापदाति-सम्पन्नः कोट्यायुत—गजान्वितः ॥३७॥
तस्याज्ञावर्त्तिनः सर्वे स च सर्वेषु भावितः । तेन आराधितः पूर्वं नृपो देवो जनार्दनः ॥३८॥
प्रभूतेनेव कालेन तुष्टस्तस्य खगासनः । प्रयच्छति वरं तुष्टः पृथिव्यामेकराड् भव ॥३९॥
न तं गृह्णाति दैत्येन्द्रो भूयो भूयोऽथ तोष्यति । परमष्टाङ्गदेवस्य भक्तिमेकान्तु याचते ॥४०॥
तथापि कृपयाविष्टः पीतवासाः सुराधिपः । प्रददौ तस्य दैत्यस्य यथेप्सितं वरं नृप ॥४१॥
अजेयो देवसङ्घस्य मम[7] तुल्यपराक्रमः । स्वर्गभूसप्तपातालान् भुञ्ज त्वं तपसोत्कटः ॥४२॥

ततः प्रणम्य भक्त्याऽसौ लब्ध्वा च वरमुत्तमम् ।
स्तवेन स्तवीत[8] विष्णुं कृतार्थो वरपालने ॥४३॥

घोर उवाच ।

नमस्ते पीतवासाय अजिताय पराय च । शंख-चक्र-गदा-धारि[9]-वनमाला-धराय च ॥४४॥
ईप्सितार्थ-प्रदानाय सर्वदेव—नुताय च । वेद-वेदाङ्ग-भावाय वेदगर्भाय वै नमः ॥४५॥
लक्ष्मीनिवास देवेश त्राहि मां भवसागरात्[10] । अनेकानेक-रूपाय बहुरूप-रताय च ॥४६॥
विश्वरूप-स्वरूपाय अहताय-हताय[11] च । तेजोधाम महातेजः सर्वदेवोत्तमाय च ॥४७॥

१. परापरम् क ।
२. मिश्ररूपां क, ग ।
३. जपस्व ग ।
४. तिर्यक् पशु (सु) खाय च क ।
५. परा अपरो क ग ।
६. सत्त्ववान्— खपुस्तकस्य पाठान्तरे । बुद्धिशस्त्रवान्-ग ।
७, मत् ख-पु० पाठान्तरे ।
८, स्तुवते-ग ।
९. गदाधार-ग ।
१०, भवनाशन क ग ।
११. अकृताय कृताय-क ग ।

अव्यक्त-व्यक्त-सद्भाव-भावाभावरताय च । सर्वान्[1] न वेद्मि देवेश गुणांस्ते मधुसूदन ॥४८॥

आर्त्तस्य मे सुदीनस्य दयां त्वं कुरु केशव । एवमुक्तो हरिस्तुष्टो भुञ्ज स्वर्गं यथेप्सया ॥४९॥

अचलस्त्वं[2] शिवे देव्यामन्येषामजयः सदा । एवं दत्वा वरं तस्य विष्णुरन्तरधीयत ॥५०॥

स चाप्यसुरशार्दूलो[3] गतो द्वीपं कुशाह्वयम् । यत्र सा वर्तते तस्य नाम्ना चन्द्रवती[4] प्रिया ॥५१।

तमायान्तं तु सा श्रुत्वा लब्ध्वा लाभं महाधनम्[5] । महोत्सवं तु ते चक्रुर्ह्यन्तःपुरनिवासिनः ।५२।

अकालकौमुदी चैव पुरद्वाराणि शोभिरे । विचित्र-चित्र-वस्त्रैश्च स्वनजै-र्व्यजनैस्तथा[6] ॥५३॥

रचिताश्चक्रदोलाश्च धारायन्त्रगृहाणि च । पुष्करिण्यः कृता हैमा राजतास्ताम्रजाः पराः ॥५४॥

कर्पूरोदकपूर्णास्ताः कुङ्कुमेन सुरञ्जिताः । क्रीडन्ते प्रमदास्तत्र प्रहृष्टा यौवनोत्कटाः ॥५५॥

विवर्धि शोभया चास्य[7] तदीयं सुपुरोत्तमम्[8] । तत्पुरं चन्द्रशोभं च विराजन्ति नराधिप ॥५६॥

एवंविधेऽव्रजद्राजा[9] दानवेन्द्रः पुरन्दर । यथैव[10] द्विजसङ्घाश्च वेदोद्गीरित आननाः ॥५७॥

स्त्रीजनं सुमनोहृष्टं[11] दधिदूर्वाक्षतान्वितम् । शङ्खदर्पगहस्तञ्च[12] वेण्वाद्यमशुभान्तकम् ॥५८॥

शीतलः सुमनोवायु र्मेघाः पूर्वदिशोऽनुगाः[13] । पत्रिणः सुसुधारावाः[14] सतेजाश्च[15] सदा ग्रहाः ।५९।

फल पुष्प लता वृक्ष-गतरेणु विमाननाः[16] । तोयपूर्णापगाः सर्वाः कूपाः[17] स्वादुजलोदकाः ॥६०॥

दीर्घिकाः शतसङ्ख्यानाः स्वभावप्रकृतिस्थिताः । पथि पश्यन्ति तस्येष्टा जयशब्दं वदन्ति च ॥६१॥

लग्न-वन्द्र-रवोद्घुष्टं[18] पटु-भेरी-निनादितम् । शङ्ख-वेणु-मदङ्गैश्च पटहैश्च रवाकुलम् ॥६२॥

कंसकंसालवाद्यैश्च[19] मुरजैः काहलैस्तथा । अनेक-वाद्य-विन्यासैः स्वर्भू-पाताल-पूरकैः ॥६३॥

एवंविधपुरे[20] राजा सुतिथि[21]करणान्विते । पूजयन् पौरसङ्घांश्च द्विजाँश्च विविधैर्धनैः ॥६४॥

वद्धानुसम्मतो भूत्वा स विवेशात्ममन्दिरम् । तत्र बन्धुजनैः[22] सर्वैराशिभिरभिनन्दितः ॥६५॥

तेनापि तेषु सत्कारै[23]र्यथावच्च[24] क्रमागतैः । पूजिता गृहपालाश्च पुरपालास्तथैव च ॥६६॥

देवताराधने सक्तः[25] स तथैव पुरःस्थितः । कृत्वा नारायणीमर्चां मणि-मौक्तिक-भूषिताम् ॥६७॥

---

१. सत्यं क, ग । २. अबलस्तं ख । ३. दनुशार्दूलो क ग । ४. तिष्ठते ख । नाम्ना चण्डमती क ।
५. महाबलम् क, ग । ६. अण्डजैः कोपजैस्तथा क, ग । अन्तजैराष्ट्रजैस्तथा-ख पुस्तकस्य पाठान्तरे ।
७. दिवर्द्धिशोभयास्पर्द्धि क ग । ८. तत्पुरोत्तमम् क, ग । ९. व्रजेद्राजा क, ग । १०. यत्रो च, ख ।
११. सुजनं सुमनं दृष्टं क । १२. वेश्मान्त ख । १३. दिशानुगाः क, ग १४. स्वसुरारावाः क
स्वसुखानास १५. सुतेजाश्च-ग । १६. दिगानगः क । दिगाननाः ग १७. कृष्णाः ख । १८. नग्नवृन्दरवाघुष्ट क
१९. शब्दैश्च क ग २०. एवं विधे पुरे क । २१. स्वतिथौ क । २२. वृद्ध जनैः ग । २३. ते स्व क ।
२४. यथारूढ़ क ग । २५. राधनासक्तः क, ग ।

विचित्र-चित्र-विन्यासामनौपम्यां मनोरमाम् । [१]हास्यभावगतां शक्र स पूजयति दानवः ॥६८॥

दिनं विभज्य चाष्टांशं[२] क्षपाञ्च घटिकादिभिः । अतन्द्रितमनाः शक्र-धर्मा[३]दीनि न हापयेत् ॥६९॥

ब्राह्मे मुहूर्ते तूत्थाय अवश्यं विनिवर्त्तयेत्[४] । हतो वै दन्तकाष्ठन्तु शुभं कण्टकवृक्षजम्[५] ॥७०॥

[६]आगमोद्दिष्टविधिना भुक्त्वाचम्य यथाविधि[७] । घृते वा दर्पणे वापि मुखं पश्येद् ददौ च गाम् ॥७१॥

ततः सभां समास्थाय पश्येत् कार्याणि कार्यिणाम् । सममित्रारिसद्भाव अद्वै धीकृतधर्मधीः[८] ॥७२॥

यस्तु[९] आयव्ययौ ज्ञात्वा धर्मकार्यञ्च[१०] साधुभिः ।
स्नात्वा देवान् पितॄंस्तर्प्य हुत्वा भुक्त्वा प्रक्रीड्य[११] सः
सभामण्डपमास्थाय पश्येत् स्वादि बलानि च ॥७३॥

सन्ध्यां प्राप्य तथा लोकान् विसृज्य मन्त्रिभिः सह ।
मन्त्रयित्वा यथान्यायं मित्रोदासीनशास्त्रवान् ॥७४॥

बुद्ध्वा मण्डलयोन्यादिमष्टधा दुर्गसञ्चयम् । कोषवृद्धिः प्रजारक्षा कण्टकानाञ्च शोधनम् ॥७५॥
प्रकृतीनां विभागश्च तेषाञ्चैव विचेष्टितम् । मुक्तो अष्टादशैर्दोषैः कुर्याद्राज्यं महासुरः ।
तस्य कालात् समुत्पन्नो वज्रदण्डो महासुरः[१२] ॥७६॥

ततः सर्वां यथान्यायं गर्भाधानादिकीं क्रियां । निर्वर्त्य योग्यतां प्राप्तः सोऽपि तातेन दृष्टवान्[१३] ॥७७॥

वज्रदण्ड उवाच

विज्ञापयाम्यहं तात नापराधो ममोपरि । कर्त्तव्यो मम वाक्येषु ग्राह्यमस्मत्सुभाषितम् ॥७८॥
नृपैर्दण्ड बलोपेतै रन्यराज्यजिगीषुभिः । भवितव्यं दनुश्रेष्ठ न चैवं भवता यथा ॥७९॥
तस्य तद्वचनं श्रुत्वा सुतस्य कृतवेदिनः[१४] । प्रोवाच विहसन् घोरो वाक्येन सुमहास्वनः[१५] ॥८०॥

घोर उवाच

अच्युतस्य प्रसादेन मया राज्यं महामते । प्राप्तं घोरेण तपसा[१६] निर्जित्य देहजान् रिपून् ॥८१॥
अहमद्यापि तं देवं सर्व देव नमस्कृतम् । पूजयामि महाबाहो सर्व शत्रु निवर्हणम् ॥८२॥
स मे ददाति सौख्यानि राज्यं पुत्रांस्त्वया समान् । पत्नीश्च चन्द्रलेखां वै स पालयति मे विभुः ।८३

---

१. ईश भाग क देशभाग गतां ग । २. ह्यष्टाङ्ग क, ग । ३. अतन्द्रित क, ग । ४. विनिवर्तसे ख ।
५. शुभसमुद्भवम् क, ग । ६. वानस्पत्येन ख-पाठान्तरे । ७. यथाक्रमम् क. ग ।
८. कर्मधीः क । ९. तत्र ख । १० कार्याणि क । ११. प्रकीर्य क । १२. महासुतः ख । १३. पिता तेन पृष्टवान् ग । १४. कृतिवेदिनम् क । १५. महासुरः क, महामुनि ग । १६. प्राप्तं तपेन घोरेण क ।

न हि[1] पृच्छाम्यहञ्चान्यं कुशद्विपस्य चोत्तमम् । एतद् राज्यञ्च स्वर्गञ्च यत्र पूज्यामि केशवम् ॥८४॥

एवं सम्बोधयन्[2] पुत्रं राज्यकामं सुराधिप । अथामात्यो गतस्तस्य सुषेणो नाम दानवः ॥८५॥

सुतस्य चित्तसद्भावं कथयाम्यसुराधिपः[3] । स तं प्राह यथामन्त्री[4] सर्वविद्यार्थपारगः ॥८६॥

सुषेण उवाच

स्वचक्रेणैव निर्जित्य सन्तुष्टः पृथिवीपतिः । समृद्धं धनराष्ट्रं तु[5] क्षिप्रं नाशमुपैति हि ॥८७॥

तस्मान्नृपेण योग्येन सम्पत्तेर्नयवेदिना । परराष्ट्रसमाकाङ्क्षा[6] कर्त्तव्या श्रियमिच्छता ॥८८॥

वल्कलादानमिच्छन्ति मुनयो वनमाश्रिताः[7] । न हि सामग्र्यमुक्तास्तु[8] नृपा[9] ये वसुधाधिपाः ।८९।

पालयन्ति विना दण्डैर्महीं शम्भुबलादपि[10] ॥९०॥

किन्तु सत्यव्रतो देवः केशवाराधने रतः । तस्य प्रसादसम्पन्नो लब्धादेशो रिपून्[11] जहि ॥९१॥

मन्त्रिवाक्यानलोत्थेन उद्योतितवपुं प्रति[12] । मति र्दानव नाथस्य व्रताराधनमाययौ ॥९२॥

पुष्यके[13] द्वादशी पुण्या सर्व पाप निबर्हणा[14] । कृत्वा वा तेन सा शक्र घृतपात्रप्रदायिना ॥९३॥

तदा प्रत्यक्षतस्तस्य देवदेवो जनार्दनः । ददर्श स्वां तनुं शुभ्रां पीतवासाश्चतुर्भुजः ॥९४॥

तं दृष्ट्वा स महाघोरः[15] स्तवेन स्तवते हरिम् ॥९५॥

घोर उवाच

नमस्ते पीतवासाय शङ्खचक्रधराय च । गदाशार्ङ्गासिधाराय सर्वदेवनुताय च ॥९६॥

वामनाय अघोराय[16] त्रिविक्रमधराय च । मधुसूदन-दैत्यादि स्कन्दाय[17] श्रीधराय च ॥९७॥

तव तेजः प्रसादेन सर्वान् शत्रून् यथा विभो । विजयामि यथा स्वर्गे तथा कुरु सुरेश्वर ॥९८॥

तस्य कारुण्यतो ज्ञात्वा तमेवं[18] प्रतिपादितम् । दुष्टानां दण्डनं धर्मः पूजितस्य च पूजनम् ॥९९॥

न्यायेन कोषसंवृद्धिर्मित्ररक्षा अरेर्वधः । एवं तस्य वरं दत्त्वा भूयोऽपि गतवान् हरिः ॥१००॥

---

१. इच्छाम्यहं क ग ।
२. सम्बोधयेत् ख ।
३. कथयेत् सोऽसुराधिपः क ग ।
४. महामन्त्री क ।
५. समृद्धधनराष्ट्रस्तु ख ग ।
६. पराकाँक्षा क ।
७. ये वनाश्रिताः क ग ।
८. युक्तास्तु क ।
९. नृप ख ।
१०. महीशास्तु मनाक् क ग ।
११. लब्धदेशोरिपुं क ग ।
१२. उद्योतेने समंततः क ग ।
१३. पुष्प क ग ।
१४. निवर्हणी क ग ।
१५. सहसा घोरः क, ग ।
१६. अमोघाय क, ग ।
१७. स्कन्द त्वं ग ।
१८. तत्सर्वं क ।

सोऽपि लब्धवरोद्दामो[1] महादर्पो बलान्वितः । सर्वमन्त्रिसमाजन्तु कृत्वाप त्तीमपृच्छत ॥१०१॥
पूर्वेणैव बहुक्षेपं[2] दत्त्वा शत्रुं वशं नयेत् । अतिबलं नाम राजानं साधयामास दारुणः ॥१०२॥
सौबलन्तूग्रनामानमाग्नेयीं दक्षिणां दिशम् । नैर्ऋतीं पश्चिमां[3] कालवारुण्याख्यम् महाबलम् ।
साधयामास बालस्तु वायव्यां दिशि संस्थिताम् । अनुह्लादमहाह्लादौ चोत्तरामीशदिग्गताम् ॥१०३॥
निर्जित्य सर्वनृपतींस्तथा द्वीपेषु चोद्यमम्[4] ।

इति श्रीदेवीपुराणे ब्रह्मेन्द्रोपदेशो नाम द्वितीयोध्यायः[5] ।

---

१. वरादानो क ग । २. तु विक्षेपं क, ग । ३. कालो क, ग । ४. चोद्यमः क, चोत्तमः इति खपुस्तकस्य पाठान्तरे । ५. ब्रह्मेन्द्रोपदेशः प्रथमो क, ग ।



# तृतीयोऽध्यायः ।

देवराज उवाच ।

भगवन् सर्वदेवेश सर्वशास्त्रार्थ पारग । स्तवंस्तव[1] कृतं देव वरार्थे[2] कथां प्रति ॥१॥
त्वञ्च सुरवराध्यक्षः कथां पूर्वा प्रकथ्यसे । अहं स्वर्गार्थिनो ब्रह्मन् प्राप्तं यच्च जनार्दनात् ॥२।
त्वमेव सर्वदेवानां वन्द्यः पूज्यः सुरोत्तमः । तथाहं शरणं भक्त्या तव स्रष्टुरुपागतः[2] ॥३॥

ब्रह्मोवाच

सत्येदं[3] देवराजेन्द्र भक्त्याहं पूजितस्त्वया[4] । तदर्थं कथयाम्येष[5] शृणुष्व गदतो मम ॥४॥
कुशद्वीपं पुरा तेन स्वबलेनैव[6] अर्जितम् । जम्बुं शाकं तथा क्रौञ्चं शाल्मलीमथ पुष्करम्[7] ।
सप्त द्वीपास्ततस्तेन देवराज वशीकृताः ॥५॥
क्षारोदञ्चैव[8] क्षीरोदं दधि सर्पि रिक्षु रसं तथा । मदिरोदञ्च स्वादूदं सप्तोदधिवसुन्धराम्।[9] ॥६।
निर्जित्य[10] वरदानेन स्वकीयाज्ञा तु लाञ्छिता॥७॥
कृत्वा वशे भुवं शक्र ततः पातालविग्रहम् । प्रारब्धं ध्वजदण्डेन[11] कालतन्त्राधिपेन च ॥८॥
आभाषन्ते गताः शक्र पातालं प्रथमं महत् । यत्र तिष्ठति नागेन्द्रो ह्यनन्तः कुलिकः स्वयम् ॥९॥
एलापत्रो[12] महानागो दृष्टिविषो महाबलः । विकटः शूकरास्यश्च[13] लोहिताक्षोऽथ राक्षसः॥१०॥
नदनो नन्दनो भृङ्ग एते चैव महासुराः । तान् दृष्टवा मर्त्यजान् योधान् नागराक्षसदानवाः॥११॥
संनह्य सुबलेनैव[14] महासंग्रामं चक्रिरे । तै र्वज्रवण्ड सैन्यन्तु तथा कालस्य[15] वाहिनी ।
नागै-र्दानव-सङ्घैश्च पलाशैर्विनिपातिता ॥१२॥

---

१. स्तवँस्तव कृते ख । २. प्रष्टुमुखागतः क । ३. सत्ये तं क । ४. पृच्छतस्तव क, पृच्छतस्त्वया ग ।
५. यामास क, ग । ६. सबले० ख । ७. शाल्मलीमेदपौस्करम् क । ८. ञ्चापि क ।
९. वसुन्धरा क । १०. निर्जिता क । ११. वज्रदण्डेन ग । १२. एलापत्र क, ग १३. शूकराक्षि० क, ग ।
१४. सबलनैव ख, स्वबलेनैव ग । १५. कालो महाबलः ग । पंक्तिद्वयं नास्ति ग पुस्तके ।

एवं तां वाहिनीं भग्नां दृष्टवा कालो महाबलः ।चकार गारुडीं मायां वज्रदण्डोऽथ भैरवीम् ।।१३।

ते नागाः सहसा प्रेक्ष्य दानवा राक्षसास्तथा । भीताः कृतप्रणामाश्च शरणं वशतां[1] गता ।।१४।।

जित्वा पातालराजेन्द्रानाभाषे भवनानि च । रसातलं[2] गतः शक्र कालो वज्राह्वयोऽसुरः।।१५।।

हिलिहिलो[3] भद्रनामा[4] च घोररूपोऽथ दानवः । शङ्खपालो धृतराष्ट्रो[5] विद्युन्माली महोरगः।।१६।

विद्युज्जिह्वो हिरण्याख्यः[6] अन्धकारश्च राक्षसाः।
नागराक्षसदैतेयास्तान् दृष्टवा क्षुभितो महान् ।।१७।।
अकृत्वा सङ्गरं तैस्तु भीतास्तेषां नतिं ययुः ।
ते वशे[7] स्थापयित्वा तु पातालानागताः पुनः ।।१८।।[8]

ताराक्षः शिशुपालश्च अभयो यत्र दानवाः । कम्बलस्तक्षकः पद्मो नागा यत्र महाबलाः ।
यमदण्डोग्रदण्डश्च विशालाक्षः पलाशिनः ।।१९।।

एवंविधा महाघोरा दैत्य-राक्षस-पन्नगाः । तान् दृष्ट्वा सहसा योधावागतौ भूमिजौ तदा ।।२०।।
असिपाशाङ्कुशैर्दण्डै[9] र्महासंग्राममञ्चक्रिरे । निर्जित्य नागरक्षेन्द्र दैतेयानान्तु वाहिनीम् ।।२१।।
प्रणिपातं गताः सर्वे कालवज्रस्य हेतवे । शर्करातालसंज्ञन्तु[10] गतौ तु घोरजौ बलौ ।।२२।।
महिषो यमकालाख्यो दैत्यराजो महाबलः[11] । उरगाः पद्म कर्कोट शङ्कुकर्णा स्तथावशः[12] ।।२३।।
महोदरा महाकाया महाभुजाः क्षपाचराः । शर्करे ते स्थिता जित्वा-गतस्ताख्यं ततो गताः[13] ।२४।
असुरा शुम्भताराक्ष दनुजा[14] बलदर्पिताः । भोगाः कुलिकः सौवर्णस्तथा चापि[15] धनञ्जयः ।२५
उग्ररुपोऽक्षिभद्रश्च[16] विरुपाक्षो निशाचरः[17] ।जितास्ते दर्शनादेव गतास्ते च रसातलम्[18] ।२६।।
कालनेमिर्हिरण्याक्षो[19] निशुम्भो यत्र तिष्ठति । पौण्डरीकञ्च दुष्प्रेक्ष्यं श्वेतभद्रं तथोरगाः[20] ।२७।
मेघनादी महानादी पिङ्गलाक्षस्तु खेचराः । एवं ते संस्थिता दृष्टा महाबलपराक्रमाः ।।२८।।

---

१. च वशं क । २. वरताले क वरतालं ग । ३. हिनि० क ।
४. रुद्रनामा क, ग । ५. राष्ट्र० क । ६. हिरण्याक्षाः क, ग । ७. तेनाप० ख । ८. श्रीतालं तु ते गताः ग ।
९. कुन्तै० क । दन्तै ग । १०. शर्करा ताल संग तु क ११. महिषो यमकालाख्या दैत्यराजा महाबलाः क, ग । १२. वर्णास्तथावशम् क । १३. गमस्त्याख्यं तथागताः क ग । १४. ताराहव० क ।
१५. कुकाद्दः सौवरणस्तथा चायं क ग । १६. अस्थिभद्रश्च क । १७. महासुराः क । १८. रोचनातलम् क ग । १९. हि रण्याख्यो क ग । २०. भद्रस्तथोः क ।

सहसा प्रेक्षितौ[1] योधौ मत्तजौ[2] बलदर्पितौ । मोहं गताः समस्तास्ते दैत्यरक्षोमहोरगाः ॥२९॥
तदाज्ञावर्तिनो भूत्वा शुश्रूषां कुर्वते सदा । तं जित्वा चैव पातालं गतावन्यं रसातलम् ॥३०॥
जरासिन्धुमहासिन्धुविरोचन[3] महासुराः । ऐरावाश्वतरः[4] पिङ्ग उरगा राक्षसास्तथा ॥३१॥
माल्यमारीच[5] कुम्भाख्या एवं यत्र महाबलाः । यत्र[6] प्राप्य महाबाहू वज्रकालाख्यशासनौ ।
घोरजौ बलसम्पन्नौ सर्वशास्त्रविशारदौ ॥३२॥
औशनोद्दिष्टविधिना जित्वा पातालजान् नृपान् । स्ववशे स्थापयित्वा तु आगतौ भूतलं पुनः[6] ।
जम्बूद्वीपे यथा स्थित्वा मध्यदेशे उडुम्बरे[7] । पुरे यत्र महाबाहो भार्गवस्तिष्ठते सदा ।

इति श्रीदेवीपुराणे ब्रह्मेन्द्रोपदेशे पातालादिजयो नाम तृतीयोऽध्यायः[8] ॥३॥

---

१. प्रेक्ष्य ते क  २. मर्त्यजौ क ।  ३. जरसेन्धुर्महासेन्धुर्वैरोचन० क ।  जरसिन्धुमहासेन्धु घौरोवन क-ग ।  ४. ऐरावश्वतरा । क ।  ५. मारीचि क ग  ६. तत्र ख ।  ७. वै पुनः क्षितिं स पुस्तकस्य पाठान्तरे ।  ८. तदुत्तरे क । इत्याद्ये देवीपुराणे ब्रह्मेन्द्रोपाख्यानम् क ग ।



# चतुर्थोऽध्यायः ।

ब्रह्मोवाच ।

तथा तौ बलसम्पन्नौ वज्रकालौ महाबलौ । पृष्टवान् ग्रहराजेन्द्रं भार्गवं भृगुनन्दनम् ॥१॥
भगवन्नस्मत्तात्तेन प्रेषिता विनयं[1] प्रति । दिशो गतास्तथा देशाः सप्तद्वीपा वसुन्धरा॥२॥
निर्जिताः सप्तपाताला वशे कृत्वा च तत्प्रजाः । नृपानुशासने[2] स्थाप्य तव पार्श्वमिहागताः ॥३॥
केनोपायेन इन्द्रादीन् जित्वा स्वर्गं जयामहे ॥
एतदेव ममाचक्ष्व सर्वविद्याकृतश्रम ॥४॥

शुक्र उवाच

जम्बूद्वीपं समस्तन्तु सप्तद्वीपा वसुन्धरा । पातालाः सुखसाध्यास्तु दिवं दुःखेन सिध्यति ॥५॥
यस्मिंस्तिष्ठति देवेशः सर्वदेवनुतो हरिः[3] । विष्णुःसर्वात्मको देवो ब्रह्मा वेदविशारदः ॥६॥
बृहस्पतिर्महाप्राज्ञो अर्थशास्त्रकृतश्रमः । इन्द्रो महाबलश्चैव धनदो वह्निर्निऋती ॥७॥
मरुद्वायुर्यमो यत्र यत्र[4] चन्द्रदिवाकरौ । विश्वेदेवा वसुरुद्रा ग्रह नक्षत्र तारकाः ॥८॥
न जेतुं शक्यते काल दिवं धर्मेण रक्षितम् । राजधर्मोपदेशेन भूपातालानि भुञ्जथ[5] ॥९॥
अन्यथा धर्मतः प्राप्तं राज्यं नाशमुपैति हि । मार्जारमूषिकं यद्वद्युद्धं ध्वाङ्क्षोलूकं यथा[6]॥१०॥
महिषाश्वं यथा युद्धं यथा दन्तिमृगाधिपम् । एवं युष्मत्सुरैः सार्धं युद्धमेकाङ्गमुच्यते[7] ।
युद्धभोगं[8] तथा कालं देशञ्चैव न जानता । ॥११॥
[9]अस्मद्रिपुबलाशक्ति ये युध्यन्ति नराधिपाः । [10]आत्मनाशं वृजन्त्येते नृपा नयपराङ्मुखाः ॥१२॥

---

१. विजयं क ग । २. नृपाः स्वशासने क ग । ३. देवमूलो हरिः खपुस्तकस्य पाठान्तरे ।
४. मरुद्वाद्ययौ क । ५. भुञ्जत क ग । ६. महन् क ग । ७. युद्धमेकं समुच्यते ख पुस्तकस्य पाठान्तरे । ८. युद्धभागं क ग । समृद्धिगं तथा कालं देशञ्चैवमजानताम्-इति ख पुस्तकस्य पाठान्तरे
९. आत्म० क ग । १० आशु क ग ।

नयो हि बलवान् युद्धे दैवसम्पत्समन्वितः । तथा पुरुषकारन्तु बुद्ध्वा युध्यन्ति ये नृपाः ॥१३॥
ते जयं शत्रुनाशन्तु लभन्ते अविचारगात् । पृथ्वी पुरवरैर्युक्ता सशैलवनकानना ॥१४॥
यावज्जीवं स्थिरा तेषां येषां नीति क्रमागता[1] । धर्मेण प्राप्य राज्यं ते धर्मादिवजयो[2] भवेत् ॥१५॥

देवाश्च-रुद्र-ब्रह्मेन्द्र-केशवा-रवि-चन्द्रमाः ।
तेषां यो योधमिच्छेत[3] स कथं जायते सुखी ॥१६॥

न युद्धेन विना देवाः सिध्यन्ति हि क्वचित् द्विषाः । युद्धे घातं भवेद् वत्स बन्धु वर्गपरिक्षयः॥१७
क्षयं याति धनं युद्धे अश्वदन्तिमहाबलाः । समेऽपि पुनर्विषमे[4] यत्र शङ्करकेशवौ[5] ॥१८॥

काल उवाच

दृष्टीविषा महाघोरा अनन्ताद्या महोरघाः । निर्जिता असुरा रक्षाः पातालतलवासिनः ॥१९॥
न हि मे[6] शक्यते जेतुं शङ्करेण महात्मना । किम्पुनर्देवराजेन ब्राह्मणेन[7] वराकिणा ॥२०॥
वज्रदण्डसहायस्य मम खड्गकरस्य च । सङ्गरे को भवेच्छक्तः कालपाशेन कर्षितः ॥२१॥
ब्रह्मा वा यदि वा रुद्रः सर्वदेवनमस्कृतः । अस्माकं निर्जिता पृथ्वी तथा पातालगोचरा[8] ॥२२॥
स्वामिनो दर्शनादेव दिवं प्राप्तं ततो[9] यदा । जयस्तथा भवेत् कीर्तिः पराजयः परागतिः ॥२३॥
प्रस्थिता ग्रहशार्दूल अनुज्ञां दातुमर्हसि । एवं शुक्रं समापृच्छय नभो मासे तु चोत्तरे[10] ॥२४॥
दिशञ्चोत्तरऋक्षे च[11] द्वितीयायां ततो गतौ । नन्दनं तौ वनं गत्वा सर्वसैन्येन तिष्ठतः ॥२५॥
यमान्तकः पूर्वदिशि मेरौ[12] घोरस्तु चोत्तरे । पश्चिमे वज्रदण्डस्तु कालो दक्षिणतः स्वयम् ॥२६॥
एवं ते वेष्टयित्वा तु कोटिकोटिगुणेन तु । आरुरुहुः पुरीं याम्यां[13] मेरोरुर्ध्वमधिष्ठिताम् ॥२७॥
अनेक परिखोपेतां वैवस्वतीं महोज्ज्वलाम् । तत्र ते कृष्णघोरास्या दण्डपाणिमहाबलाः ।
यमश्चारुह्य[14] महिषं कालपाशकरोद्यतः ॥२८॥

---

१. न क्रमा० क । २. धर्मो देवेज्यया क ।
३. एतेषां यो धनं इच्छेत् क । एतेषां यो वधमिच्छेत्-ग ।
४. किं पुन० क ग । ५. केशवशङ्करा क । ६. मे ख । ७. ब्रह्मणा च क ग ।
८. पातालगोरगाः क । ९. प्रारभतो क । १०. मघे तु चोत्तराम् ख ।
११. ऋक्षेण क । १२. मेरोर्थी० क । १३. आरूरोह पुरीं यामां ख ।
१४. यमश्च रुरुहे क ग ।

ततः सा दानवी सेना युद्धमाना महाहवे । दारिता यमराजेन स्वबलेन महात्मना ॥२९॥
तां भग्नां सहसा दृष्ट्वा क्रोधेन तु सुदीपितः । उत्त्थन् हालाहलः शक्र महाबलपराक्रमः ॥३०॥
पर्शुना तु सतेजेन सूर्यायुतप्रभेण च । जिघांसन् यमजां सेनां पद्मिनीमिव दन्तिनः ।
यमान्तकस्तथा चक्रे महामायात्मकं बली । महिषं यमभङ्गाय महिषस्य महाबलम् ॥३२॥

काले[1] चैव कृतान्ते[2] च दण्डिना विनिपातिते[3] ।
एकधा दशधा चापि[4] शतधा च[5] सहस्रधा ॥३३॥

अयुतां लक्षकोटीनि मायावी वै[6] विनिर्ममे । तैर्दृष्ट्वा धर्मराजस्तु चात्मानं शतधावृतम् ॥३४॥

वाहनास्त्राणि सन्त्यज्य गतवान् पावकीं पुरीम् ।
दुर्निरीक्ष्यां रिपु[7] र्घोरस्तस्य दृष्ट्वा तु वाहिनीम् ।३५।
अजारुढां समस्तास्ते वह्निना सह सङ्गरम् ।
तं वह्नि ज्वालालक्षेण[8] कालानलमिवोत्थितम् ।३६।

ददाह सहसा शक्र वज्रदण्डस्य वाहिनीम् । पुरी तेजस्वती[9] तस्य ताम्र प्राकार तोरणा ॥३७॥

स्त्रुवहस्तास्तथा[10] विप्रा उत्थिता बहुलक्षधा ।
ध्यानेन तेऽदहन् सर्वां वाहिनीं[11] विभुघोरजाम् ॥३८॥

एवं दृष्ट्वा तथा कालो दण्डिना सर्वगेन[12] च । माया मेघ समुत्थेन वारिणा तूपशामयेत् ॥३९॥
चेतसामृतदावान्यैः सर्वान् क्रूरान् प्ररोहयेत्[13] । एवं तच्छमितं तेजो वह्निक्रोधसमुद्भवम् ॥४०॥
ववर्ष पङ्कशैवाल कदलीन्दीवराणि च । एवं तत् पावको दृष्टवा स्वसैन्यं दण्डनिर्जितम् ॥४१॥

त्यक्त्वा तेजोऽभिमानन्तु गत इन्द्रामरावतीम् ।
इन्द्रेण तौ समायातौ[14] दृष्ट्वा यमहुताशनौ ॥४२॥

---

१. कालं क ग ।  २. कृतान्तं क ग ।  ३. विनिपातितं क ।  ४. वापि क ।
५. शतधापि क ।  ६. मि. क ।  ७. दुर्निरीक्षं विभु-क ।
८. वह्निर्ज्वालाक्षेपेन क ।  ९ .तेजोवती क ।
१०. श्रुवहस्ता तथा क ।  ११. सर्वान् वाहिनी क ।  १२. सर्वगेण क ।
१३. चेनमामृतस्वादाक्षः सर्वान् क्रूरान् प्ररोहयत् क ।
१४. समायान्ती क ग ।

महाक्षोभं समास्थाय गजराजं रुरोह सः । उदयाचलसङ्काशं सिन्दूरारुणविग्रहम् ॥४३॥
घण्टाकिङ्किणीशब्दाढ्यं चामरैरुपशोभितम् । चतुर्दन्तं महानागं सुरशत्रुभयावहम् ॥४४॥
आरुरोह सुराध्यक्षो वज्रपाणिर्महाबलः । मातलिञ्च पुरस्कृत्य[1] विश्वेदेवास्तथापरे ॥४५॥

वैष्णवा[2] वारुणा सौम्या ऐन्द्राश्चान्द्रास्तथैव च ।
कुबेरो धनदश्चन्द्रो वायुर्वरुण एव च ॥४६॥

श्रुत्वा देवेन्द्रसङ्ग्रामं सर्वे तत्र युयुत्सवः । आगताः क्षणमात्रेण स्वायुधोद्यतपाणयः ॥४७॥
एवं ते त्रिदशाः शक्र सशक्राः सङ्गरोत्सुकाः । श्रुत्वा देवः स्वयं तत्र ह्यागतो गरुडध्वजः ॥४८॥
इन्द्रस्तु परमं देवं शङ्ख चक्र गदा धरम् । दृष्टवा पपात चरणे[3] भक्त्या स्तोत्रेण पूजयेत् ॥४९॥

इन्द्र उवाच

नमस्ते देवदेवेश[4] सर्वदेवमय प्रभो ।
शङ्ख चक्र गदा हस्त वनमाला विभूषण ॥५०॥

श्रीवत्साङ्क महाकाय कौस्तुभोरस्कमण्डित । देवारिनाश देवेश वेदगर्भ नमोस्तु ते ॥५१॥
देवमूर्तिर[5] मूर्तिश्च वेद यज्ञ फलप्रद । त्रिमूर्तिस्त्रिगतिर्देव भक्तानां भयनाशन ॥५२॥
सम मित्रार्युदासीन रिपुणां[6] कुलनाशन । त्राहि मां देवदेवेश पीतवासो[7] जगत्पते ॥५३॥
दानवैर्बाधिता देवास्त्वामेव शरणं गताः । निर्जितो यमयज्ञेशो बह्निर्दीप्तिसमन्वितः ॥५४॥

एवं त्वं भगवन् प्राप्तः किं करोमि तदादिश ।
तथा श्रुत्वा वचो विष्णुः कृपया शक्रभाषितम् ॥५५॥

प्रोवाच विहसन् देवो मा भैषीर्मम सन्निधौ । यद्यपि देवदेवेश उमा देहार्ध हारिणः[8] ॥५६॥
आगतस्तस्य देवेन्द्र तथापि अरिर्हन्यताम्[9] । किन्तु कारणसद्भावं कथयामि शृणुष्व तत् ॥५७॥

---

१. पुरस्कृत्वा क । २. ते भटा क । भल्लाटाः ख-पुस्तकस्य पाठान्तरे ।
३. चरणौ क ।
४. सर्वदेवेश क । ५. वेदमूर्ति॰-क ।
६. सममित्रारिमध्यस्थ देवारि॰ ख ग । ७. पीतवासा क । ८. धारिणा क ।
४. परिहन्यताम् ख

 

विष्णुरुवाच

आसीद् दुन्दुभिर्नामाऽसावसुराणां प्रभूत्तमः । तेन जिताः सुरा सर्वे ब्रह्मवरप्रभावतः ॥५८॥
अजेयो[1] ब्रह्मसूर्याणां यमस्यास्माकमेव च । तदा[2] निर्जित्य देवांस्तु स्वर्गाच्च्यावयते किल ॥५९॥
तावत् तस्य महाबाहो ईशः शैलङ्गमोऽभवत् । तदा पश्यति देवेशीं[3] शङ्करस्य तनुस्थिताम् ॥६०॥
तां दृष्ट्वा क्षोभमापन्नः कामविह्वलचेतनः । [4]देवीं समुद्यतो वक्तुं[5] देवेन च स ईक्षितः ॥६१॥
ततः स सहसा दग्धो नेत्रजेनानलेन तु । देवदेवस्य कोपेन दानवो भस्मतां गतः ॥६२॥
सायुधः सरथः क्रूरः सपदातिः सवाहनः । सहसा भस्मीभूतं तं[6] दृष्ट्वा देवस्त्रिलोचनः ॥६३॥
रक्तपीतासितश्यामा भष्माद्धूरितमेव च । [7]गृहीत्वा सितभस्मेन देवीञ्चाप्यवधूनयत् ॥६४॥
तस्य हस्तकरास्फालाद् बन्धूननावसानतः । उद्धृता[8] महति वर्तिः सर्ववर्णकभूषिता[9] ॥६५॥
तां तपन्तीं समालोक्य उमां देवनमस्कृताम्[10] तस्मिन् समुद्भवाच्छाया सर्वलक्षणलक्षिता ॥६६॥
द्वितीयं देवभागन्तु याचमाना महाबला । तदा उमा ददौ शापं स्मृत्वा घोरं महासुरम् ॥६७॥

गच्छ पाप दुराचार भूतलं त्वं[11] महाबल[12] ।
तथारूपो भवेद्घोरो नील मेघ सम प्रभः ॥६८॥

महारूपो भयं दत्त्वा[13] ससुरासुररक्षसाम् । देवेन तं[14] तदा दृष्ट्वा किमेतद्भवतीकृतम् ॥६९॥
स एव निर्जितः शत्रुरस्माकं वधमुद्यतः । न युक्तं शत्रुपक्षस्य वृद्धि दातुं कदाचन । ॥७०॥
यश्च कारणद्रव्याणां सविशेषं[15] कृतं मुदा । मोचते कृपया मूढः स एव निधनं व्रजेत् ॥७१॥
निपात्य साखिलं[16] सर्वं मूलं यस्य न खन्यते । स एव स्याद् बली भूयो बदरी इव[17] शोभते।७२।

---

१. अजयो क ग ।
२. तथा क ।
३. देवस्य क ग ।
४. चेतसः क।
५. देवी समुद्यतो धर्त्तुं क ग ।
६. तं सहसा क ।
७. भस्माल्लवितमेव च क ।
८. उद्धृता क ।
९. सर्वतन्तुकभूषिता क ।
१०. उमा देवनमस्कृता क ।
११. स्वं क ।
१२. पंक्तित्रयं ग पुस्तके नास्ति
१३. दद्यात् क ।
१४. तु क ।
१५. सावशेषं क ।
१६. शाखिनं क ग ।
१७. साद्बली भूयः बदरीरिव क ।

तथा त्वमपि दुर्बुद्धे मयायं विनिपातितः । देवानां विघ्नकर्ता च ऋषि-ब्राह्मण त्रासकः ॥७३॥

न युक्तं द्विजदेवानां शत्रुवर्गस्य वर्धनम् । मन्दबुद्धे सदा बाले स्त्रीस्वभावेन वर्त्तसे ॥७४॥

इत्युक्ता शम्भुना देवी क्रुद्धा तमवलोक्य[1] सा । मद्भक्तिपरमो भूत्वा सर्वदेवान् जयिष्यति ॥७५॥

विष्णुभावः परो[2] ह्येष अवध्योऽयं भविष्यति । कुशद्वीपपुरवासी[3] चन्द्रशोभां भविष्यति ॥७६॥

सप्तद्वीपाः सपातालाः सप्त लोकाः सवासवाः । एतदाज्ञाकरो भूत्वा अजेयोऽयं भविष्यति ॥७७॥

निशम्य वचनं देव्या उन्मार्गगतिभाषितम् । शशाप रोषमाविश्य त्वञ्च मर्त्यं गमिष्यसि ।

तत्र चैष[4] दुराचारः पतित्वं याचयिष्यति ॥७८॥

तथा क्रोधानलादीप्ता[5] सा शपेतासुराधिपम् । नील मेघ निभाकारं यम महिष मिवापरम् ।

क्रीडमाना हनिष्यामि पञ्चानन व्यवस्थिता ॥७९॥

उवाच कुपिता[6] देवी देवोऽपि च तथैव ताम् । एवं पूर्वं सुराध्यक्ष शम्भुना वज्रनिर्मितः[7] ॥८०॥

दुन्दुभेर्देहजो भूत्वा मम भक्तिपरायणः । चन्द्रशोभापुरावासी मदीयार्चासदोद्यतः[8] ॥८१॥

तस्येदं शासनं प्राप्तं ब्राह्मणैरपि[9] दुःसहम् । किम्पुनः सर्वयत्नेन सबलो यदि दानवः ।

आगतो घोरनामाऽसौ रुद्रादीनपि संहरेत् ॥८२॥

तच्छ्रुत्वा तु[10] हरेर्वाक्यं किं करोमि प्रभो वद । त्वया दत्तं मम स्वर्गं यज्ञा सर्वाश्च रक्षिता[11] ।८३।

इन्द्राणाँ त्वं प्रभुः स्वामी देवानां त्वञ्च पालकः । इत्युक्ते[12] वदते विष्णुः शृणु शक्र समाहितः ।

तत्रागतो महाबुद्धि र्वाचस्पति र्बृहस्पतिः ॥८४॥

## बृहस्पतिरुवाच

यस्य शासनमात्रेण सर्वे देवाः सभास्कराः । शमिता वसुयुक्ताश्च[13] वारिणा इव पावकः ॥८५॥

तस्य कः शक्यते युद्धे सबलस्य निपातितम्[14] । ब्रह्मा वा यदि वा रुद्रः साम नय विवर्जितः ।८६।

---

१. तामवलोक्य क । २. विष्णुभावपरो क । ३. कुशद्वीपपुरेऽर्च्चासीच्चंद्र० शोभां रमिष्यति क

४. तव ह्येष क । ५. क्रोधानलोद्दीप्ता क । ६. एवं च कोपिता क ग ।

७. रजनिर्मित-ग । ८. सदेज्यकः क ग । ९. ब्रह्मणोऽपि क ।

१०. सथाश्रुत्वा क ग । ११. यज्ञान् कुर्वंश्चरक्षितः क ग १२. इत्युक्तो क ग ।

१३. बलयुक्तापि क ग । १४. निपातनम् क ।

अजेयः[1] सर्वदेवानामेतद् दत्तं त्वया प्रभो । उमया तच्च[2] पूर्वं च सर्व देवारि कण्टकः ॥८७॥
सर्वास्त्र-तत्त्व-वेत्ता च सर्व-धर्म-परायणः । तथा भक्तिपरा[3] देव तथा भार्या पतिव्रता ॥८८॥
लोकपालः प्रजापालो धर्मवर्त्मन्यवस्थितः । तथा प्रभूतभूपालाः कोटि कोटि गुणाहताः[4] ॥८९॥
दन्तिनां यस्य मत्तानामश्वानाञ्च चतुर्गुणाः । ऐरावतसमाः[5] सर्वे सचला इव भूधराः ॥९०॥
नारायणास्त्र ब्रह्मास्त्र शिवाश्चान्येऽथ[6] वारुणाः । तस्य एवंविधः शत्रोर्विनाशः केन क्रियताम् ।
देशकालक्रमञ्चापि एकाङ्गं प्रतिभाषते ॥९१॥
[7]मुक्तस्त्रासकृतैर्दोषैः क्रोधजैश्च तथैव च । एकादीन् सप्त यो वेत्ति स गुणी गुणिनां वरः ॥९२॥
अश्व महिष मार्जार-आखु काकोलुकं यथा[8] । न युद्धं श्रेयसे देव उरगा नकुलैः सह ॥९३॥

इति श्रीदेवीपुराणे (ब्रह्मोपदेशे)[9] बृहस्पतिवाक्यानि
नाम चतुर्थोऽध्यायः ॥४॥

---

१. अजयः क ग ।
२. सच्च क ।
३. तव भक्तिपरो क ।
४. गुणान्विताः क ग ।
५. ऐरावतगुणाः क ग ।
६. सनारायण ब्रह्मास्त्राः शैवाश्चान्येऽथ क ।
७. मुक्ता क ग ।
८. आखुकाकोलकमिव क ।
९. इत्याद्ये देवीपुराणे क ।



# पञ्चमोऽध्यायः ।

भगवानुवाच ।

सत्यमेव महाप्राज्ञ बृहस्पति वचस्पते । त्वमेव वेदितु[1] योग्यः[2] सर्व न्याय विवेचकः ॥१॥
शम्भुगीता नया यस्य औशनाश्च तथा निजाः । मदीया ब्रह्मगीताश्च वेत्ति यः स वचस्पति[3] ॥२॥
त्वया इन्द्रस्य नाथेन सचिवेन महात्मना । को न बाधयितुं शक्यः शूलपाणिरपीहया ॥३॥
सर्वगुणप्रधाना ये दुर्विज्ञेया महात्मभिः । योगिभिः षड्गुणा एव मन्त्रिभिः सन्धिवादिभिः[4] ॥४॥
विभिन्नाः सन्धिसन्धाने समदोषाश्च बाधयः[5] । सन्धत्ते समतेजस्तु[6] सचिरं भिषजौ वरौ ॥५॥
[7]त्वं त्रिकालनयं वेत्ता सर्वविद्याविशारदः । वदास्य यद्भवेद्युक्तं सुरराजस्य सत्तम ॥६॥

बृहस्पतिरुवाच

देवदेव सुराध्यक्ष शंख चक्र गदा धर । त्वदीया मे मतिर्भद्रा न निजासुरनाशन ॥७॥
मदानुभावो देवेश तव प्रत्यक्षतो वयम् । यद् वदामो महात्मानं[8] धृष्टा कुलवधूरिव ॥८॥
तव वाचो गुणाविष्टा निष्क्रामन्तिस्म मन्मुखात्[9] ।
तथापि किञ्चिद्देवेशं[10] हिताहितकरं प्रभो ॥९॥
तवाज्ञाकारिणो भूत्वा सुखमिच्छन्ति दिवौकसः । तिष्ठन्तु तस्य वाचायां यावद्देवं त्रिलोचनम् ।१०।
तोषयित्वा जयां[11] देवीं विन्ध्याचलनिवासिनीम् । एवं ते मन्त्रयित्वा तु शक्रो विष्णुर्बृहस्पतिः[12] ।
नारदं प्रेषयामासु र्वज्रदण्डस्य शासने ॥११॥

---

१. रचितुं क । २. स च क । ३. वाचां पतिः क ग ।
४. सन्धिवादिनः क । पंक्तित्रयं गपुस्तके नास्ति । ५. व्याधयः क ग ।
६. समतेजस्तु क । ७. त्वं हि क । ८. महात्मानो क ग ।
९. तन्मुखात्-ख । १०. किञ्चिदुद्देशं क । ११. भवान् ख ।
१२. वाचस्पतिः ग

विष्णुरुवाच

त्वं देवर्षे विप्रेन्द्र ब्रह्मपुत्र महातपः । गत्वा वदस्व तं पापं घोरपुत्रं सुरारिणम् ॥१२॥

गतवान् विष्णोरादेशान्नारदो यत्र सोऽसुरः ।

तमायान्तमृषिं दृष्ट्वा कालो वज्रश्च[1] पूज्य तौ ॥१३॥

नारद उवाच

तव घोरसुतो वज्र सकालस्य महाबल । शासने संस्थिता देवा देवी कान्ततरा[2] च ते ॥१४॥

[3]किं पुनः शतयष्टा वा ब्रह्मणो[4] विष्णुतत्परः । भुञ्ज स्वर्गं महीं यावद्देवदेवी तवान्तकौ ।

षष्टया मिन्द्राग्नि देवस्य[5] शासनं घोरजं दिवि । कृत्वा बृहस्पति विष्णु र्जग्मु र्यत्र पितामहः ।१६।

(इति श्रीदेवीपुराणे देव्यवतारे हरिबृहस्पत्यो)

(ब्रह्मसदन प्राप्तिर्नाम पञ्चमोऽध्यायः[6]) ॥

१. वज्रस्य क । २. चान्तकरा क ३. किं क । ४. शतयष्टारो ब्रह्मणो क ।
५. देवाद्या-क । ६. इत्याद्ये देव्यवतारे ब्रह्मसदनप्राप्तिर्हरि बृहस्पतिसंवादः । क ।



# षष्ठोऽध्यायः ।

ब्रह्मोवाच ।

नमस्ते विश्वरूपेश[1] विश्वभाव नमोऽस्तु ते । सर्वदेवमय श्रीमन् वासुदेव नमोऽस्तु ते ॥१॥

भूत-भव्य-भविष्याणां कारणाकारणौ नमः । अनादिरादि-मध्यान्त-परकारण-कारण ।

भविष्यरूप सद्भावं मत्स्यरूपं नमोऽस्तु ते ॥२॥

धात्री-धरण कूर्मेश वराह नरसिंहराट् । सर्ववेदपते[2] वेद्य वेदान्तान्त नमो नमः[3] ॥३॥

वामनाय नमस्तुभ्यं रामराम[4] नमो नमः । वासुदेव[5] नमस्तुभ्यं कृष्णदेव नमो नमः ॥४॥

शुद्ध-सद्भाव-भावाय शुद्ध-बुद्ध-तनूद्भव । रागद्वेषविनिर्मुक्तो रक्तवासो[6] नमोऽस्तु ते ॥५॥

अश्वारूढ महोबाहो कलिधर्म–प्रवर्तक । दिगम्बरधरो देव शूद्रधर्मप्रवर्तक ॥६॥

म्लेच्छवर्गकुलोच्छेद नमस्ते कल्किरूपिणे[7] । युगान्त-युग-उत्पत्ति-युगधर्म-प्रवर्तक ॥७॥

नमस्ते देवदेवेश ! ईप्सितार्थ-प्रदायक । यदिच्छामि भवेत् त्वत्तो[8] मम देव तथैव च ॥८॥

मम कार्येषु कार्याणामीप्सितानां सुरोत्तम । भविष्याणाञ्च वस्तूनां साहाय्यं कुरु केशव ॥९॥

ततस्तुष्टो मम विष्णुः पुरा आसीत् सुराधिप । वरदोऽभूद् यथाकामं साहाय्यमीप्सितेषु च ॥१०॥

एवं यो वैष्णवं स्तोत्रं प्रातरुत्थाय भावयेत्[9] ।

मध्याह्ने सन्ध्याकाले च तस्येच्छा कामसिद्धिदा ॥११॥

पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् । विद्यार्थी लभते विद्यां सुखार्थी सुखभाग् भवेत् ॥१२॥

इति श्री देवीपुराणे देव्यवतारे विष्णुस्तवः समाप्तः[10] ।

---

१. विश्वदेवेश क  २. सर्वदेवपते–ग ।  ३. नमोऽस्तुते क ।
४. रामाय च क ।  ५. रामदेव क ग ।  ६. रक्तवास ग ।
७. कपिलतनु–ग ।  ८. भवन्त ते–क ग ।  ९. इतः परमध्यायान्ते–विष्णुस्तवः इत्येव पाठः क ।
१०. विष्णुस्तवः–इत्येव ग पुस्तके ।

ब्रह्मोवाच ।

मया पूर्वं च[1] त्वं देव उक्तमासीज्जनार्दन । असुराणां वरः श्रेष्ठो न देयो मधुसूदन ॥१३॥

लब्धवरा मदोद्रेकादसुराः सुर-बाधकाः । भवन्ति देवदेवानां द्विज-यज्ञ-विनाशकाः ॥१४॥

तथाप्येवं महाबाहो ! विनाशायासुरस्य च । चिन्त्यतां ब्रह्मन् गोविन्दो[2] वाचस्पतिर्बृहस्पतिः ॥१५॥

ब्रह्मोवाच ।

त्वमेव सर्ववेत्तासि तथापि सुरसत्तम[3] । [4]कार्यागतन्तु वक्तव्यं नहि दोषस्त्रिविक्रमम् ॥१६॥

तद्भवेत्[5] तत्पुरा कल्पे भौत्ये मन्वन्तरे हरे । देवदेवो महादेवो योऽसौ परमकारणः ॥१७॥

स्वर्गः सर्वव्यापी च अनादि-निधनः शिवः । तस्येच्छार्थं सुराध्यक्ष स्थितः पालयिता प्रभुः[6] ॥१८॥

सुतः[7] कालाग्निरुद्रस्य रुद्रपाषाण[8]मूर्धनि । तस्मिन् हालाहलो नाम महाबल-पराक्रमः ॥१९॥

उपनेतात्मजं घोरं द्वितीयमिव पावकम् । तं सम्प्रेक्ष्य तदा देव मुद्गरेण हतं त्वया ॥२०॥

प्रबुद्धोऽसौ तदा बह्निः शुद्धक्रोधेन दीपितः । तस्य निश्वासजा ज्वाला निर्गतास्तु दिशो दश ॥२१॥

तदा त्वं मोहसम्पन्नो मम शङ्का तदाभवत्[9]। मया सञ्चिन्तितो रुद्रः खट्वाङ्ग-करभास्करः[10] ।२२

स च करणसद्भावो ध्यान-सिद्धि-वरप्रदः । प्रेषयामास चामुण्डां कालानलसमप्रभाम् ॥२३॥

रक्षणाय तवास्माकं हुताशनशमाय च । तस्याः प्रेक्षणमात्रेण[11] सा च ज्वाला शमं गता ।२४।

तदासौ वदते देवं हालाहल हुताशनः । कथ्यतां कारणं विष्णो येनाहं ताडितस्त्वया ॥२५॥

त्वया[12] च याचितो देव जगाम तं हुतावहम्[13] ।
पूर्णः संवर्त्तते कालो मां ब्रह्मस्य च पावकः ॥२६॥
तेन बोधितवान्[14] रुद्रो योऽसौ कालाग्नि-विश्रुतः ।
वदतो कारणं ब्रूहि येन त्वं मम क्षोभकः ॥२७॥

---

१. पूर्वेव क ग ।
२. ब्रह्मगोविन्दौ ग ।
३. पुरुषोत्तम क ग ।
४. कार्यंगतं क ।
५. उत्तरे तु क ।
६. प्रजाः क ।क्रुद्ध क्रोधेन दीपितः । तपसे स्थितो पालयिता प्रजा ग पुस्तके ।
७. गतः क ग ।
८. वज्रपाषाण क ग ।
९. महा क महा भवेत्—ग ।
१०. भासुरः क ग
११. सात्राय ख ।
१२. त्वया च क ।
१३. जयमेऽस्तु तदावह इति खपुस्तके । जगदेकं तदावह क ग ।
१४. रोचितवान् क ।

विष्णुत्वमागतो देव जगतो दहनाय च । उत्थितस्तावत् कालाग्निर्महाज्वालौघभास्वरः[1] ॥२८॥

शमितस्तस्य देव्या यः प्रतापः पुनरेव सः । तदा त्वया महादेव[2] ज्ञात्वा शक्तिं महाबलाम् ॥२९॥

जगदुत्पत्तिपालाय निधनाय वयं पुरा । तुतोष परया भक्त्या स्तवेनानेन माधवः ॥३०॥

विष्णुपितामहावूचतुः ।

नमस्ते कालजालौघ-घोरदीप्ति-प्रशामति[3] । नीलस्यन्द महाकाल नवमेघ प्रभावति ॥३१॥

रक्त सिन्दूर किञ्जल्क विद्रुमाकार भावति । पीत पद्मारुणा हेमसर्वाकार विभावति ॥३२॥

श्वेत-शङ्खाब्धिक्षीराभ्र-हिम-कुन्द-विभावति । सृष्टि-संहार-कर्त्तारि-रुद्रमूर्ति-प्रभावति ॥३३॥

ब्रह्म-विष्णु-यम-शक्र-चन्द्र-सूर्य-विरोधकि । ईश रक्षोऽनिल तोयामनलात्मनमस्कृते[4] ॥३४॥

एकधा बहुधा त्वञ्च दशधा शतधा शिवा । पुनरुक्त-पदार्थार्थ-बहुकारण-कारकि ॥३५॥

कालपाशो महामायो वध-बन्धन-मोचकि । सुरासुर-नरसिद्ध-नानाभाव-प्रवर्तकि[5] ॥३६॥

पशु-मृग-पक्षि-तिर्यक्-तृण-मानुष-वर्त्तकि । [6]ब्रह्म-प्रजेश-सोमश्च यक्षरक्षः पिशाचकि[7] ॥३७॥

गन्धर्वभावभावेषु त्वञ्च देवि परापरे । लव-स्यन्द-त्रुटि-निमेष मुहूर्त्त अथ काष्ठसु ॥३८॥

कलायामर्धयामेषु सन्ध्या-वासर-रात्रिषु । पक्ष-मास-ऋतु-द्वित्रि-अयनेषु समेषु च ॥३९॥

मानवान् देवशत्रूणां ब्रह्माद्यस्माकं जन्तुषु[8] । कल्प कल्प महाकल्प-उत्पत्ति स्थिति हेतुषु ॥४०॥

दैव पुरुष सद्भाव मन्त्रशक्तिभवेषु च । विद्या-वदन-वेतारि[9] वेद-वेदान्त - वादिषु ॥४१॥

मन्त्र-तन्त्र-ज्वर-घोर-कूष्माण्ड-भूत-जातिषु । शब्द-प्रमाण-सिद्धान्त साङ्ख्य-योगागमेषु च ॥४२॥

ज्योतिर्वेद्यादिशास्त्रेषु काल[10] गारुडादिषु । रस ग्रन्थ[11] क्रियावादसरित्सागरमध्यसु ॥४३॥

सर्वगा सर्वकार्येषु[12] सर्वभावप्रवर्तकि । न हि शक्या गुणा देवी तव वक्तुं समादिषु[13] ॥४४॥

---

१. भासुरः क । २. मायादेव ख । ३. दीप्ति प्रशामकि क ।
४. ईशरक्षा...नमस्कृति क । ५. सिद्धि भावाभाव...क । ६. कपुस्तके नास्ति ।
७. रक्षशत्रु पिशाचसु क ग ।
८. भद्रकालि महाकालि तञ्च देवि परेषु च इत्यधिकः पाठः क पुस्तके ।
९. वेत्तारं क वेत्तासि ग १०. बाल क । ११. खन्य क ग ।
१२. सर्वकर्ता च क ग । १३. ममादिषु क

नित्यैव भाव्यते सर्वा कृतकृत्यस्य कीर्त्तना ।

स्तोता त्वञ्च स्तुतिस्त्वञ्च वेत्ता त्वं वेदनी च त्वम् ॥४५॥

कोऽयं स्तोता स्तवः कस्य क्रियते वाक्प्रलापनम् । एवम्भूतार्थभव्यैस्तु भविष्यैः पौरुषैस्तथा ॥४६॥

तुतोष परमा देवी वरदा च ग्रभूदुभौ ।

देव्युवाच ।

कृष्ण ब्रह्मन् वरं याच तुष्टाऽहमुभयोरपि ॥४७॥

तदा त्वहञ्च[1] सञ्चिन्त्य सहाय भव सुव्रते । येषु येषु च कल्पेषु मन्वन्तरयुगेषु च ॥४८॥

तेषु तेषु यथा देवि यद् यस्मात् को भविष्यति[2] । कर्तृत्वे स्थापने नाशे तत्तु[3] निष्पद्यते यथा ।४९।

तत्तथेति च सा उक्त्वा परेवोपरता ह्यभूत्[4] । कालेन स्तवमाकर्ण्य फलञ्च स्तवते कृतम् ॥५०॥

इदं यश्चर्चिचकास्तोत्रं ब्रह्मविष्णु[5]विनिर्मितम् । देवगन्धर्वयक्षो वा ऋषिर्विप्रोऽथ क्षत्रियः ॥५१॥

वैश्यः शूद्रोऽबला[6] वाऽपि भक्तितः सम्पठिष्यति । शृणुयाच्चिन्तयेद्वाऽपि सर्वार्थान् प्रापयिष्यते ।५२।

न ग्रहा[7] न च कूष्माण्डा न भूता न च राक्षसाः ।
पिशाचाः पूतनानन्दा नागाः सर्पाश्च गोनसाः ॥५३॥
बालजा भूतजा ये च ग्रहा दुष्टा महाबलाः ।
शमं यास्यन्ति रोगाश्च वातपित्तकफोद्भवाः ॥५४॥
स्थावराः कृत्रिमा भौमा[8] विषा दन्तनखोद्भवाः ।
ग्रौपसर्गिकरोगाश्च प्रणश्यन्त्यविचारणात् ॥५५॥

पातकाश्च शमं यान्ति ब्रह्मघातादयः[9] कृताः । गुरुपितृसुहृद्बन्धुमाताबालाबलावधम् ॥५६॥

पातकं शमते भक्त्या श्रवणाल्लभते फलम्[10] । दशानां राजसूयानामग्निष्टोमशतस्य च ॥५७॥

श्रवणात् फलमाप्नोति सर्वदानव्रतादिकम् । मुच्यते सर्वपापेभ्यो देव्यास्ते लीयते नरः ॥५८॥

इति श्रीदेवीपुराणे ब्रह्मविष्णुकृतः स्तवो नाम[11] षष्ठोऽध्यायः ।

---

१. तदात्मभूश्च क, २. जयोऽस्माकं क ग
३. तं त्वं ख । ४. पुरैवोपतावभूत् क । ५. विष्णुर्ब्रह्मा क ग । ६. नरैर्वापि क ।
७. नवग्रहः नवकुष्माण्डा ग । ८. घोरा क ग । ९. ब्रह्महत्यादयः क
१०. पातकं शमेत श्रवणाल्लभेत यत्फलं शृणु ग । ११. इत्याद्ये देव्यवतारे ब्रह्मविष्णुकृतः स्तवः क ग ।

# सप्तमोऽध्यायः ।

ब्रह्मोवाच ।

एवं पूर्वं त्वया देवी तोषिता सुरसत्तम । सा सर्वकार्याकार्येषु शङ्कराद् यदवाप्स्यसि ॥१॥

तत्र गत्वा महादेवं परापरतनूद्भवम् । तोषयामास गोविन्दो घोरदण्डवधक्षमम् ॥२॥

एवं पूर्वस्तदा[1] विष्णु स च ब्रह्मा सुरोत्तमः ।

गतवान् यत्र देवोऽसौ योगिनां ध्यानगोचरः ॥३॥

तदा ह्यङ्घ्रियुगस्याधः पेततुर्द्विजमाधवौ । मूर्त्तिभूतं शिवं साक्षाच्छक्तिवामाङ्ग[2] भूषणम् ॥४॥

त्रिनेत्रं पश्यते विष्णुर्ब्रह्मा विष्णुं प्रपश्यति । एवं विचित्रतां तस्य मत्वा ध्यानेन शूलिनः[3] ॥५॥

भूत-भव्य-भविष्यार्थैः प्रभूरेष पराक्रमैः । नाम सङ्कीर्त्तनाद्यैस्तु स्तवेनैनं तुतोष च ॥६॥

जय सूक्ष्म परानन्त कारणत्रयतवे । ध्यानगम्य पराध्यक्ष साक्षिभूत गुणत्रये ॥७॥

जय विजित सद्भाव ह्यस्माकं सुरसत्तम । जय ह्याकाश–वाय्वग्नि–तोय–धात्री च मूर्त्तये ॥८॥

जय तन्मात्र–कर्माख्य–बुद्ध्योन्द्रिय–विधातवे । जय बुद्धि-मनो-गर्व-प्रधानपुरुषात्मने ॥९॥

जय माला-कला-राग-काय-विद्या-विवोधन[4] । जय नियामकशक्ति जय विद्ये समुद्भवे[5] ॥१०॥

[6]जय कालाग्निसादन्त व्याप्तिव्यापक शूलिने ।

जय घोर महाघोर कालदण्ड यमान्तक । जय अन्ध पृथुस्कन्ध[7] खट्वा रुरुजिघांसक ॥११॥

जय काल महाकूट विषकण्ठस्थजीर्णवे । जय दानव–विध्वंस गङ्गा-जल-जटा--धर ।

जय त्रिपुरदाहेश कामदाहेश शम्भवे ॥१२॥

---

१. पूर्व तदा क । २. कामाङ्ग–क ग ।

३. एवं विचित्यतां तस्य सदा ध्यानेन शूलिने ग । ४. विद्याविरोधिने क ।

५. सर्वविद्येशसम्भवे क ग । ६. इतः पूर्वं जय खट्वाङ्ग–इत्वाद्यारभ्य महात्मने–इत्यतः पाठो विद्यते क ।

७. अणु पृथुस्थूय क ।

जय खट्वाङ्गमालाहि भूषणानां सदाप्रिय । जय दिग्वास भूतेश जय श्मशानवासिने ॥१३॥
जय सार्द्रगजचर्मप्रावृताय महात्मने । जय त्रिशूलहस्ताय कर्णापूरित इषवे ॥
जय वासुकिशङ्खाब्ज-अनन्तकृतमेखल ॥१४॥

जय गौरीस्तनस्पर्शरोमरोमाश्रधूसर । जय गम्य महीकम्प देवदेव भवोद्भव ॥१५॥
जय डिण्डि[1] महाकाल शम्भुशङ्कर ईश्वर । जय रुद्र हर घोर सत्यवास[2] सदाशिव ॥१६॥
जय पुरुष वक्त्रेश[3] परमेष्ठिभवाय च । जय पशुपते सर्वेश[4] भीम उग्र नमो नमः ॥१७॥
एवं स्तुतस्तदा देवो ब्रह्मा विष्णुश्च तुष्टवान् । वरं वर हरे ब्रह्मन् यत्ते मनसि वाञ्छितम् ॥१८॥
यथावृत्तकथां ज्ञाप्य घोरदण्डं निवर्हय । एवमुक्तस्तदा तेन[5] ईशः सञ्चिन्त्य अब्रवीत् ॥१९॥
या सा आद्या परा शक्तिर्योगनिद्रा महात्मनाम्[6] ।
सा तु सिंहं समारुह्य विन्ध्ये[7] क्रीडनतां ययौ[8] ॥२०॥

तत्रस्था ह्यस्मदंशेन पराशक्तिबलेन च । ब्रह्मंस्त्वं[9] किङ्करो भूत्वा विष्णुश्च नयरूपिणा[10] ॥२१॥
प्रतिहार्यो महातेजाश्चत्वारोऽन्या महाबलाः । ऋग्यजुःसामाथर्वाणां यद्धाम यत्परं बलम् ॥२२॥
ते च वेदास्तनुस्तेषां मूर्तिमन्तो भवन्ति च । सर्वा वीणाकरा देव्यः सर्वाः पाशाङ्कुशोद्यताः ॥२३॥
सितरक्तपीतकृष्णा बहुवक्त्रास्त्रिलोचनाः । दिव्यपट्टांशुकच्छन्ना दिव्याभरणभूषिताः[11] ॥२४॥
कामरूपा महारूपा अणिमादिगुणैर्युताः । हार-नूपुर-निर्घोष-मणि-वैडूर्य-चर्च्चिताः ॥२५॥
केशैः मृग-मदा-मोद-घन-नील-समप्रभैः ।
वेणीबन्ध महाच्छद्म उरगैरिव पृष्ठगैः ॥२६॥

अर्धेन्दुरिव ललाटनिम्नोन्नतविराजितैः[12] । निष्पावसदृशघ्राणा कर्णयुग्मे समांसले[13] ॥२७॥
नीलोत्पल-दल-प्रख्यै[14]र्हरिणीरिव लोचनैः । विद्रुमाकारशोभाढ्यैः पक्वविम्बोपमाधरैः ॥२८॥
कुन्द-कुड्मल-आभाष-दन्त पंक्तिः सुशोभना । हनु-गण्डस्थल- चिबुकानौपम्य-मनोरमाः ॥२९॥

---

१. दण्डि क ग । २. सत्यं धाम क ग । ३. अजेश-ख ।
४. शर्वेश क ग । ५. तेभ्य-क । ६. महात्मना क । ७. क्रीडा क ।
८. अजेन् क । ९. ब्रह्मा त्वं क । १०. जयरूपिणा क ग । ११. भूषणाः क ग ।
१२. विवर्जितैः क ग । १३. युग्मेषु सांसेन ग । १४. सारीगैरिव क ।

कम्बुरेखसमग्रीवैः[1] सर्वाः सर्वैस्तु मांसलैः । पीनोन्नत-कुचावृत्त-हारवलित-मध्यगैः ॥३०॥

मध्य-देश-तनु-क्षाम-त्रिवली-रोम-वर्जितैः । दक्षिणावर्त्त-गम्भीर-नाभि-मण्डल-मण्डितैः ॥३१॥

गुरु-विस्तीर्ण-नितम्ब-मांसोपचित-शोभितैः । अश्वत्थ-पत्र-साकार[2]-निगूढ-मणि-बन्धनैः[3] ॥३२॥

कूर्मपृष्ठ इव श्रोणिगुह्यदेशैस्तु शोभनैः । निगूढगुल्फदेशैश्च समैः पादैः सुमांसलैः ॥३३॥

ऊरू करिराकाविलोमै विशिरैः शुभैः । जानुनी समसुश्लिष्टजङ्घैर्वृत्तैः सुशोभनैः ॥३४॥

अङ्गुलीनां क्रमान्यूना मध्यमादि यथास्थितः । विचित्रलाञ्छनैर्भद्रैः पानहस्तैश्च लाञ्छिताः ॥३५॥

मृणालकोमलैर्वृत्तैर्दोर्दण्डैः सुदृढैः समैः । ताः सर्वा मोहना देव्यो दर्शनात् स्पर्शनादपि ॥३६॥

कामार्त्ता विह्वला याभिः क्रियन्ते दानवा बुधाः ।

शान्तिदा[4] वीतरागाणां ता देव्यो ऋषिमानवाः ॥३७॥

त्रातास्ताः सर्वदेवानामापत्सु सुमहत्सु च । चिन्तितार्थप्रदाः पुण्या ध्याता जप्ताथ पूजिताः ॥३८॥

कन्यारूपा महाभागा महदादिनमस्कृताः ॥३९॥

तासामपि महादेवी या सा शक्तिरनौपमा । परापरविमिश्रा च सर्वदिग[5]मृतात्मिका ॥४०॥

[6]वस्तुमात्रास्थिता ब्रह्मन् विष्णवे प्रभविष्णवे । शान्तिरूपा[7] सुरूपा या घोररूपा सुरारिहा ॥४१॥

एकानेकविभागेन कोटिभेदैर्व्यवस्थिता । सदास्माकं भवस्यैव[8] स्वामिभूता महात्मिका ॥४२॥

तासां चतुर्णां देवीनां नायिका सुरनायिका । युग-मन्वन्तर-कल्प-उत्पत्ति-स्थिति-नाशिनी ॥४३॥

भेद–भेदान्तरज्ञानामृषीणां मनुदक्षयो । भविष्यति समस्तानामीप्सितार्थ फलप्रदा ।

तस्यापि वाहनं ब्रह्मन् हरिनार्थ विनिर्मितम् ॥४४॥

ब्रह्मोवाच ।

सर्वदेवा सगन्धर्वाः सर्वदेवास्तया[9] सह । सर्वदेवमयः कृत्वा वाहनो ह्यरिदर्पहा ॥४५॥

तथा त्वं केशवो देव वयं केशवमूलतः । विष्णुः स्थास्यति ग्रीवायां सर्वलोकाश्च तद्वपुः ॥४६॥

शिरोमध्ये महादेवो द्वितीयः कालरूपिणः । ललाटाग्रे महादेवी नासावंशे[10] सरस्वती ॥४७॥

---

१. समैग्रीवैः क । २. संस्कार क । ३. सूनुतैः क .
४. मुक्तिदा क ग । ६. सर्वदिक्कामृतात्मिका क ग ।
६. बहु क । ७. शान्तरूपा सा घोररूपा क ग ।
८. भवांश्चैव क ग । ९. त्वया क ग । १०. उमादेवी क ग ।

षण्मुखो मणिबन्धेषु नागाश्च पार्श्वतः स्थिताः । कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ ॥४८॥
दन्तेषु वसवः सर्वे जिह्वायां वरुणः स्थितः । हूङ्कारे चर्च्चिका देवी यमयक्षौ च गण्डयोः ॥४९॥
सन्ध्याद्वयं तथौष्ठाभ्यां ग्रीवायामिन्द्र आश्रितः । ग्रीवासन्धिषु ऋक्षाणि साध्याश्चोरसि संस्थिता ।
निर्घृणत्वे तमस्तस्य क्रौर्ये सर्वास्तु पूतनाः ॥५०॥
पालने मातरो देव्यः अपाने पितरः स्थिताः । श्रिया रूपे स्थिता तस्य बाले चादित्यरश्मयः ॥५१॥
वृषणे मेरुर्विन्यस्तः सागरा वसने[1] स्थिताः । सरितस्तस्य स्वेदस्थाः[2] स्थापिताः[3] परमेश्वर ॥५२।
यज्ञाः सदेवताः सर्वे चाङ्गुले[4] चाभवद् य सः[5] । बलं वीर्यञ्च देवेश त्वदीयं यस्य सर्वतः ॥५३॥
खादकादीनि रक्षांसि न्यस्तव्यानि सुरेश्वर । सर्वेषां वाहनादेव ये च यस्य नियोजिताः ॥५४॥
आत्मनः पररक्षासु पथि[6] संग्रामसागरे । भूतराक्षसवेतालाद्यरीणां सङ्कटेषु च ॥५५॥
ग्रहदुष्टेषु सर्वेषु [7]उपसर्गमयेषु च । सुरकिन्नरकन्यासु ह्यप्सरास्वलासु च ॥५६॥
गर्भरक्षा मातृरक्षा[8] पुत्रार्थे गुर्विणीषु च । एवं संपृष्टवान् देव द्रुहिणः केशवेन च ॥५७॥
विहस्य कथ्येत शक्र यथावदनुपूर्वशः । नमः पिङ्गलनेत्राय कोटराक्षाय भैरव ॥५८॥
नमस्ते घोररूपाय सुरासुरभयङ्कर । नमः खट्वाङ्गहस्ताय रुरुचर्मार्द्रवाससे[9] ॥५९॥
[10]नमः करालमालाय ब्रह्मकृष्णसभाजने[11] । नमः कराल-मालाय नारायण-तनूरुहे ॥६०॥
नमो मुद्गर- हस्ताय खड्गपट्टिशधारिणे । नमः परशुहस्ताय पिनाकवरपाणिने ॥६१॥
नमः शङ्खगदा-हस्त[12] क्रतु-डमरू-वादिने । नमः शैल महावेश[13] महावेगनिनादिते ॥६२॥
नमः शैलमहाघोर वज्रहस्ताय चक्रिणे । ऊर्ध्वकेश महावेष महामेघनिनादिने ॥६३॥
महाविद्युज्जिह्वाय महा-उल्कानिभाय च । सोमसूर्याग्निनेत्राय नानाक्रीडारताय च ॥६४॥
नाना-भक्ष्य-क्रिया-भोज्य-नानाहार-प्रियाय च । मांसासवरसामेध पूतनादि-रताय च ।
कृन्त कृन्त सुराध्यक्ष शत्रुवर्गं महाबल ॥६५॥

---

१. रसने ख । २. वेदस्थाः क । ३. स्थीयतां क ग । ४. लाङ्गले क । ५. भवतोन्यसं क ग । ६. यथा क । ७, औपसर्गमयेषु क । ८. महारक्षा क ग । ९. खड्गपट्टिशधारिणे क । १०. नमः कपाल......मुद्गरहस्ताय इति नास्ति क : ११. ब्रह्मशिरविभाजने ग । १२. कुन्त क दन्त ग । १३. महावेग महावेगनिनादिने इति नास्ति क ग ।

खाद खाद महाघोर खड्गखट्वाङ्गधारिणे । बन्ध बन्ध महापाश महाशत्रुप्रमर्द्दन ॥६६
हाहा हुङ्कारनादेन दैत्यान् हि विनिकृन्तय । महारूप महाकाय समदेवारिशङ्कर ॥६७॥
उग्र भैरव चामुण्ड डिण्डिमुण्डि जटाधर । छिन्द छिन्द[1] महाचक्र इषुहस्ताय शङ्कर ॥६८॥
जम्भकाद्याथ चामुण्डा डाकिन्यो भूतमातरः । ये ये दानवपक्षस्य ते ते खाद मान्तक[2] ॥६९॥
वज्रशक्तिमहादण्ड खड्गपाशाङ्कुशोद्यतः । गदात्रिशूलहस्ताय सर्वां बाधां विनाशय ॥७०॥
ज्वर भूत ग्रहोन्माद शकुली नन्दरेवती[3] । नाग किन्नर गन्धर्व सर्वरोगोद्भवा समा ॥७१॥
कालपीडा क्रियापीडा पापपीडाथ धातुजा[4] । वातपित्तकफोद्भूतां शमयेत् भैरवः सदा ॥७२॥
विद्वेषोच्चाटनादीनि मारणस्तम्भकर्षणाः । मन्त्रयन्त्रकृतां बाधां शमय सुरसत्तम ॥७३॥
अथर्वविहितां पीडां तथा शापादितापसैः । दुष्टवाक्यकृतां सर्वां नाशयेद् वृषवाहन ॥७४॥
खड्गकुन्तभुशुण्ड्यादि घाताश्चक्रासिजाश्च ये । वज्रमुष्टिकृता देव स्तम्भ स्तम्भ शुभाम्बर[5] ॥७५॥
इषुजोपलवार्क्षोऽथ ये चान्ये वैरिणः[6] कृताः । आहवेषु[7] महाबाहो ते शमं यान्तु भैरवः ॥७६॥
दंष्ट्राविषं महाघोरं नखजं रुद्र नाशय । परसैन्यविघातन्तु कालवज्रकरानल ॥७७॥
कुर्व कुर्व महाक्रोध परस्य वधमाहवे । नक्रव्याघ्रवराहेषु सिंहखड्गभयेषु च ॥७८॥
त्राय मां देवदेवेश तस्करेषु पथेषु च । सरित् सागरनद्येषु दीर्घिकोपवनेषु च ॥७९॥
पर्वतेषु तडागेषु वनविन्ध्याटवीषु च । अग्रतो रक्षते शम्भुः शूलपाणिर्महाबलः ॥८०॥
पृष्ठतो बाणहस्तस्तु पिनाकी वृषकेतनः । पार्श्वतस्तु महारुद्रः[8] खड्गखेटकधारिणः[9] ॥८१॥
आकाशे च महादेवो घण्टाडमरूशब्दितः । पातालस्थः स्वयमीशो वासुकीकृतभूषणः ॥८२॥
सर्वतः शिवनामा च भयेभ्यः पातु शङ्करः । एवं स्तुत्वा महादेवं प्रश्नोक्तांल्लभते गुणान् ॥८३॥
य इदं पठते ब्रह्मन् ममापि तव सन्निधौ । विष्णवागारे त्वदीये वा तीर्थे गोष्ठे चतुष्पथे ॥८४॥
एकलिङ्गे तडागे[10] वा पर्वते वा वनेऽपि वा । नदीसङ्गमपुण्ये वा गृहे वा हुतपावके ।

---

१. भिन्द क ग ।
२. मन्तिके ख । पंक्तिद्वयं गपुस्तके नास्ति । ३. शकुली क । ४. वातजा क ग ।
५. सुभास्वर क ग । ६. वैरिभिः क । ७. आहरेषु महाघोरं ख ।
८. तथा रुद्रः क । ९. पंक्तित्रयं नास्ति गपुस्तके । १०. एकलिङ्गैकवृक्षे क

न तस्य व्याधयः शोको न हानिर्न च शत्रवः ॥८५॥

न [1]ज्वरार्तिभयोद्वेगा नापि मित्रेष्टनाशनम् । नाकाले मरणं तस्य न चापायोऽस्य सम्भवेत् ॥८६॥

मोचते सर्वपापानि श्रवणात् पठनादपि[2] । धारणात् पत्रभूर्जेषु ताम्रपात्रेषु[3] पूजयेत् ॥८७॥

यन्त्रपुस्तकमन्त्रेषु सर्वकामान् प्रयच्छति । ब्रह्महत्या सुरापानं हन्यात् पातकदुष्कृतम् ॥८८॥

सकृदुच्चारणाद् ब्रह्मन् सर्वकर्मफलं[4] लभेत् । सर्वतीर्थतपोदानं सर्वव्रतप्रदायिका ॥८९॥

शङ्करेण कृता रक्षा सर्वकामार्थसाधिका । गृहेऽपि[5] तिष्ठते यस्य स सुखं यश आप्नुयात् ॥९०॥

इति शङ्करगीतारक्षा समाप्ता[6] ।

ब्रह्मोवाच।

सिंहं निष्पादितं देव देव्याया विनिवेदय । तदङ्गतेजः[7] सम्भूता जयाद्या याश्च मातरः[8] ॥९१॥

ता देव्याज्ञाकरा भूत्वा मर्त्ये गत्वा रराम च[9] । जम्बूद्वीपे महाद्वीपे सर्वभोगफलप्रदे ॥९२॥

विन्ध्ये पर्वतराजेन्द्रे[10] नर्मदाजलफेनिते[11] । निर्द्धूतपावकलिले[12] ऋषिसिद्धनिषेविते ॥९३॥

वधाय सुरशत्रूणां नराणाश्च हिताय च । परित्राणाय भक्तानां सर्ववर्णाश्रमेषु च ॥९४॥

अन्त्यजानां महाभाग भक्तानां समदर्शनाः । पूजिताः संस्तुता देव्यः कर्मभावफलप्रदाः ॥९५॥

एवं ताः सम्मतीः कृत्वा नायिका मातरार्तिहाः[14] । नियुक्ताः शम्भुना मर्त्ये विन्ध्ये शैलवरोत्तमे ।९६।

तदा ताः[13] सर्वगा भूत्वा सप्तद्वीपाश्च मेदिनीम् । व्यापयित्वा स्थितास्तस्मिन् विन्ध्ये भूधरसत्तमे ।९७।

इति श्रीदेवीपुराणे देवीविन्ध्यावतरणं नाम सप्तमोऽध्यायः[15] ॥७॥

---

१. जरार्ति० क ।
२. पठनेऽपिवा क ।
३. पट्टेषु पूजनात् क ।
४. सर्वयज्ञफलं क ग ।
५. लेखेऽपि क ।
६. देवीपुराणे देव्यवतारे इत्यधिकः पाठः
७. तदंश० क ।त्वदं शतेज ग ,
८. भूतयः क ग ।
९. वरप्रदाः क ।
१०. राजे च क ग ।
११. स्फालिते क ग ।
१२. पावकासत्व० ख ।
१३. नतवर्तिकाः इति ख-पुस्तकस्य पाठान्तरे, ग ।
१४. ततस्ताः क ।
१५. इत्याद्ये देव्यवतारे विन्ध्यावतरणं क ग ।



# अष्टमोऽध्यायः ।

वज्रदण्ड उवाच ।

अस्माकं मर्त्यपातालाः शक्राद्याश्च तथामराः । साधिताः कालदेवस्य[1] प्रसादेन महाबलाः ॥१॥
दूता[2] न्यवेदयन् गत्वा देवस्थानमनुत्तमम् । एवं श्रुत्वा तदालापं वज्रकालचिकीर्षितम् ॥२॥
बृहस्पतिना चाख्यातं ब्रह्मणो वासवस्य च ॥३॥

बृहस्पतिरुवाच ।

कालेन सह वज्रेण घोरः स्वर्गनिवासिनाम् । आनयनाय कृतो यत्नो भवतां तन्निवेदितम् ॥४॥

ब्रह्मोवाच ।

नारदं प्रेषय विष्णो असुरस्य विमोहनम् । करोति येन स गत्वा अधर्मेषु नियोजनम् ॥५॥
वेद[3] ब्राह्मण देवानां[4] भक्ति कृत्वा उपागतः[5] । तस्य पत्नी ह्यधर्मेषु याति[6] धर्मबहिष्कृता ॥६॥
अधर्मनिरताः सर्वाः प्रजास्तस्य न शान्तिदाः । येन केनचिदुपायेन तेनेदं कुरु माधव ॥७॥
एवं पृष्टस्तदा विष्णुर्नारदं स समादिशत् । त्वं ब्रह्मज महाप्राज्ञ सर्वशास्त्र-विशारदः ॥८॥
कुशद्वीपं व्रज ब्रह्मं स्त्वमधर्मविघातकः[7] । तथेति तैः समादिष्टो देवार्थे[8] कृष्णविग्रहः ॥९॥
आगमध्यानयोगेन स्वतन्त्र ऋषिपुङ्गवः । कुशद्वीपं क्षणात् प्राप्तो यत्र राजा महासुरः ॥१०॥
द्वाःस्थेन तं समायान्तं दृष्ट्वा ब्रह्मसुतोत्तमम् । प्रविष्टो यत्र वै राजा घोरो घोरपराक्रमः ॥११॥

द्वाःस्थ उवाच ।

राजराज महाबाहो द्वारे ब्रह्मसुतोत्तमः । नारदस्तिष्ठते देव स्थाप्यतां किं प्रवेश्यताम् ॥१२॥

---

१. कालवेषस्य क । २. तस्य क ग ।
३. देवं क ग । ४ वेदानां क ग । ५. क्षमायतः क ग । कृत्वाज्ञयायतः ख ।
६. पतिधर्मं क ग । ७. ब्रह्म दनुधर्मविघातकं क ग । ८. देवार्थंदृष्टं क ।

तच्छ्रुत्वा दनुराजेन्द्रो नारदं द्वारमागतम् । द्वास्थं समादिशत् तूर्णं कूपजो हृष्टमानसः ॥१३॥
प्रवेशतो प्रतीहार द्विजरूपो जनार्दनः । लब्धादेशस्तदा द्वाःस्थो नारदमानयत ततः ॥१४॥
त[१] त्रासौ विष्णुभक्तात्मा घोरो देवद्विज प्रियः[२] । तं प्रेक्ष्य उत्थितो राजा भूम्यां जानुगतः शिरः ।१५
प्रणम्य भक्तिभावेन प्रपूर्यार्घोदकासनैः[३] । सुखं संविश देवर्षे इत्युक्तो नारदोऽवदत् ॥१६॥

अथ राजन् महाबाहो विषयान् मानयन् सुखम् ।
मानयस्व प्रियान् कामान् स्त्रीणां क्रीडावती[४] सदा ॥१७॥

एतदेव फलं राजन् देवताराधनोद्भवम् । भूपतित्वं सदा भोग्याः[५] स्त्रियो वा नवयौवनाः ॥१८॥
आत्मानं परमं देवं तोषणीयं तदा बुधैः । श्रूयते च महाराज देवदेवस्त्रिलोचनः ॥१९॥
ऋषिकन्याप्रक्रीडाय गतो दारुवनं किल । स च देवो महादेवः परतत्त्वार्थवेदकः[६] ॥२०॥
सेवते विषयान् राजन् यथा सर्वेषु सः परः । तथा च भगवान् विष्णुः[७] श्रियं वक्षःस्थले वरम् ।२१।
चन्द्र इन्द्र सुरा ब्रह्म सर्वे च सुखमर्थिनः । तदर्थं[८] तप्यते धर्मफलोऽयं विषयो नृपः[९] ॥२२॥
एवमुक्तस्ततः[१०] शक्र घोरः प्रत्यववोच तम्[११] । नहि "नारद" धर्मस्य "विषयान्मोक्षणं" शुभम् ।२३

घोर उवाच ।

संयतास्ते "शुभा ब्रह्मन् विसृष्टा "नरकाय ते । इन्द्रियविजयी" पुमान् विनयेनोपपद्यते ॥२४॥
विनीतः सेवते लोकं तदा सम्पदमाप्नुयात् । सम्पदा[१२] "धर्मं भोगा" हि स्ववृत्ति-परिपालनम् ।२५।
तच्च सम्पालनं[१३] ब्रह्मन् दृष्टादृष्टफलप्रदम् । व्याधि-भेषज-सेवायां क्षयं गच्छेदसंशयम् ॥२६॥
सेव्यमानेन्द्रिया ब्रह्मन् प्रवृद्धिमुपयान्ति हि । ज्वालामालाकुलं गेहं महापावक-दीपितम् ॥२७॥
अनेनोपशमं याति विषयाणाञ्च दीपकम्[१४] । दाहज्वरमहातापो[१५] वह्निपित्तसमुद्भवम् ॥२८॥

---

१. दिशश्छक्र कुशपो दारिविग्रहः ।
२. यत्रा० क ग । ३. प्रपूज्याध्योंदकाशनैः क ग ।
४. क्रीडारतः क ग ।
५. भोज्याः क ग । ६. वादकः क ग ।
७. स्त्रियं रक्षस्थलेघरत् क ।
८. तदानु क ।
९. बिषयान्नृप क । तदर्थें तप्यते धर्माफलोऽयं विषया नृप ग ।
१०. एवमुक्त्वा ग ।
११. प्रत्यभ्यरोचयत् क ग ।
१२. सम्पदो धर्मभोगाय क ग ।
१३. सम्पालयन् ख ।
१४. विषयान्नात्मदीपकम् ख ।
१५. वह्निः पित्तासमुदभवम् क समुद्भवः ग ।

हिम-चन्दन-संयोगाच्छमेत्ॱ विषयान्मुने । कदली-दल-कह्लार-मृणाल-कमलोत्पलैः ॥२६॥
हिम-चन्दन-कर्पूरैं कामाग्निर्ज्वलते तु तैः। ऋणं दानेन शमते दहनोम्युदकेन च ॥३०॥
शत्रवो घातमाना हि क्षीयन्ते ह्यविचारणात्। एतेषां घातनं ब्रह्मंस्तन्निबोध सुखावहम्[1] ॥३१॥
शब्द-स्पर्श-रसरूप-गन्ध-वागिन्द्रियास्तथा । पाणि-पादपा यूपस्थाः[2] संयतास्तु सुखावहाः ॥३२॥
पतङ्ग-मृग-मत्स्येभ-कीटाद्याश्च पतत्रिणः। एकैकविषयासक्ताः सर्वे मृत्युवशं गताः ॥३३॥
यः पुनः[3] संहतान् सेवेद् विषयान् विषयी नरः। स पतेन्महदैश्वर्याच्छिन्नमूल इव द्रुमः ॥३४॥
स्त्रियः पानं दिवास्वप्नं तथा वादित्रनर्तनम्। द्यूताटनमृगा गेयं कामजां निन्दनं परे[4] ॥३५॥
[5]दण्डैर्वाचा ईर्षासूयाक्रोधपैशुन्यसाहसम् । [6]अर्थानां दूषणं व्याधि अष्टकोऽयं विनाशकृत् ॥३६॥
देवा विद्याधरा यक्षाः किन्नरोरगमानुषाः। पशवः पक्षिणः सर्वे विषये निधनं गताः ॥३७॥
एवं विवेकमासक्तं बुद्ध्वा घोरं नराधिप[7]। धर्मव्याजं समास्थाय विषयैः संन्निवेश्यताम् ॥३८॥

नारद उवाच ।

निर्जित्य शत्रुसैन्यानि क्षितिं धर्मेण पालयेत्। अनाथामुद्वहेत् कन्यां वंशजां न च दोषभाक्[8] ॥३९॥
धर्मस्य साधनं राज्यं राज्यादैश्वर्यमुत्तमम्। भुञ्जयन् पुनरन्याश्च[9] स्त्रियो रत्नविभूषिताः ॥४०॥
मद्यमैथुनमांसस्य न दोषः स्वप्रवृत्तितः[10]। [11]मित्रागमसुखालापाः स्त्रीणां सम्भोगहेतवः ॥४१॥
नित्यं चेष्टा[12] मनोऽभीष्टाः कथा गेयाः सुखप्रदाः ॥४२॥
[13]सौधपृष्ठमृदुन्नाथ रश्मयः सुखहेतवः । उष्णोदकसुखस्नानं पयःपानं वरस्त्रियः[14] ॥४३॥
वाजीकरणयोगांश्च नन्दिकेश्वर उक्तवान्। भुक्त्वा नारीशतं पुंसः सौभाग्यं परमाप्नुयात् ॥४४॥
सहस्रेण महाभोगी ह्ययुतेन धनेश्वरः। लक्षेण कामदेवत्वं कोटिना परमं पदम् ॥४५॥

---

१. तन्निरोधः सुखावह क ग ।
२. पादपद्मरूपस्थश्च क ग ।
३. पुमान् ख ।
४. कामजानि दशा परम् क ।
५. दण्डबाधा ईर्ष्या० क ग ।
६. आत्मभूषणक्रोधोऽर्थो क । अर्थदूषण क्रोधोऽर्थ इति ख पुस्तकस्य पाठान्तरे ।
७. सुराधिप क ग ।
८. दोषतः क ग ।
९. भुञ्जयत् सुररम्याश्च क ग ।
१०. स्वप्रवृत्तिषु क ग ।
११. निद्रागम० क ।
१२. चित्रा क ।
१३. सौधपृष्ठं दुराधर्षं क ।
१४. परस्त्रियः खपुस्तक पाठान्तरे ।

एवं पूर्वोपदेशन्तु नन्दिना परिपृच्छतः[1]। विष्णुतत्त्वं[2] कामतत्त्वं शिवतत्त्वं तथापरम् ॥४६॥
इत्येवं कपिलः प्राह मुनीनां प्रवरो मुनिः। द्विरष्टवर्षां कन्याञ्च पीनोन्नतपयोधराम् ॥४७॥
यः सदा कामयते पुमानमरत्वं स गच्छति ॥४८॥
स्थूलां शिथिलदुर्गन्धां केकरां वा कटां शठीम्[3]। रोगिणीं व्याधितां मूकामयोग्यां मन्दगामिनीम् ।४९।
गत्वा पुमानवाप्नोति व्याधिं पुंस्त्वविनाशनम्। तस्मात् सर्वप्रयत्नेन स्त्रियोऽन्वेष्या महामते ॥५०॥
तदायत्ता इमे प्राणाः शुक्रौजोबलमेव च। बलञ्च परमं शुक्रं तञ्च जीवं मतं बुधैः ॥५१॥
तच्च शुभाबलायोगाद् वर्धते असुराधिप। स हृष्टः स्फीतः[4] पुरुषस्तस्मात् सर्वक्षयो भवेत् ॥५२॥
एवं धर्मार्थकामानां न हानिर्भवतेऽसुर। जम्बुद्वीपे महाबाहो विन्ध्ये भूधरपुत्रिका ॥५३॥
द्विरष्टवर्षकन्या सा सर्वलक्षणसंयुता। योग्या राजंस्त्वदीयस्य विभवान्तःपुरस्य च ॥५४॥
तामानय यथा शक्त्या त्रैलोकस्य विभूतये। पातालं मूलभूतन्तु सारं पृथ्वी ससागरा ॥५५॥
शाखाशैलवनोपेता दिवं पुष्पं विनिर्दिशेत्। अप्सरस्तत्फलं विद्धि ताः कन्याः फलबीजगाः ॥५६॥
एवं स नारदादेशात् व्याज-धर्म-प्रवर्तितः। चकार सम्मतिं शक्र कन्यामुद्वहनोपरि ॥५७॥

इति श्रीदेवीपुराणे देव्यवतारे घोरप्रलोभनं नामाष्टमोऽध्यायः[5] ॥८॥

१. पूर्वापरे शम्भुं नन्दिना परिपृच्छितः क ग।
२. विषतत्त्वं क ग।
३. शठाम् क ग।
४. सद्वृत्त वितरः क सद्वपुविरतः पुरुषः ग।
५. इत्याद्ये देव्यवतारे घोरप्रलोभनम् क. ग।



# नवमोऽध्यायः ।

ब्रह्मोवाच ।

नारदकथनाच्छक्र व्याजधर्मरतोऽसुरः । न स पूजयेत्[1] विप्रान् न वेदान्[2] न वा अच्युतम् ॥१॥
न[3] मन्त्रिद्वाःस्थ वाक्यानि न च पत्नीसमं वसेत् । सर्वं धर्मपथं[4] त्यक्त्वा बलवाहन सश्रयम्[5] ।२।
पानसङ्गमगेयादिमिच्छन् द्यूतनिषेवणम् । उत्कण्ठितमना जातः परपत्नीरतः सदा ॥३॥
स्वकान्तां विषवन्मेने न च धर्मं प्रतीक्षते । एक एव सुहृद् विप्रो नारद ऋषिसत्तमः ॥४॥
येन मे विषयासक्तिर्दत्ता कामसुखप्रदा । कतरेण विधानेन आनयामि मुदा[1] त्वहम् ॥५॥
परपत्न्यः शुभा भद्राः पीनोन्नतपयोधराः । सत्यमेव हि धर्मस्य फलं राज्यं महोदयम् ॥६॥
तथा च पुरग्रामाणि गृहाः पत्न्यः सुशोभनाः । देवविद्याधरा यक्षा ब्रह्मविष्णुमहेश्वराः ॥७॥
सदाकाममुदासक्ताः[6] स्त्रियः पानमनोऽनुगाः । तथा वयञ्च कुर्वामो[8] यथा भूधरपुत्रिकाम् ॥८॥
नारदकथनात् सत्यं भुञ्जामि सुरदुर्लभाम् ।

ब्रह्मोवाच ।

विज्ञाय नारदाच्छक्र घोर तन्मतिवर्त्मगाम्[9] । अमात्यसहितो वाग्मी[10] चन्द्रबुद्धिरमन्त्रयत्[11] ॥९॥

चन्द्रमतिरुवाच ।

यथा तात मम स्वामी चन्द्रशोभमहात्मनः । तथैव त्वं महामात्यो मम भर्त्तानुपालकः ॥१०॥

---

१. सम्पूजयते क । २. न च देवान् क. ग । ३. मन्त्रीशस्य० क ।
४. बलं क । ५. कलं वाहनमेष ख क । ६. सदा क ।
७. काममनासक्ताः क । ८. कुर्वाम् क । कुर्याणः इति ख पुस्तक पाठान्तरे ।
९. घोरं तन्मतिवर्त्मणम् इति ख. । १०. राज्ञी क ग । ११. असंद्रवन् ग ।

तव सर्वाणि शास्त्राणि विद्या-आन्विक्षिकादयः। वसन्ति उदरे यस्य स कथं मुच्यते[1] पथः ॥११॥
अमात्यवशगं राज्यं वशो राजा सुमन्त्रिषु। तन्मते भुञ्जते पृथ्वीमन्यथा तु विपर्ययः ॥१२॥
त्वया तात समस्तेयं पृथ्वीपातालदेवराट्। नाथेन भवता प्राप्ता स कथं न[2] वशस्तव ॥१३॥
यदा[3] हि व्यसनासक्तं नृपं बुद्धिविपर्यये। विज्ञाय स[4] तदामात्यः प्राकृतं दर्शयेद्भयम् ॥१४॥
तव भिन्नाः सुता भार्याः सामन्ताः प्रवरा नृपाः। मदीये[5] त्वं मते वर्त्तन् स्वयं तन्नहि वेत्स्यसि ॥१५॥
त्वं पुनः सर्वभावेन तस्याज्ञामनुवर्त्तकः। न हि इष्टं सदामात्यं[6] राज्ञो राज्यं कथं भवेत् ॥१६॥
यस्य समुत्सवा[7] वैद्या अमात्या नृपवाक्कराः। न हि राज्यं स्थिरं तस्य कपिमालेवमूर्द्धगा[8] ॥१७॥
[9]अमात्यप्रवरं राज्यं भूता द्वाःस्था अवेक्षकाः। महानसः स्त्रियः शय्यापानताम्बूलदायकाः[10] ॥१८॥
एते हि यस्य सद्वृत्ताः स राजा-सुखभुक् सदा। विभिन्नैर्भिद्यते तात सिकता इव सेतुषु ॥१९॥
धर्माधर्मस्य संसिद्धिः स्वामिनः सुखमिच्छताम्। भृत्यानां भवत तात अन्यथा[11] निरयास्तव ॥२०॥
ऋजुव्रणत्वक्सारमहावंशा[12] यथा गृहम्। धारयन्ति सदा राज्यं मन्त्रिणो दण्डपालकाः ॥२१॥
राज्ञाश्च शब्दमात्रैव अभिमानं यथा मम। राज्यश्चामात्यलेख्यानां भोग्यं तात न चान्यथा ॥२२॥

स्त्रीस्वरूपा यदा किञ्चिन्मया वाणी न संस्कृता।
तथापि मम क्षन्तव्यं बालानां न हि [13]रुष्टताम् ॥२३॥
एवं [14]सबान्धवं मन्त्रं [15]चन्द्रबुद्धिः [16]प्रहृष्टवान्
प्रोवाच संस्तुतं वाक्यं[17] देवी त्वं देवतास्वपि ॥२४॥

---

१. च्यवते क. ग।
२. स कथं नो वशो भवेत् क.।
३. यथा क.।
४. सततामाद्यः क।
५. वर्त्त स्वयं त्वं न हि वत्स्यसे ख।
६. तदा राज्ञो वाक्यं वाक्यकरं भवेत् क.। न हि दृष्टं सदामात्यं राज्ञो वाक्यकरं भवेत् ख.। न हि इष्टं सदा वाक्यं राज्ञो वाक्यकरं भवेत् ग।
७. सांवत्सराः क. ग।
८. मूर्द्धनि क।
९. अमात्याः प्रवरा क।
१०. लेखकाः क ग।
११. निव यान्तुः बः क ग।
१२. वृहत्वंशा क ग।
१३. रूष्यतां क ग। रूष्यतां ख।
१४. सवासवं क ग।
१५. चन्द्रवृद्धिः क ग।
१६. प्रपृष्टवान् क ग।
१७. देव त्वं देवता अपि क।

[1]सुषेण उवाच ।

त्वमेव सर्ववाक्यानां[2] नयानामुपदेशिनी । तथापि किञ्चिद् वक्तव्यं[3] न त्वेव तच्च मन्यसे ॥२५॥

सर्वनीतिगतः पारो देवद्विजनदेज्यकः । शुद्धमतिश्च[4] मतिमान् कथं स विपथे व्रजेत् ॥२६॥

अकस्मादद्य रात्रौ च नारदाद्वाक्यचोदितः । तस्य इच्छाकरो भूत्वा अस्माकञ्च नहीच्छति ॥२७॥

यथामात्येन मत्तेन विभूतिर्विफला तव । येन वृद्धास्त्रियः सेवी [5]कृतोवैद्याः पुरोहिताः ॥२८॥

एवं तस्य मतिर्भूत्वा [6]नारदपथगा शुभे । वयं त्वञ्च तथागच्छ प्रत्यक्षमनुशास्यताम् ।।२९॥

अवमन्य तथा द्वाःस्थं देवी मन्त्री गतौ हि तत् । संक्रुद्धलोचनोऽपश्यत्[7] न च वाचाभ्यभाषत ।३०।

चन्द्रमतिरुवाच ।

यद्यपि[8] भवतो नास्मान् वाचायामपि भाषते । तथापि किञ्चिद् वक्तव्यं न सपत्नीभयं मम ॥३१॥

न चाविज्ञातशीलासु स्त्रीषु भोग्यागमः क्वचित् । विषकन्याभयं घोरं पापजं[9] श्रूयते परम् ॥३२॥

तपस्विव्यञ्जकं [10]नग्नचण्डभीरूचरानुगान् । यज्ञविप्रविदां राजा विश्वस्तः सीदतेऽचिरात् ॥३३॥

रजकी[11]तान्त्रिकी चक्री वरुठी पुष्पग्रन्थिनी । कैवर्ती ईक्षणी वृद्धा न हि स्थाप्या गृहे चिरम् ।३४।

सूतिका[12] वधिरा यन्त्री कुलाली स्त्रीजने यथा । विनाशं कुरुतेऽवश्यं[13] धर्मराजोऽपि तद्वशः ।३५।

पानं [14]कन्यासनं शय्या वाहनन्तु विचारितम् । भुञ्जानो महदाप्नोति मृत्युकृच्छ्रं तथा गदम् ।३६।

[15]न हि अनिच्छती बाला भुञ्जनीया कदाचन। न च तामुद्वहेन्नाथ[16] शृणु पूर्वकथामिमाम् ॥३७।

त्वञ्च वेत्सि यथान्यायं[17] तथापि च शृणु लोकतः[18] ॥३८॥

क्रौञ्चद्वीपे पुरावृत्तं राजा नाम्ना सुमेधसः । तस्य पत्नीसहस्राणि अष्टावष्टाभवत् किल ॥३९॥

सर्वसम्पत्तिसम्पन्नः समस्तबलवाहनः । भुञ्जन् पृथ्वीमिमां नाथ ससमुद्रां सकाननाम् ॥४०॥

---

१. सुसेन
२. वक्तृणां ग ।
३. यत्वेवं क ।
४. बुद्धिश्च क ग ।
५. कुतो० क ग ।
६. नारदः पथगः क ।
७. ज्यश्यन् क ।
८. नयतौ ह्यस्मान्वाचमानापि भाषयेत् ग ।
९. शापजं क ग ।
१०. नग्नचण्डीभीरूवनान्तगात् क ।
११. कन्दुकी क ख ग
१२. बन्धिका क ।
१३. देश्यन् क । देशान् क
१४. कल्पासनं क ग ।
१५. नाहं क ।
१६. तामुद्वाहयेन्नाथ क ।
१७. स्पष्टं क ग ।
१८. लोकय क ग ।

तावत् कालेन महता परिक्रामन् परं किल । द्वीपं शाकाह्वयं[1] नाथ तस्मिन् क्रीडन् यथाविधि ।४१।
[2]सोऽशृणोत् पुष्करे कन्यामृषे रूपसमन्विताम् । सर्वलक्षणसम्पन्नां सर्वाभरणभूषिताम् ॥४२॥
तावत् स तत्रगो नाथ न पश्येदृषितापसाम् । सा कन्या भद्रनामा च [3]तामुद्वाहसमुत्सुक : ॥४३॥
कामार्त्तो विह्वलीभूतो न विन्द्यादपरं[4] क्वचित् । अनिच्छमानापि तथा गृहीता पाणिना करे ।४४।
सा कन्या [5]भद्रनाम्नी च रुदन्तीं न मुमोच सः ।तथा स तां भुञ्जयित्वा गतो द्वीपं नराधिपः ।
शाकाह्वमागतस्तावत् पुष्करे मुनिसत्तमः[6] ॥४५॥
तेन सा विमना[7] दृष्टा[8] रुदमाना तु कन्यका । पप्रच्छ सर्वमाख्यातं यथावृत्तं सुरेश्वर ॥४६॥
श्रुत्वा क्रोधसमाविष्टः शशाप तमृषिर्नृपम् । [9]सुमेधसस्ततो यातो नरकं भूतलादभूत् ॥४७॥
एवं नाथ न सांपत्न्यशङ्कया [10]असुरेश्वर । [11]वारयामि च त्वां स्वामिन् तव राज्यसुखार्थिनी ।४८॥

ब्रह्मोवाच ।

नारदेन वचः श्रुत्वा घोरबुद्धिविवर्धनम् । मोहना जप्यते विद्या पदमालेति भैरवा ॥४९॥

शक्र उवाच ।

कथं सा भैरवा विद्या किंवीर्या किंपराक्रमा । जप्तव्या केन विधिना कथं प्राप्ता च शङ्करात् ।
विद्या मोहनशीला या ससुरासुरमानवान् ॥५०॥

ब्रह्मोवाच ।

आराध्य नन्दिना पूर्वं देवदेवं जगद्गुरुम् । योगाभ्यासेन महता तदा तस्य ददर्श ताम्[12] ॥५१॥
[13]दृष्ट्वा देवेश्वरं शम्भुं पप्रच्छेमं वरं शृणु ।तथा तेन समाचिन्त्य विघ्नपापप्रणाशनीम्[14] ॥५२॥
पदमालां महाविद्यां सर्वदेवनमस्कृताम् । याचयामि सुरेशानमुमादेहार्धहारिणम् ॥५३॥

नन्दिकेश्वर उवाच ।

यदि मां वरदो देवस्तुष्टो वा त्रिदशेश्वरः । तदा लोकहितार्थाय पदमालां प्रयच्छ नः ॥५४॥

---

१. नाम क ग । २. स शृण्वन् क ग । ३. मुद्वाहन क ग ।
४. न चिन्त्यादपरं क्वचित् ग । ५. वाम क । रामनाम्नी ग ।
६. स कन्यां रमणार्थी तु रुदन्तीञ्च न मोचते ख । ७. विमला क ।
८. दृष्ट्वा क ग । ९. सुमेधाः स ग्लो जातो नरकं क ग ।
१०. ससुरेश्वरः क । ११. च त्वां क ग । १२. तम् क ग ।
१३. भूत्वा देवेश्वरः शम्भुः पप्रच्छेयं क ग । १४. विनाशनीम् क ग । १५. धारिणम् क ।

ईश्वर उवाच ।

शुक्रेण च तपस्तप्तं तेन विद्या पुरार्थिता[1] । नहि दत्ता मया तस्य देवानां विघ्नकारकः ॥५५॥
त्वया हि याचिता[2] वत्स मया भक्त्या तथेति च । दातव्या शृणु तत्त्वेन [3]भूत्वासनसमाधिगः ॥५६॥

[मन्त्र]

ॐ नमो भगवति "चामुण्डे श्मशानवासिनि तथा खट्वाङ्गकपालहस्ते महाप्रेतसमारूढे, महाविमान मालाकुले[4] कालरात्री बहुगणपरिवृते महामुखे[5] बहुभुजे घण्टा डमरूकिङ्किनि अट्टाट्टहासे, किलिकिलि हूं[6] दंष्ट्रे[7] घोरान्धकारिणि नानाशब्दबहुले गजचर्मप्रावृत्तशरीरे रुधिरमांसदिग्धे, लेलिहानोग्रजिह्वे महाराक्षसि रौद्रे[8], दंष्ट्राकराले भीमाट्टहासे[9] स्फुरद् विद्युत् समप्रभे चलचल, चकोरनेत्रे हिलिहिलिललनजिह्वे वी भ्रूकुटिमुखे ॥

हूङ्कारभयत्रासिनि कपालवेष्टितजटा मुकुटशशाङ्कधारिणी सर्वविघ्नविनाशिनि ।
इदं कर्म साधय साधय शीघ्रं त्वर[11] त्वर कर[12] अङ्कुशेन शमय अनुप्रवेशय ।
बन्ध[13] बन्ध कम्पय कम्पय चल चल चालय चालय रुधिरमांसमद्यप्रिये हन हन कुह कुह ।
छिन्द छिन्द मारय मारय[14] वज्रशरीरमानय आनय ।
त्रैलोक्यगतमपि[15] दुष्टमदुष्टं[16] वा गृहीतमगृहीतं वा आविशय आविशय ।
क्रामय[17] क्रामय नृत्य नृत्य बन्ध बन्ध कोटराक्षि ऊर्ध्वकेशि उलूकवदने ।
करङ्किणि करङ्कमालाधारिणि[18] दह दह पच पच गृह्ण गृह्ण मण्डनमध्ये ।
प्रवेशय प्रवेशय किं विलम्बसि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन ऋषिसत्येन ।

---

१. विद्यापुरार्थिना ।
२. याचितो.....उक्तस्थेति च क
३. भूम्या क ।
४. महाविशालमालागले क । ५. महामुखे क ग ।
६. हूँ क ग ।
७. दंष्ट्राघोरा क । ८. भीमाट्टाट्ट क ।
९. श्री क ग ।
१०. अट्टाट्हासे किलिकिलि हूँ हूँ दंष्ट्रघोरान्धकारिणि इत्यधिकः पाठः क । हूँ हूँ दंष्ट्राघोरान्धकारिणि ।
११. दुर दुर क ।
१२. कभृ कभृ (?) क, त्वरत् कह कह ख ।
१३, रंग रंग कलयय चल चल चालय चालय क ।
१४. अनुब्रूम इत्यधिकः क ।
१५. शतमपि क ।
१६. दृष्टमदृष्टं क ।
१७. कामय कामय क ।
१८. वराङ्गमाला ख ।

भैरव उवाच ।

साधुदेवि महाप्राज्ञे अपूर्वं[1] पृच्छते विधिम् । प्रवक्ष्यामि न सन्देहो येन सिध्यन्ति साधकाः ॥६९॥

[मन्त्र]

ॐ नमो भगवति चामुण्डे नमः । [2]आनयेति सर्वत्र वीरव्रतं लक्षं जपेत सम्मतो भवति ।

ॐ श्मशान वासिनि नमः । अनया श्मशान प्रवेशनम् ॥

ॐ खट्वाङ्ग कपाल हस्ते नमः । अनया मन्त्रावलम्बनम् ॥

ॐ महाप्रेतसमारूढे नमः । अनया सर्वशस्त्र स्तम्भनम् ॥

ॐ महाविमानमालाकुले नमः । वृष्टिवारणम् ॥

ॐ कालरात्री नमः । अन्तर्धानकरणम् ॥

ॐ वहुगणपरिवृत्ते[3] नमः । जल साधनम् ॥

ॐ महासुखे[4] बहुभुजे नमः । शस्त्रमोक्षणम् ॥

ॐ घण्टा डमरूकिङ्किनीनाद शब्दबहुले नमः । अनया सर्वविघ्ननिवारणम् ।७०।

मारीप्रवेशनम् = ॐ अट्टहासे नमः ।

खड्गस्तम्भनम् = ॐ स्फुरितविद्युत्प्रभे नमः[5] ।

परसैन्यस्तम्भनम्—ॐ चल चल चकोरनेत्रे नमः ।

कपालमथनम् समस्त मर्त्याकर्षणम्[6]—ॐ हिलि हिलि ललनजिह्वे नमः ।

स्त्रियाकर्षकणम्— ॐ श्रीं भृकुटिमुखे नमः ।

विसर्जनम्—ॐ हुंङ्कारभयत्रासिनि नमः ।

सर्वसत्त्ववशीकरणम्—ॐ कपालमालावेष्टित जटामुकुटशशाङ्कधारीणि नमः ।

परमन्त्रच्छेदनम् = ॐ अट्टहासे किलि किलि नमः ।

---

१. अपूर्वंव्रत पृच्छकि क।
२. अनया वीरव्रतेन लक्ष क ।
३. परिते क ।
४. महामुखे ख ।
५. अयं पाठो नास्ति ख ।
६. कपालमथनात् सर्वमर्त्याकर्षणम् ख ।
७. अयं पाठो नास्ति ख ।

भैरवीकरणम्—ॐ विभो[1] नमः ।

स्वयं देव्या असाध्यं साधयति—ॐ विच्चे नमो नमः ।

ग्रहग्रहशायनम्[3]—ॐ हूं हूं [2]नमः ।

आवेशनम्—ॐ दंष्ट्राघोरान्धकारिणीं नमः ।

भस्मना नृत्यापयति—ॐ सर्वविघ्नबिनाशिनि[4] नमः ।

उपसर्ग निवारणम्—ॐ ऊर्ध्वकेशि नमः ।

कापालिक साधनम्–ॐ उलूकवदने करङ्किणि नमः ।

रिपुक्षोभणम्[5] वशीकरणञ्च डमरूकेण—ॐ करङ्कमालाधारिणि नमः ।

उन्मत्तकहोमेन उन्मत्तीकरणम्—ॐ विकृतरूपिणि[6] नमः ।

सर्पैर्दशापयति—ॐ कृष्ण-भुजङ्गवेष्टितशरीरे नमः ।

नृत्यापयति—ॐ प्रलम्बोष्ठि नम, ।

भञ्जयति—ॐ भग्ननासिके[7] नमः ।

मोचापयति[8]—ॐ चिपिटामुखे[9] नमः

पुरदाहजनम्—ॐ कपिलजटे ज्वालामुखि नमः ।

सर्वज्वरावेशकरणम्—ॐ रक्ताक्षि घूर्णापय[10] नमः ।

ततः कृष्णाम्बरधरः कृष्णामाल्यानुलेपनः वीरव्रतधारी श्मशानवासी भैक्ष्याहार एकैकस्य पदस्याष्टसहस्रं जपेत् । कृतपुरश्चरणे भवति तिलानां त्रिमधुराक्तानामष्टसहस्रं जुहुयात् सिध्यति ॥

---

१. विच्चे ख ।
२. हूँ इत्येकमेव बीजं ख ।
३. गृणापनम् ख ।
४. विनाशिनि ख ।
५. पुरक्षोभजननम् ख ।
६. रूपधारिणि ख ।
७. भग्ननासिके ख ।
८. शोधापयति-इति क पुस्तकस्य पाठान्तरे ।
९. चिपिटमुखि ख ।
१०. घूर्णमादाय ख ।

महामांसेन त्रिमधुनाक्तेन अत्यद्भुतानि कर्माणि करोति ।
अन्यकल्पोक्तानि च करोति । अथर्ववेदविहितानि करोति ।
साक्षाद् भैरवैः देवैः सिद्धैस्तु परिपूज्यते ॥७१॥

एवं देवी महाविद्या चामुण्डा पदमालिनी । निबद्धा[1] शतमष्टाग्रकर्मणां ह्युपपादिनी ॥७२॥

कुरुते[2] कोटिधा कर्मयोगयुक्तस्य पार्वति ।
सकृदुच्चारणाद् विद्या ब्रह्महत्यां व्यपोहति ॥७३॥

सर्वतीर्थाभिषेकन्तु सर्वव्रतफलानि च । जपेन श्रवणाद्वाथ सर्ववर्णेषु यच्छति ॥७४॥

सर्वोपसर्गशमनी सर्वव्याधिनिवारिणी । अभक्ताय न दातव्या यस्तु देवीं न पूज्यते[3] ॥७५॥

इति श्रीदेवीपुराणे "पदमालिनी-मन्त्रविद्या" नाम नवमोऽध्यायः[4] ।

---

१. निरुद्धा ख ।
२. कुर्वते क।
३. पूजति ख ।
४. पदमालिनी महाविद्या समाप्ता ख ।



# दशमोऽध्यायः ।

## योगप्रकरणम्-(प्रथमः परिच्छेदः)

शक्र उवाच ।

नन्दिना पदमालाया देव्यास्तैर्भुवि विक्षिता[1] ॥

तस्याः साधन-वीरोक्तं[2] कथं तां[3] नारदो लभेत् ॥१॥

ब्रह्मोवाच[4] ।

सनत्कुमारं वरदं तपसा धूतकल्मषम् । मम पुत्रं महाप्राज्ञं शिवभावेन भावितम् ॥२॥

तेन आराध्य नन्दीशं शिवतुल्यं महाव्रतम् । परिपृछ्य यथान्यायं योगशास्त्रमनुत्तमम् ॥३॥

शिवसिद्धान्तमार्गेण वेदशास्त्रागमेन च । यथा तु प्राप्यते योगस्तथा मे ब्रूहि तत्त्वतः ॥४॥

स च योगं समासाद्य कृतबुद्धिर्महामुनिः । विद्याञ्च प्राप्तवाँस्तस्य नन्दीशस्य प्रसादतः ॥५॥

तथा तेनापि सा विद्या संयोगान्नारदाय च । आराध्यमानः[5] कालेन दत्तवान् मुनिपुङ्गवः[6] ॥६॥

येन योगेनासौ योगी सविद्योऽप्यजरामरः । तपते[7] ध्रुवमार्गस्थः शिवयोगप्रभावतः ॥७॥

शक्र उवाच ।

येन योगेन सा विद्या व्रतहीनेऽपि सिध्यति । तच्च देव समाख्याहि[8] येनैव सर्वतो भवेत् ॥८॥

किं योगः केन वा देवः प्राप्यते सुरपूजित । एतदेव महाभाग्यं[9] श्रोतुमिच्छामि तत्त्वतः ॥९॥

---

+ शुक्र ख ।

१. देव्या ते तु विधिश्रुता-ख ।

२. साधनं वीरोक्तं ख ।

३. स ख ।

४. अयं पाठो नास्ति ख.

५. आराध्यमाना ख ।

६. मुनिसत्तमे ख ।

७. तपति क ।

८. यच्च देव समाख्याहि येन सर्वन्महो भवेत् । ख ।

९. महाभाग ख ।

ब्रह्मोवाच ।

सनत्कुमारं वरदं कोटिसूर्यसमप्रभम् । मेरुपृष्ठाश्रितं दृष्ट्वा सर्वभूतनमस्कृतम् ॥१०॥
प्रणम्य शिरसा तस्मै योगाचार्याय नारदः । परिपृच्छति यत्नेन सुसूक्ष्मं योगमुत्तमम् ॥११॥
भगवन् ! श्रोतुमिच्छामि तन्मे कथय सुव्रत ! । केनोपायेन तद्योगं प्राप्यते ऋषिसत्तम ! ॥१२॥
तस्मै प्रोवाच भगवान् सर्वशास्त्रविशारदः । शृणु नारद वक्ष्यामि योगं संक्षेपतस्तव ॥१३॥
पुष्पभूतेषु शास्त्रेषु मधुवत् सारमुद्धृतम् । योगधर्मं प्रवक्ष्यामि नमस्कृत्वा महेश्वरम् ॥१४॥
ज्ञानाद् भवति वैराग्यं वैराग्याद् धर्मसञ्चयः । धर्माच्च योगो भवति योगान्माहेश्वरा गुणाः ॥१५॥
पूर्वं ज्ञानागमं कृत्वा विरक्तो[1] धर्ममाचरेत् । अतिप्रसङ्गो[2] ज्ञानेषु न कार्यः सिद्धिमिच्छता ॥१६॥
धर्मः प्रयत्नतः कार्यो योगिनान्तु विशेषतः । नास्ति धर्मादृते योग इति योगविदो विदुः ॥१७॥
यथादेशं यथाकालं यथाद्रव्यं यथाक्रमम् । यथोपदिष्टः कर्त्तव्यो धर्मो धर्मफलार्थिभिः ॥१८॥
न सुखानि च धर्मश्च नाधर्मश्चासुखानि च । सुखार्थी वा त्यजेत् धर्मं धर्मार्थी वा त्यजेत्सुखम् ॥१९॥

वरं नोपार्जितो धर्मो न चैवापरिरक्षितः ।
तस्मात् कृत्स्नस्य[3] धर्मस्य कर्त्तव्यं परिरक्षणम् ॥२०॥

अन्यथा क्रियते धर्मो अन्यथा चोपदिश्यते । कर्त्तव्यश्चोपदेष्टव्यो धर्मो धर्मपरायणैः ॥२१॥
सर्वधर्मान् परित्यज्य यतिधर्मं समाचरेत् । यतिधर्मपरिभ्रष्टो अधर्मफलमश्नुते ॥२२॥
यतिधर्मस्य सद्भावः श्रूयतां गुणदोषतः । अप्रमादात् परा सिद्धिः प्रमादान्नारकी ध्रुवम् ॥२३॥

पूर्वं धर्मं चरित्वा व्रत-यम-नियमैः शास्त्र-दृष्टैरुपायै
र्भूयो मानुष्यभावे हल-शकट-घटैः क्लेशयित्वा शरीरम् ।
दृष्टान् भुञ्जीत भोगान् विशसन[4] रचितान् प्रायशो धर्मलब्धान्
पश्चाद् भिन्ने तु देहे प्रविशति नरकं दुष्कृतञ्चोपभुङ्क्ते ॥२४॥

इति सनत्कुमारीये योगशास्त्रे प्रथमः परिच्छेदः ।[5]

---

१. निरक्तो क ।
२. अभिप्रसङ्गो ख ।
३. कृतस्य ख ।
४. विषमधु० ख ।
५. इत्याद्ये देव्यवतारे सनत्कुमारीय प्रयोगे प्रथमः ख ।

### योग :—द्वितीयः परिच्छेदः[1] ।

अविशेषा विशेषेभ्यः कारणत्वात् पराः स्मृताः । इन्द्रियेभ्यश्च तेभ्यश्च अहङ्कारो विशिष्यते ॥१॥
अहङ्कारात् परा बुद्धिः सर्वतश्चाग्रजो[2] महान् । महतः परमव्यक्तमव्यक्तात् परमः परः ॥२॥
सर्वकारणिभिर्गूढैर्यस्यान्तो नोपलभ्यते । तच्च विंशतितमं तत्वं[3] पुरुषादीश्वरः परः ॥३॥
यः श्रेष्ठः[4] सर्वभूतानां कारणानाञ्च कारणम् । तमीशानं शिवं ज्ञात्वा नरो निर्वाणमर्हति[5] ॥४॥
अष्टौ प्रकृतयो ज्ञेया विकाराश्चैव षोडश । कार्यञ्च कारणञ्चैव द्वारा द्वारित्वमेव च ॥५॥
विपर्ययो ह्यशक्तिश्च तुष्टिः सिद्धिरनुग्रहः । सुखं दुःखञ्च मोहश्च प्रमाणान्यतराणि[6] च ॥६॥
एवमष्टविधं ज्ञेयं तैर्यग्योन्यञ्च पञ्चधा । सर्वमेकञ्च मानुष्यमेतत् संसारमण्डलम् ॥७॥
तत्त्वसर्गं[7] भावसर्गं भूतसर्गञ्च ये विदुः । ईश्वरं पुरुषञ्चैव विद्वान् स खलु उच्यते ॥८॥

तत्पक्षको यस्तु विविक्त[8]बुद्धिर्जितेन्द्रियो नित्यमहिंसकश्च ।
विज्ञाय साङ्ख्यं परमञ्च योगं योगाभ्यासात् सर्वदुःखान्तमेति ॥६॥

इति सनत्कुमारीये योगशास्त्रे द्वितीयः परिच्छेदः[9] ।

---

### योग :—तृतीयः परिच्छेदः[10] ।

ईश्वरः पुरुषो व्यक्तः येऽर्थाः प्रागपि सूचिताः । तेषां साधर्म्यवैधर्म्यमुपदेक्ष्यामि तत्त्वतः ॥१॥
सवसूक्ष्माद्यनुत्पन्नाः[11] सर्वे सर्वगताश्च ते[12] । सर्वे नित्या ह्यकम्पाश्च सर्वे संसर्गधर्मिणः ।२।

---

१. अयं पाठो नास्ति ख ।
२. सर्वतत्त्वाग्रजो ख ।
३. तत् षड्विंशतिमत्तत्त्वं ख ।
४. स्रष्टा ख ।
५. परं निर्वाणमृच्छति ।
६. लिङ्गं प्राणाष्टकं ज्ञेयं गुणांश्च सह वृत्तिभिः ।
निमित्तं नैमित्तिकञ्च सञ्चरात् प्रतिसञ्चरम् ॥
अव्यक्तञ्चैव व्यक्तञ्च अनित्यं नित्यमेव च ।
अचेतनं चेतनञ्च अभोग्यं भोग्यमेव च ॥
इदमधिकं पञ्चद्वयम् ख । क पुस्तकस्य पाठान्तरेऽपि ।
७. सङ्गम् ख ।
८. उपेक्षको यश्च विरक्त० ख ।
९. द्वितीयः ख ।
१०. इति पाठो नास्ति ख ।
११. ह्यनुत्पाद्या ख ।
१२. ये ख ।

अव्यूहिका अवष्टब्धाः सर्वे निरवयवाश्च ते । भूतप्रेतस्य[1] लिङ्गाश्च प्रधानपुरुषेश्वराः ॥३॥

त्रिगुणं प्रसवं धर्ममङ्गं भोग्यमचेतनम् । अस्वतन्त्रमशुद्धञ्च प्रधानमिति चोच्यते ॥४॥

निर्गुणौ चेतनौ[2] शुद्धावुभौ प्रसवधर्मिणौ । [3]ज्ञानत्वमथ कर्तृत्वं भोक्तृत्वमुभयोरपि ॥५॥

अनेकगुण[4]सम्पूर्णः प्रोच्यते गुणवृद्धिभिः । सापेक्षोऽदर्शकारी च असर्वज्ञो ह्यसर्वकृत् ॥६॥

एकः पतिः समः पूर्णो[5] अप्राप्तो[6] गुणवृद्धिभिः । निरपेक्षो दर्शकारी सर्वज्ञः सर्वकृच्छिवः ॥७॥

अस्वतन्त्रमिदं सर्वं जगत् स्थावरजङ्गमम् । यत् साङ्ख्यानाञ्च[7] बुध्यन्ते रुद्रमायाविमोहिता ॥८॥

अनन्तशक्तिर्भगवान् सर्वयोगेश्वरेश्वरः । पशूनामर्थसिद्ध्यर्थं सर्वार्थेषु प्रवर्तते ॥९॥

कारणात्[8] सर्वभूतानां संसारपरिवर्तिनाम् । ईश्वरस्याप्रमेयस्य प्रवृत्तिमृषयो विदुः ॥१०॥

अग्रं दुष्टं[9] तामसानां विधत्ते रजसा दुःखं राजसानां विधत्ते ।

परमं सौख्यं सात्विकानां विधत्ते कर्मापेक्षा हीश्वरस्य प्रवृत्तिः[10] ॥११॥

इति सनत्कुमारीये योगशास्त्रे तृतीयः परिच्छेदः[11] ।

---

## योग :—चतुर्थः परिच्छेदः[12] ।

यावच्छरीरं ध्रियते यावद्बुद्धिर्न हीयते । तावज् ज्ञानञ्च योगञ्च सेवेद्वैराग्यमेव च ॥१॥

इहैव परमं दुःखं परत्र परमं सुखम् । तस्माद् दुःख प्रहाणार्थं योगधर्मं समाचरेत् ॥२॥

धृतिमान् सर्वतत्त्वज्ञोऽप्रमादी नियमे स्थितः । परं[13] वैराग्यमास्थाय ध्यानयोगपरायणः ॥३॥

जितेन्द्रियो जितप्राणो जितनिद्रो जिताशनः[14] । जितश्रमो जितद्वन्द्व स्वल्पमात्रपरिग्रहः ॥४॥

अनिर्विण्णोऽप्रतिष्ठश्च निर्ममो निरहङ्कृतिः । निरामिषो निरपेक्षो निर्द्वन्द्वो निष्परिग्रहः ॥५॥

अहिंसकः सत्यवादी शुचिः सन्तुष्ट एव च । अक्रोधनो धर्मचारी[15] गुरुभक्तो ह्यकम्पनः[16] ॥६॥

---

१. ओतप्रोतव्य० ख । २. चेतसी ख । ३. ज्ञातृत्वमथ ख ।
४. अनेकपशु० ख । ५. सुसम्पूर्णो ख । ६. सर्वहृच्छिवः ख ।
७. ये संख्यानाव-ख ८. कारुण्यात् ख । ९. अग्रयं दुःखं ख ।
१०. धर्माधर्मादीश्वरस्य ख । ११. इत्याद्ये देव्यवतारे तृतीयोऽध्यायः । १२. अयं पाठोनास्ति । ख ।
१३. इहत्र ख । अमुम् इति क पुस्तके पाठान्तरम् । १४. जितासनः ख ।
१५. ब्रह्मचारी ख । १६. ह्यकल्मषः ख ।

सन्दिग्धः सर्वभूतेषु सर्वलोकजुगुप्सितः । पुण्यान् देशाँश्चारेन्नित्यं समलोष्ठाश्मकाञ्चनः ॥७॥
सकृद्भैक्ष्यं दिवा सेवेद्रात्रौ च स्थण्डिले वसेत् । परिपूताभिरद्भिश्च नित्यं कुर्यात् प्रयोजनम् ॥८॥
सन्निधानं न कुर्वीत सर्वावस्थोऽपि भिक्षुकः । सन्निधानकृतैर्दोषैर्यतिः सञ्जायते कृमिः ॥९॥
सर्वदुःखप्रतीकारं नैव कुर्यान्न कारयेत् । उपेक्षया वा क्षपयेदथ शीघ्रमुपक्रमेत् ॥१०॥
ग्रीष्महैमन्तिकान् मासानष्टौ भिक्षुर्विचक्रमेत् । दयार्थं सर्वभूतानामेकत्र वर्षणामुषेत्[1] ॥११॥
अनिवृत्ते च न ऋतौ पुनस्तत्र प्रतिवसेत् उत्सृष्टतैल[3]वसनो ह्युपपन्नभैक्ष्यो ।
भैक्ष्यवृत्तिरव्यक्तलिंगी विचरेत् पृथिव्याम् यत्रास्तमेति रविरावसथः पथः स तप्स्यति[4] ॥१२॥

इति सनत्कुमारीये योगशास्त्रे चतुर्थः परिच्छेदः ।

---

योग :—पञ्चमः परिच्छेदः[5] ।

शून्यागारे गवां गोष्ठे वृक्षमूले चतुष्पथे । नदीतीरे श्मशाने वा देवतायतनेषु[6] च ॥१॥
अप्रच्छन्ने निवाते च निःशब्दे जनवर्जिते । असंसक्ते शुचौ देशे योग-दोष-विवर्जिते ॥२॥
स्नात्वा शुचिरुपस्पृश्य प्रणम्य शिरसा[7]भवम् । योगाचार्यान् नमस्कृत्य योगं युञ्जीत योगवित् ।३।
पद्मकं स्वस्तिकं वापि स्थालिकं जलिकं तथा । पीठार्धं चन्द्रदण्डञ्च सर्वतोभद्रमेव च ।।४॥
आसनं रुचिरं बद्ध्वा ऊर्ध्वकाय उदङ्मुखः । नान्य[9] पद्माञ्जलिं कृत्वा निश्चलः सुसमाहितः ।५।।
इन्द्रियाणीन्द्रियार्थेभ्यः सर्वेभ्यो विनिवर्त्तयेत् । सर्वसङ्गान् परित्यज्य आत्मन्यात्मानमाश्रयेत् ॥६॥
उत्तमान् मध्यमान् मन्दान् सगर्भांस्त्रिविधांस्तथा । प्राणायामान् शनैः कुर्यात् कुम्भरेचकपूरकान् ।७।

प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्विषम् ।

प्रत्याहारेण विषयान् ध्यानेनापीश्वरान् गुणान् ॥८॥

गायत्र्या योगसिध्यर्थं जपं कुर्यात् समाहितः । वाचिकं बाह्यजप्तं वा[10] भक्त्या मानसमेव च ॥९॥
जप्यन्तु चिन्तयेन्नित्यं न च शून्यो भवेद्द्विजः । स्थित्वा कालान्तरं किञ्चिदोमित्येतदनुस्मरेत् ॥१०॥

---

१. वर्षा वसेत् ख ।
२. चेल० ख ।
३. तस्य ख ।
४. चतुर्थः खः ।
५. अयं पाठो नास्ति ख ।
६. यतनेऽपि ख ।
७. योगाचार्यं ख ।
८. स्थलिकं पनिकं तथा ख ।
९. नाभ्यां० ख ।
१०. वाऽप्युपांशुर्वा ख ।

ओंकारं प्रणवो ब्रह्म अक्षरं परमं पदम् ।
इत्येते ध्यायनोपाया[१] ऋषिभिः परिकीर्तिताः ॥११॥
यम-नियम-रतानां बहु-विघ्न-भयेषु च लब्ध धैर्याणाम् ।
भवति जयो विदुषां प्राण-वायु-धारण-लब्ध-लक्षणानाम् ॥१२॥

इति सनत्कुमारीये योगशास्त्रे पञ्चमः परिच्छेदः ।

———

योग :—षष्ठः परिच्छेदः ।

यमानां नियमानाञ्च अवान्तरक्रियासु च । सर्वदिग्देशकालेषु योगाभ्यासो विशिष्यते ॥१॥
यदि स्यात् पातकं किञ्चिद् योगी कुर्यात् प्रमादतः । योगमेव निषेदेत नान्यं मन्त्रं कदाचन ॥२॥
सर्वेषामेव मन्त्रानां योगमन्त्रं विशिष्यते । तस्माद् योगः सदा सेव्यः सर्वावस्थागतैरपि ॥३॥
यस्तु कायकृतान्[२] भोगान् ध्यायमानन्तु सेवते । अल्पवीर्यं हि तद्योगं योगशास्त्रेषु गर्हितम् ॥४॥
यो ध्यात्वा युञ्जेत[३] ध्यानं यज्ज्ञेयं यत्प्रयोजनम् ।
सर्वाण्येतानि यो वेत्ति स योगी योक्तुमर्हति[४] ॥५॥
आत्मा ध्याता मनो ध्यानं ध्येयः सूक्ष्मो महेश्वरः । यत्तत् परममैश्वर्यमेतद्ध्यानप्रयोजनम् ॥६॥
द्वे ब्रह्मनी वेदितव्ये शब्दब्रह्मपरञ्च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥७॥
अन्तः शरीरप्रभवमुदानप्रेरितञ्च यत् । वागुच्चार्यं श्रोत्रवृत्ति शब्दब्रह्म तदुच्यते ॥८॥
शब्द ब्रह्म परं ब्रह्म तस्मिन् क्षीणे यदक्षरम् । सदा तं मनसा ध्यायेद् यदीच्छेच्छ्रेयः आत्मनः ।९।
वक्तुकामो यदा वाच्यमर्थं सम्प्रति पद्यते । बुद्ध्यहङ्कारसंयुक्तो तथा ध्यानं समाचरेत् ॥१०॥
उपलब्धिः स्मृतिर्ध्यानं सङ्कल्पः प्रणवं प्रति । कल्पना भावना चिन्ता ध्यानमित्यभिधीयते ॥११॥
पवनविरहितो यथा प्रदीपः स्थित इव लक्ष्यते निश्चलस्वभावः ।
विषयविरहितं तथा हि चित्तं स्थितमिव लक्ष्यतेऽमितप्रवृत्ति ॥१२॥

इति सनत्कुमारीये योगशास्त्रे षष्ठः परिच्छेदः[६] ।

———

१. ध्यानिनोपायान् ख । २. पञ्चमः ख । ३. कामकृतान् ख ।
४. ध्याता ख० । ५. योगमर्हति ख । ६. षष्ठः ख ।

योग :—सप्तमः परिच्छेदः ।

ध्यायमानस्तमोङ्कारं प्राणैर्यदि वियुज्यते । तस्य तत् परमैश्वर्यं भिन्ने देहे प्रवर्त्तते ॥१॥

ओंकाराद् भ्रश्यते चित्तं क्षिप्तं क्षिप्तं[1] पुनः पुनः ।
शब्दादिभिरसम्पृक्तं भूयस्तस्मिन् नियोजयेत्[2] ॥२॥

अनिर्विण्णस्तु युञ्जानः श्रान्तः श्रान्तः पुनः पुनः । कालेन तदवाप्नोति गुह्याद्गुह्यतरं पदम् ॥३॥

देव-मानुष-तिर्यक्षु जन्तुः कर्म-वशानुगः । तावद् भ्रमति संसारे यावद्योगं न विन्दति ॥४॥

निवृत्तं सर्व सङ्गेषु बुद्धया चाधिष्ठितं मनः । चित्तमोङ्कारसंयुक्तं योगाय न निवर्त्तते ॥५॥

अनेन क्रमयोगेण यस्योङ्काराधिवासितम् । तस्योङ्कारं परित्यज्य चित्तं नान्यत्र गच्छति ॥६॥

एकमात्रं द्विमात्रं वा त्रिमात्रं कृत्स्नमेव च । ह्रस्वं दीर्घं प्लुतं शान्तं शान्तेन मनसोद्वहेत् ॥७॥

तैलधारामिवाच्छिन्नां दीर्घघण्टानिनादवत् । ओङ्कारसन्ततिं कुर्याद् विशुद्धेनान्तरात्मना ॥८॥

विशुद्धमनसा युक्तः शान्तात्मा मोहवर्जितः । आसाद्य परमं योगमक्षयं लभते पदम्[3] ॥९॥

ओङ्कारेण विशुद्धात्मा परं ब्रह्माधिगच्छति । परे ब्रह्मणि सन्ध्याय संसाराद्विप्रमुच्यते[4] ॥१०॥

यो ज्ञात्वा बहु-विध-दोष-दुष्टमेतत्[5] संसार सततमभिप्रवर्त्तमानम् ।
योगाय प्रवर्त्तते योगमार्गवेत्तासौ[6] भुङ्क्ते फलमतुलं शिवप्रसादात् ॥११॥

इति सनत्कुमारीये योगशास्त्रे सप्तमः परिच्छेद.[7] ।

---

योगः—अष्टमः परिच्छेदः ।

एकाग्रप्रणिधानञ्च अप्रमादात् तथैव च । युञ्जानस्तु सदा योगं योगद्वारं प्रपश्यति ॥१॥

योगद्वारं परं गुह्यं सर्वतापप्रणाशनम् । पवित्रमतुलञ्चैव दुर्द्दर्शमकृतात्मभिः ॥२॥

न तं पश्यन्ति विबुधा[8] न तिर्यञ्चो न मानुषाः । कामभोगपरिव्यग्रा बहूपकृतकिल्विषाः ॥३॥

---

१. क्षिप्रं क्षिप्रं ख ।
२. संयुक्तं योगाय न निवर्तते ख ।
३. लभते परमं पदम् ख ।
४. सन्धाय आसंसाराद् विमुच्यते ख ।
५. दृष्टमेतं ख ।
६. आत्मवेत्ताऽसौ-ख।
७. सप्तमः ख ।
८. त्रिदशा ख ।

योगद्वारेण यतयो युक्तात्मानो दृढ़व्रताः । ओंङ्काररथमारुह्य गच्छन्ति परमां गतिम् ॥४॥
योगद्वारमतीतानां नान्यो लोको विधीयते । यद्गत्वा न निवर्त्तन्ते प्रासादा[1]च्छंकरस्य च ॥५॥
यथा पथि हितं मार्गं गमनायोपपद्यते । तद् ब्रह्ममयं तत्त्वमैश्वर्यायोपपद्यते ॥६॥
तस्य ब्रह्ममयं तत्त्वं भित्त्वा मनसि वर्त्तते । अवशस्यापि सततं तस्य सिद्धिर्न दूरतः ॥७॥
येन येन हि भावेन मनः संयुज्यते नृणाम् । तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥८॥
इष्टद्रव्यं यथा कश्चित् प्रणष्टमिव[2] चिन्तयेत् । तद्वत् सुसूक्ष्मोङ्कारं प्रणष्टमपि चिन्तयेत् ॥९॥
गुरुवचननियुक्ता ज्ञानविज्ञानतृप्ताः कलिकलुषवियुक्ताः[3] सर्वधर्मानुरक्ताः ।
विविधगुणमहान्तं शंङ्करं वा[4]ऽनुरक्ताः प्रणवनियतचित्तास्ते कृतार्था द्विजेन्द्राः ॥१०॥

इति सनत्कुमारीये योगशास्त्रेऽष्टमः परिच्छेद[5] ।

---

योगः --नवमः परिच्छेदः ।

चित्तोत्पत्तौ न चोत्पत्तिर्न च चित्तक्षये क्षयः । अनादिमध्यपर्यन्तः सर्वव्यापी महेश्वरः[6] ॥१॥
भावोत्पत्तौ तयोः सङ्गमन्तःकरणपूर्वकम् । भावाभावौ तयोरेव नियोग उभयोरपि ॥२॥
न दीर्घो न चासौ ह्रस्वो न प्लुतश्च महेश्वरः । ध्यानकाले निमित्तं हि सर्वथा ह्युपचर्यते ।
शब्द-तत्त्वे च भावे च संज्ञायामक्षरेषु च ॥३॥
पञ्चस्वर्थेषु सततमोङ्कारमिति निर्दिशेत् । तत्त्वचिन्ताभिसंवद्धं[7] चिन्ता मनसि वर्तते ॥४॥
मनः क्षेत्रज्ञसंयुक्तं स्वशरीरे व्यवस्थितम् । शब्द स्पर्शस्तथा रूपं रसो गन्धस्तथैव च ।
सम्प्राप्तो नोपलभ्येत[8] एतद् युक्तस्य लक्षणम् ॥५॥
सुखदुःखञ्च मोक्षञ्च स्वशरीरेण[9] विन्दति । शीतोष्णं नाभिजानाति एतद् 'युक्तस्य लक्षणम्' ।६।
शङ्ख-दुन्दुभि-निर्घोषैर्विविधैर्गीत-वादितैः । क्रियमानैर्न वुध्यते एतद् युक्तस्य लक्षणम् ॥७॥

---

१. रक्तात्मानो-ख ।
२. प्रसादा० ख ।
३. प्रणष्टमपि क ।
४. विमुक्ताः क ।
५. ये ख ।
६. भावोत्पत्ती......इत्यारभ्य महेश्वरः इति यावत् पाठो नास्ति ख ।
७. सम्बन्धं ख ।
८. सम्प्राप्ता नोपलभ्यन्ते ख ।
९. मोहञ्च स्वे शरीरे ख ।

योगकर्मणि युक्तस्य विशेषाद् विघ्नकारकाः । उपसर्गाःप्रवर्त्तन्ते तान् जित्वा प्राप्यते सुखम् ॥८॥

उपसर्गेऽपि सृष्टस्य[1] नैव सिद्धिर्न साधनम् । तस्माद् विघ्नाः सदा हेयाः शास्त्रदृष्टेन कर्मणा ॥९॥

प्रतिमा श्रवणञ्चैव वेदनं स्पर्शनं तथा । भ्रमो मोहस्तथा वर्त्त उपसर्गाः प्रकीर्तिताः ॥१०॥

व्यपगत-कलुषाणां नित्य-स्नानोदकानां शिवमतिपरमार्थो[2] जप्यभैक्ष्येन्धनानाम् ।

गुरुवचन-रतानां नित्य-धर्मोद्यतानां दर्शनमपि पुण्यं योगमार्गस्थितानाम् ॥११॥

इति सनत्कुमारीये योगशास्त्रे नवमः परिच्छेदः[3] ।

---

योग :—दशमः परिच्छेदः ।

धारणां सम्प्रवक्ष्यामि कर्तव्या या प्रयत्नतः । मनसो हृद्यवस्थानं धारणेत्यभिधीयते ॥१॥

यथा चक्षुः प्रकाशेन दृष्टरूपाणि पश्यति । तद्वत् सूक्ष्मयोगेन युक्तस्तत्त्वानि पश्यति ॥२॥

निर्मलत्वाद् यथादर्शे प्रतिबिम्बानि पश्यति । तद्वद् विशुद्धे मनसि निष्कलं ब्रह्म पश्यति ॥३॥

यथा ज्ञानप्रकाशेन सुसूक्ष्मार्थान् प्रपश्यति । तद्वत् सुसूक्ष्ममोङ्कारं प्रणिधानेन पश्यति ॥४॥

निर्गुणं मनसा ग्राह्यमनौपम्यं महाद्युतिम् । प्रधानपुरुषेशानं सर्वभूतपतिं शिवम् ॥५॥

स्थितं स्थितेन मनसा शुद्धं शुद्धेन चेतसा । परापरस्वरूपेण यत्सूक्ष्ममुपनयेत् पुनः ॥६॥

[4]तच्चित्तस्तन्मयो युक्तस्तन्निष्ठस्तत्परायणः । दोषैर्योगाग्निनिर्दग्धैः शिवं पश्यति शाश्वतम् ॥७॥

अनुत्पाद्यं सर्वगतं सर्वज्ञं सर्वकारणम् । [5]अक्षतैश्वर्य-सम्पन्नं देवमेकं महेश्वरम् ॥८॥

यं दृष्ट्वा लभते सिद्धिं समानगुणलक्षणम् । यं दृष्ट्वा जन्म-मोहाभ्यां नैव संयुज्यते पुनः ॥९॥

एष संक्षेपतो योगो व्याख्याने चास्य विस्तरः । महर्षीनामनुकम्पार्थमुद्धृतो मम सूनुना ॥१०॥

[6]यत्प्राप्य नारदः सिद्धो विद्याविद्यार्थ तत्त्वतः ।

इदममृतपदं शिवप्रसादात् प्रवचनमुक्तवान् सनत्कुमारः ।

[7]अनधिगतमपि करोति सिद्धिं परमिह विन्दते स रुद्रतत्त्वम् ॥११॥

इति सनत्कुमारीये योगशास्त्रे दशमः परिच्छेदः । इत्याद्ये देवीपुराणे दशमोध्यायः ।[8]

---

१. उपसर्गोपसृष्टस्य ख उपसर्गाय इति क पुस्तकस्य पाठान्तरे । २. परमाग्नौ ग । ३. नवमः ख ।
४. तस्मात्तत क. । ५. अकृतैश्वर्य० ख । ६. यं प्राप्य ख ।
७. अनधिगत० क । ८. इत्याद्ये देव्यवतारे सनत्कुमारीयं दशाध्यायिकं योगशास्त्रं समाप्तम् ।

# एकादशोऽध्यायः ।

ब्रह्मोवाच ।

प्राप्तयोगो यदा शत्रुर्नारदो मुनिसत्तमः । तदासौ जपते विद्यां विधिना शिवभाषिताम् ॥१॥
एवं प्राप्ता पुरा[1] वत्स सिद्धा विद्या च नारदे । तदा स साधयेच्छत्रुस्तस्या वरप्रसादतः[2] ॥२॥

शक्र उवाच ।

एवं विद्या यदा सिद्धा कथं मर्त्त्येषु[3] सा गता । एतदिच्छामि विज्ञातुं प्रसादात् प्रब्रवीहि नः ॥३॥

ब्रह्मोवाच ।

पूर्वं मया महाप्राज्ञ! सृष्ट्यर्थं परमेच्छया । विद्यानां[4] याचितः शम्भुस्तथा चाप्यपराजितम्[5] ।
भविष्यानाञ्च कार्याणां मन्वन्तरयुगादिषु ॥४॥
सा मया कर्त्तुकामेन दत्ता विद्या प्रजापतेः । तत अङ्गिरसे[6] तेन अङ्गिराश्च[7] बृहस्पते ॥५॥
गुरुणा सवितुर्दत्ता तेन मृत्योः प्रकाशिता । मृत्युना चापि इन्द्रस्य वशिष्ठस्य ततो गता ॥६॥
वशिष्ठेनापि सा दत्ता तथा सारस्वते पुनः । सारस्वतास्त्रिधामाय त्रिधामा त्रिवृषाय च ॥७॥
त्रिवृषेण भरद्वाजे अन्तरीक्षस्य आगता । अन्तरीक्षेण बह्वृचे बह्वृचस्तांरुणेश्च[8] ददौ ॥८॥
तस्यारुणेन बलजे[9] तेनापि च कृतञ्जये । कृतञ्जयेन ऋणजे भारद्वाजेन प्राप्तवान् ॥९॥
भारद्वाजेन सा दत्ता गौतमस्य महामुनेः । गौतमादुत्तमिं[10] प्राप्ता उत्तमिश्च[11]हर्यच्चंने ॥१०॥
हर्यच्चंने[12] पुरोधा तु तेन वाजश्रवाय[13] च । वाजश्रवास्तथा[14] सोमे सोमाच्छुष्मादनोऽलभत् ।११।
शुष्मादनात् तृणविन्दुस्तृणविन्दोस्तरक्षुकः । तरक्षौ शक्तिणा प्राप्ता शक्तेः पराशरेण तु ॥१२॥

---

१. सुरा ख ।
२. तस्य वरप्रभावतः ख ।
३. मर्त्येतु ख ।
४. विद्येमां ख ।
५. च अपराजिताम् ख ।
६. औशनसे ख ।
७. औशनेन ख ।
८. त्रय्यारुणी ख ।
९. त्रयारुणेन धनजे ख ।
१०. दुत्तमे ख ।
११. उत्तमे च हर्यच्चंने ख ।
१२. हर्यच्यवात् ख ।
१३. च-ख ।
१४. जतु ख ।

पराशराज्जातुकर्णो[1] जातुकर्णात् तथा पुनः। द्वैपायनेन सम्प्राप्ता एवं मर्त्ये समागता।

विद्या लोकोपकाराय[2] दृष्टादृष्टप्रसाधनी ॥१३॥

नारदेन तथा शक्र जप्ता विद्या महोदया। यया सम्मोहितो वत्स असुरः सह मन्त्रिणा।

तथा मतिं समाधाय गिरिकन्या पतिं प्रति ॥१४॥

शक्र उवाच।

पद्माला महाविद्या सुरासुरविमोहिनी[3]। एतत् कार्यकरी विद्या तथा चाप्यपराजिता ॥१५॥

सूचिता हि न सा उक्ता किं वीर्या कथमागता?।

ब्रह्मोवाच।

यथा देवास्तथा दैत्या उभावेतौ व्यवस्थितौ। अनादिदेवस्तु[4] तथा यथा सृष्टिस्तथा क्षयः ॥१६॥

पूर्वमासीन्महाबाहो हुताग्निर्नाम दानवः। मम होमावसाने तु उत्पन्नः सुरमर्द्दकः ॥१७॥

माञ्चापश्यत् तथा[5] सो वै लयः कर्त्तुं समुद्यतः। तपसा महता तेन तोषितोऽहं पुरन्दर ॥१८॥

वरं ब्रूहि मया सोक्तो याचितञ्च[6] तदा विभो। जयामि त्रिदशान् सर्वान् सविष्णून् सपुरन्दरान्।१९।

तथेति स मया उक्तस्तथासौ पृथिवीतले। गतो द्वीपं महाबाहो शाकं सर्वमनोरमम् ॥२०॥

स च तत्र समाः स्थित्वा दश पञ्च च वासव। उद्वाहिता तदा[7] तेन कालपुत्रस्य पुत्रिका ॥२१

तस्य पुत्रो वज्रदण्डश्चण्डतुल्य पराक्रमः। तेन द्वीपाधिपान् जित्वा दिवमुत्सहते जये ॥२२॥

निर्जित्य सर्वदेवांस्तु तथा विष्णुमभिद्रवत्। तस्य केतो स्थितो[8]ध्वाङ्क्षः सर्वकेतुभयङ्करः ॥२३॥

तथा मया महादेवं तोषयित्वा त्रिलोचनम्[9]। वराय वरयाञ्चक्रे विष्णोः केत्वर्थतस्तदा ॥२४॥

वरं ब्रूहि शिवस्तुष्टो यत् ते हृदि व्यवस्थितम्। मया स याचितो देहि केतुं दैत्यनिवारणम्[10]।

विष्णोस्तु यत् सदा देव साहाय्यं विजयावहम् ॥२५॥

तेन किङ्किणिशोभाढ्यं घण्टाचामरमण्डितम्। विचित्रपीठकोपेतं[11] शतसूर्यसमप्रभम् ॥२६॥

---

१. जतु।
२. लोकोपचाराय ख।
३. विमोहनी ख।
४. अनादिवैरं ख।
५. तदा ख।
६. याचितोऽहं ख।
७. तथा ख।
८. केतुस्थितो ख।
९. त्रिशूलिनम् ख।
१०. निबर्हणम् ख।
११. विचित्रपटकोपेतं ख।

वृषाङ्कगरुडावस्थं[1] शङ्खचक्रगदाधरम् । महच्चित्रं सुरोपेतं दुर्गमूर्ध्वं यमासनम् ॥२७॥
इन्द्र-वह्नि-यमै-रक्षोजलवातैर्धनाधिपैः । ईशान-सूर्य-कालाश्च राहु-रार्कि-शशीन्दुजैः ॥२८॥
गुरुणा सर्वतोभद्रं कृत्वा दत्तन्तु[2] शम्भुना । तं दृष्ट्वा स्तवते विष्णुः स्तवेन बृषभध्वजम्[3] ॥२९॥
जय कृष्ण करालास्य कृष्णमेघसमप्रभ । कृष्णसार[4] महाबाहो कृष्णसर्पविभूषण ॥३०॥
कृष्णशान्तिकरो देव कृष्णदंष्ट्राभयङ्कर:[5] । नीलस्यन्दपरिध्वान्ततमः षड्वारुणोपमः[6] ॥३१॥
महाकपालमालाय ब्रह्मशिरोनिकृन्तन । सर्वग[7] सर्वदेवेश सर्वावस्था-दिगम्बर ॥३२॥
श्मशानभस्मभूयिष्ठ भस्मभूषणभूषित । कृष्णमेखलधाराय वासुकी-उपवीतिने ॥३३॥
सर्वजन्तुहितार्थाय वेदवेदाङ्ग[8] वादिने । यज्ञेश यज्ञहोता च यज्ञभावाय वै नमः ॥३४॥
ग्रह-ज्वर-महारूप-शमनाय नमो नमः । सर्वात्मना महादेव त्वया[9] वापि सुरेश्वर ॥३५॥
विघातः सुरशत्रूणां कर्तव्यो वृषभध्वज । स तथेति तदा तुष्टः केतुं तस्य समर्पयत् ॥३६॥
तव विष्णो महाबाहो केतुं सम्पश्य वैरिणः । येऽसुरा ये च गंधर्वा ये दैत्या महाबलाः ॥३७॥
ते ते नाशं समाजग्मुस्तवकेतुप्रदर्शनात् ॥
तथेति विष्णुना उक्ता गृहीतं तच्च सादरम् । उच्छ्रयित्वा तु तं हन्याच्चण्डं तं हतवह्निजम् ।३८।
शक्रस्य तु पुनर्दत्ता सर्वशत्रुविनाशिनी । एवं ते कथितं वत्स यथावृत्तं सुरेश्वर ॥३९॥

शक्र उवाच ।

केन सा विधिना लब्धा मम तुल्य परागतैः[10] । विशेषतो विधिं तस्य पृच्छामि कथयस्व नः ॥४०॥

ब्रह्मोवाच ।

गङ्गायाः सिकतासंख्याः क्रियन्ते सुरसत्तमः । न भवेद् दैत्यवंशस्य देवराज जिगीषिणः ॥४१॥
विष्णुना घातिताः केचित् केचिद्देवेन शम्भुना । गुहेन निहताश्चान्ये मया केचित् जिघांसिताः ॥४२॥
देवीभिर्बहवश्चान्ये तथापि न क्षयोऽभवत् ॥४३॥

---

१. गरुडोपस्थं ख ।
२. दन्तु ख ।
३. वृषवाहनम् ख ।
४. कृष्णभाव० ख ।
५. भयङ्कर ख ।
६. वरुणोपम ! ख।
७. सर्वगः ख ।
८. वेदान्त० ख ।
९. मया ख ।
१०. वंशक्रमागतैः ख ।

सुबलो नाम दैत्येन्द्रो हंसकेतु[1]र्महाबलः । मम वंशे समुत्पन्नो दण्डघातस्य वासव ॥४४॥

सुबलेन[2] जिता देवाः भौत्ये मन्वन्तरे विभो । समागताः समस्तास्तु सह इन्द्रेण वासव ॥४५॥

यथा न शक्ताः समरे दैत्यान् योद्धुं पितामह । शत्रूणां परिभूतानां शरणं त्वां गता वयम् ॥४६॥

यथाहं चिन्तयामास शक्रविष्णुदिवौकसाम् । केतुना शम्भुदत्तेन उदितेन[3] असंशयम् ॥४७॥

ततो मयासुराः सेन्द्रा विष्णुमाराधयन् पुरा । स दास्यति महाकेतुं सर्वदैत्यविमोहनम् ॥४८॥

ते गता मम चादेशात् क्षीरोदे यत्र केशवः । परापरस्वरूपस्थमजमव्ययं शाश्वतम् ॥४९॥

श्री वत्साङ्कं महाबाहुं कौस्तुभोरस्क भूषणम्[4] । स्तुवन्त्येते समहेन्द्रा देवाः शत्रु भयार्दिताः ॥५०॥

तुतोष केशवस्तेषां वरं ब्रूहि पुरन्दरः । तदा 'तैर्याचितो देवः केतुं ददौ सुरारिहा[5] ॥५१॥

तेन तद् भूषयित्वा तु दत्तं देव भयापहम् । श्वेतच्छत्र महातेजः स्रग्मालापिटकान्वितम् ॥५२॥

सूर्यायुतसमप्रख्यं किङ्किणीवर-नादितम् ।चामरव्यजनोपेतं शम्भुलक्षणलक्षितम् ॥५३॥

तद्दृष्ट्वा सौबलं सैन्यं मग्नं स च निपातितम् । तदा प्रभृति हे शक्र ! केतुस्तव क्रमागतः ॥५४॥

अन्येषाञ्चैव राज्ञाञ्च उच्छ्रयो विजयावहः । मया हरेण देवेन विष्णुना वासवेन च ॥५५॥

यद्दत्तं कश्चिद्देवेदं नृपतिरुच्छ्रयिष्यति । स समस्ताधिपो भूमावजेयश्च भविष्यति ॥५६॥

अगस्त्य उवाच[6] ।

एवं शक्रस्य शब्देन कथितं केतुमुच्छ्रयम् । मयापि तव विद्येश सर्वं तच्च प्रकाशितम् ॥५७॥

इत्याद्ये देवीपुराणे इन्द्रोच्छ्रयलब्धिर्नामैकादशोध्यायः[7] ।

---

१. सर्पकेतु० ख ।
२. तेन पूर्वं ख ।
३. उच्छ्रितेन ख ।
४. कौस्तुभो वक्षभूषितम् ख ।
५. सहेन्द्रा वै ख।
६. ददस्व चारिहा ख ।
७. इतिपाठो नास्ति ख ।



# द्वादशोऽध्यायः ।

नृपवाहन उवाच ।

भगवन् श्रोतुमिच्छामि तस्य उत्थापनं यथा । क्रियते दिन ऋक्षे तु द्रव्य-मंत्र-विधि वद ॥१॥

अगस्त्य उवाच ।

ब्रह्मणा कथितं पूर्वं[१] बृहस्पति-समीपतः । यथा तथा प्रवक्ष्यामि विधिं केतोः समुच्छ्रेय ॥२॥

वहस्पति उवाच ।

शुभे ऋक्षेऽथ[२] करणे मुहूर्त्ते शुभमंगले । दैवज्ञः सूत्रधारश्च वनं गच्छेत् सहायवान् ॥३॥
देवी प्रतिष्ठाविधिना यात्रा या[३] वा प्रचोदिता । गत्वा वृक्षं शुभं नेष्टं धवमर्जुनं प्रियंगुकम् ॥४॥
उदुम्बराश्च कर्णश्च पंचैते शोभना हरेः । ध्वजार्थं वर्जयेद्वत्स देवो उद्यानजान् द्रुमान्[४] ॥५॥
कन्या मध्या[५] तु या षष्ठी करमानेन कल्पयेत् । एकादशकरा वत्स नव-पञ्च-करा-परा ॥६॥
अवनीष्ठां कृमिविद्धां तथा पक्षिनिषेविताम्[६] । वल्मीक-पितृ-वनजां सशुष्क-कोटरां तथा ॥७॥
कुब्जां च घटसिक्तां च तथा स्त्री-नाम-र्गहिताम् । विद्युद्वज्राहतां चैव दग्धां च परिवर्जयेत् ॥८॥
अलाभे चन्दनमास्त्रं कलं[७] शाकमयं च वा । कर्त्तव्यं शक्र सिद्धार्थं[८] न चायं वृक्षजं क्वचित् ॥९॥
शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम । ततः संपूजयेद्वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा[९] ॥१०॥
नमो वृक्षपते वृक्ष त्वामाराधयति[१०] पार्थिवः । ध्वजार्थं तद्वतो नाथ अन्यथा तेत्र गम्यताम् ॥११॥

---

१. शक्र ग ।
२. शुभाहे ऋक्षे क । शुभा ऋक्षं ग ।
३. यात्रायां ग ।
४. देव उद्यानजान् द्रुमान् ग ।
५. कल्पमध्ये ग ।
६. अवलत्वां कृपिद्धां तथा यक्षनिषेविताम् ग ।
७. शालम् ग ।
८. चिन्हार्थे ग ।
९. प्राङ्मुखोदं सुखोऽपि वा ग-ख ।
१०. त्वामाचरति ग ।

रात्रौ देयो बलिस्तत्र युगवृक्षं तथैव च । वासवानां महावृक्ष कृत्वा चान्यत्र गम्यताम् ॥१२॥
ध्वजार्थे देवराजस्य न क्षान्तिस्तव अत्र च । पूजयित्वा ततो वृक्षं बलिं भूतेषु[1] दापयेत् ॥१३॥
प्रभाते छिन्दयेद् वृक्षं शुभ स्वप्नादिदर्शनैः । शुक्लाम्बरधरं चैव समुद्रतरणं नदी ॥१४॥
वृक्षान् नम्रान् शुभ्रान् क्षीणानारोहयेद् देवतालयम् । देवं द्विजं[2] तथा साधुं लिङ्गं ब्रह्म हरेरपि ।१५।
प्रतिमा पूजिता स्वप्ने क्षिप्रं सिद्धिः फलप्रदा । मत्स्य-मांस दधि-लाभ-रुधिरं मृतरोदनम् ॥१६॥
अगम्य-गमनं दृष्ट्वा आशुसिद्धिः शुभप्रदा । द्रुमाद्रि-लंघनं धन्यं शत्रुनाशस्तथाशुभः ॥१७॥
फल-पुष्प-सिता दूर्वा स्वप्ने लब्धा जयावहा । शंखं गावस्तथा दंति लाभो[3] राज्य-प्रदायकाः ।१८।
गौः सवत्सा नवसूता दृष्टा पुत्र-फल-प्रदा । पंकमुत्तरणं रूपे[4] व्याधि मोक्षकरं चिरात् ॥१९॥
एवं स्वप्नान् शुभान् दृष्टवा तथा छिन्देत पादपम् । उदङ्मुखः प्राङ्मुखो वा मधुर-क्राक्त-पर्शुना ।२०॥
पूर्वोत्तरेण पतनंमशब्दः शुभदो व्रणः । अलग्नः[5] पादपे चान्ये अन्यथा तु परित्यजेत् ॥२१॥
अष्टांगुलं त्यजेन्मूलेग्रेद्धं तु जले क्षिपेत् । तथा तमानयेद्वत्स शकटेन वृषेण वा ॥२२॥
प्रधानैर्बलसम्पन्नैर्नयेत्तत्पुरतः पुरम् । नीयमाना यदा यष्टी समाना[6] चतुरस्त्रका ॥२३॥
वृत्ता वा भंगमाधत्ते राज्ञः पुत्र पुरोहितान् । आवभंगे बलं भिन्द्यात् नेम्यो नाश क्षयं[7] तथा ॥२४॥
अर्थस्य क्षयभंगेन शांतिं तत्र तु कारयेत् । इन्द्रज-छत्र-मंत्रेण जातवेद समापि वा ।।२५॥
तदा[8] नीत्वा शुभे लग्ने पुरस्तादुपवेशयेत् । द्वारशोभां पथरथ्यां गृहे हट्टे च कारयेत् ॥२६॥
पटु पटह निनादांश्च वेश्यशंखं द्विजातयः । मंगलैर्वेदशब्दैश्च तान्ने याद्यं त्र उच्छ्रयेत् ॥२७॥
तत्रस्थं-चित्रकर्मार-निर्मितैस्तां तु वेष्टयेत् । वस्त्रैश्चांडजवोंडोत्थैः शुभ्रैः सूक्ष्मैर्यथाक्रमम् ॥२८॥
नन्दोपनंदसंज्ञाश्च कुमार्य्यः प्रथमांगगाः । देव्यो जयविजयाख्या षोडशांश-व्यवस्थिताः ॥२९॥
अधिके शक्रजननी दत्ताश्च दैवतैर्ध्वजाः । ध्वज परिमाणत्र्यंश परिधेः प्रथमं पिटम् ॥३०॥
षोडशाँश विहीनानि कुर्याच्छेषाणि बुद्धिमान् । रसनां विचित्रवर्णां प्रथमां दद्यात्स्वयंभुवः ॥३१॥
सुरक्तां चतुरस्त्रां च विश्वकर्मा द्वितीयतः । अष्टां श्रीं तु स्वयं शक्रो नीलरक्तां प्रदापयेत् ॥३२॥

१. भूतेभ्यौ ग ।
२. देवो द्विजस्तथा साधु ख ।
३. नभोराज्य ग
४. कूपे ग ।
५. अनग्नः ग ।
६. समा वा ख
७. मंक्षयम् ग-क ।
८. तथा ग ।
९. चाण्डाल ग ।

कृत्स्नं यमेन वृत्तं च वरुणेन षडश्रकम् । मंजिष्ठा[1] जलदाकारं रथभेदी स्वनः शुभः[2] ॥३३॥
नीलवर्णं च तद् युक्तं स्कंदो बहुविचित्रितम् । वृत्तं तु दहनो दद्यात् सुवर्णञ्च तथाष्टमम् ॥३४॥
वैडूर्यं सतृणमिंद्रो ग्रैवेयं दापयेद्बुधः[3] । चक्रांको कृतिं तु सूर्या विश्वेदेवाः प्रपूजिताः[4] ॥३५॥
झषयोनिं वसं दद्युः पद्मनीलं नीलोत्पलम्[5] । वरुणा शुक्रेण ततो विशालमूर्ध्वतो न्यस्तम् ॥३६॥
ग्रहैर्विचित्राणि बहुमातृभि स्वानि रूपाणि । यत्नेनैव प्रदेयं तु केतोस्तु तस्य भूषणम् ॥३७॥
तदेव न तं विजानीयात् मंत्रादिभिः समुच्छ्रयेत् । प्रथमं प्रविशमानः भूमिं यस्तिष्ठति राष्ट्रम् ॥३८॥
बालानां तालशब्देन देशघातं समादिशेत् । नृपवधकरो विशीर्णं सर्वशान्ता शुभावहा ॥३९॥
चन्द्र-सूर्य-यम-शक्र-सोम-धनद-वारुणैः । वह्नीश-ऋषिमंत्रैश्च होतव्यैः दधिचाक्षतैः ॥४०॥
शुक्र-स्कन्द-गुरु-रुद्र अप्सरादि प्रपाठयेत् । हुत्वा तु विधिवद् वह्निं ज्वालां लक्षेत बुद्धिमान् ॥४१॥
सुतेजाः सुमनोदीप्तः संहतो रविसंप्रभः । रक्ताशोकसमाकारो रथभेरीस्वनः शुभः ॥४२॥
शंख-दुंदुभिमेघानां नादाः शस्त्रास्तु पावके । ततः कदलीक्षुदंडान् पताकाश्च समुच्छ्रयेत् ॥४३॥
अन्याश्च विविधाः शोभाः शक्रकेतुं समुच्छ्रयेत् । प्रौष्ठपदेतु[6] अष्टम्यां शुक्लायां शोभने दिने ॥४४॥
आश्विने वाथ शुक्लायां श्रवणेनाथ उच्छ्रये । पौर-जन-नग्न-वृन्दैः पट्ट-भेरी-निनादितम् ॥४५॥
वितानध्वजशोभाढ्यं पताकाभिः समुज्वलम् । विष्णवीश-शक्रमंत्रेण सिंह रक्षाकृतेन च ॥४६॥
दृढ़ं च मातृकरस्थं शुभतो रणमाकुलम् । अविलंवितमुत्थानं भग्नं पिटकं तथा ॥४७॥
न द्रुतं वा समुत्थाप्यं केतुं वासवजं विभो । उत्थितं रक्षयेत्प्राज्ञः काकोलूककपोतयोः ॥४८॥
नसदलीपनं दद्यादन्येषामपि पक्षिणाम् । यंत्रोद्देशेन तं कुर्य्यान्मुखं केतोर्यथाविधि ॥४९॥
तथा सुसंस्थितं पूज्यं सुखयंत्रस्वयंत्रितम् । रात्रौ जागरणं कुर्य्यादिंद्रमंत्रानुकीर्त्तनम् ॥५०॥
पुरोहितः सदैवज्ञः शुभशांतिरतः सदा । छत्रपातो नृपं हन्यात्पताका महिषीवधम् ॥५१॥
पिटके युवराजस्य ससचिवमनुकंपने । राष्ट्रं तोरणपातेन ध्वजेन अन्नक्षयो भवेत् ॥५२॥
पतिते शक्रदंडे तु नृपमन्यं[7] समादिशेत् । कृमिजालकउत्थाने शलभात्तस्कराद्भयम् ॥५३॥

---

१. मोजिघा ग ।
२. वासुदेवो मयूरकम् क-ग ।
३. गयः ग ।
४. नास्ति गपुस्तके.
५. नीलोत्पलाभासम् ख ।
६. प्रौष्ठपद्यां ग ।
७. नृपमन्त्रं ग ।

सुक्षमे संस्थिते शांतिर्नृपस्य नगरस्य च । यावदुच्छ्रितं तिष्ठन्ति तावत्पौरा हृष्टाः[1] सदा ॥५४॥
केतोर्निरतायजने[2] भुंजीयाद्विप्रकन्याश्च । पूजा यादृशी उत्थाने कुर्यात्पाते तथैव च ॥५५॥
रात्रौ शुभकृत्पातनं दृष्टं काककापोतैः । याति नृपःसहराष्ट्रं केतुं यश्चैव कारयेत् ॥५६॥
नगरे वा पुरे खेटे पौरा यद्येवं कुर्वते । पुरनगरस्य द्वारे वृषसिंह-खगोत्थितम् ॥५७॥
केतुं समस्त घोराणां नाशनं जयदं मतम् । एवं पूर्वं हरिः केतुं प्राप्तवान् वृषवाहनात् ॥५८॥
तथा ब्रह्मस्य तेनैव ब्रह्मणः शक्रमागतम् । तेन सोमस्य ततो दक्षे तज्जन्तुं समागतम् ॥५९॥
तदा प्रभृति कुर्वन्ति नृपा अद्यापि उच्छ्रयम् । एवं यः कारयेद्राजा केतुं विजय कारकम् ॥६०॥
तस्य पृथ्वी वलोपेता सद्वीपा वशगा भवेत् ॥६१॥

इत्याद्ये श्री देवीपुराणे देव्यवतारे ध्वजलक्षणं नाम द्वादशोऽध्यायः[3] ।

---

१. लोकाः क । २. केतोनिरतोजने ख

३. इत्याद्ये देव्यवतारे इन्द्रध्वजलक्षणम् ग ।



# त्रयोदशोऽध्यायः ।

अगस्त्य उवाच ।

एतत् ते सर्वमाख्यातं केतुख्यापनमागतम्[1] । भूयः किं पृच्छसे राजंस्तन्नो ब्रूहि वदामि ते ॥१॥

नृपवाहन उवाच ।

कथितं विद्यामाहात्म्यं योगं नारद-पृच्छितम् । केतोः समुच्छ्रयः पुण्यः सर्वकाम-सुखप्रदः ॥२॥
भूयस्तात पुनः[2] पृच्छेत् कथं घोरो महाबलः । नारदेन सपत्नीकः सहमंत्री विमोहितः ॥३॥

अगस्त्य उवाच ।

यथा स पृष्टवान्वत्स शक्रस्त्वसुरसत्तमः । एवं[3] पितामहं पूर्वं विद्यायोगस्य कौतुकम् ॥४॥
देवं भूयोऽपि संपृष्टो घोर-बुद्धि-विघातनम्[4] । कथं कुर्य्यान्महाबाहो नारदो मुनिसत्तमः ॥५॥

ब्रह्मोवाच ।

तस्य जपनशीलस्य प्रतापात् सुरसत्तमः । देवानां महती वृष्टिः सर्व्वा सुखप्रदा भवेत् ॥६॥
वनस्पतिः समस्ताश्च फलपुष्पैः सुशोभिताः[5] । मोहिता घोरसेना तु सहमंत्रिपुरोहिता ॥७॥
विधर्मपथगा सर्व्वा भर्त्तुरन्वेषणे रता । वंचने तस्य दारादेर्धनस्य विभवस्य च ॥८॥
सन्मार्गं सत्पथं त्यक्त्वा तेन ते मोहितासुराः । विकर्मनिरता वत्स विधर्ममतिशीलिनः ॥९॥
ताश्च शीलमतीं[6] राज्ञीं दिगम्बरपरायणाम् । अनेक व्रत-भूयिष्ठां हेतुवाद-मनोनुगाम् ॥१०॥
पाषंड-सर्व-धर्मस्थां[7] शिव-विष्णु-जुगुप्सिताम् । न चाग्निहरणे भक्तिर्नातिथौ गृहपूजने ॥११॥
न मातरो महाभागा न गावो न च ब्राह्मणाः। एवं सा नारदोच्छिष्टान् धर्मान् कुर्य्यात् सदा सती ।१२।
एवं विधर्म्ममाधाय तस्य घोरस्य वै सभाः[8] । सुपथमुज्झयित्वा तु उन्मार्गेन प्रवर्त्तिरे ॥१३॥

---

१. केतूत्थापन सागरम् क ग । २. अहं ग । ३. देवं ग । ४. विघातकम् ग ।
५. सुशोभितैः क ग । ६. शशीमतीम् ग । ७. पापं तु सत्त्वधर्मस्थां ग । ८. वै सताम् ग ।

घोर उवाच ।

ब्रह्मपुत्र महाबाहो शैलपुत्र्या नये मम[1] । को योग्यो ह्यत्र योधानां द्रुतकार्य्यस्य ब्रूहि नः ॥१४॥

नारद उवाच ।

यतः शशाङ्क-सम्पूर्णा बिलाञ्छन इवानना:[2] । तां दृष्ट्वा मुनयः क्षोभं किं पुनरसुराधिपाः ॥१५॥

तथा त्वं सर्व्व-सैन्येन एको वा विगतायुधः । व्रजस्व यत्र ताः कन्याः शैलराज-सुतोत्तमाः ॥१६॥

दक्षिणा सार्वदैवत्यै[3] पौर्णमास्यां समाययौ । सवाहन-बलामात्यः[4] सपुरोहितः सायुधः ॥१७॥

सुषेण कुरु हुङ्कारं देवल-विभु-दारुणैः । बाण-केशव-चामुण्ड-अनुह्लाद महाबलैः[5] ॥१८॥

सामन्तप्रवरैर्य्योधैर्म्मङ्गलैराशिभिस्तथा[6] । मुहूर्ते अभिजिन्नाम्नि मध्याह्ने त्यजते पुरम् ॥१९॥

तस्य निर्गच्छतो वेगात् श्वानो वास्थिमुखोऽभवत् । ध्वजे रुरोह कापोतः शिवा श्यामा च दक्षिणा ।२०।

पिङ्गला रुरुगोधा च शूकरी कबलास्तथा । गज-बानर-सेनाज-शिखिच्छिवा च वामतः ।।२१॥

पन्थानं भिन्दते सर्पः कुम्भोदकं व्यशीर्य्यत[7] । रुराव वानरो ऋक्षो मार्ज्जारो ह्यतिभैरवम् ॥२२॥

तैल-तक्र-तृण-केश मुण्डाभ्यक्तादि दर्शनम् । वान्तोन्मत्त-जड़-मूक क्षुत्क्षाम-नक्रजं वरम् ॥२३॥

तुष कार्पाशलवणं निन्दितानाञ्च दर्शनम् । रक्ताम्बरधरं मुण्डं पङ्कामिषं तथा वसाम्[8] ।२४॥

ललाटं शक्रजं चापमुल्कापाता ध्वजाननाः[9] । दिशां दाहो महीकम्प सरजः कलुषंनभः ॥२५॥

निस्तेजास्तपते भानुर्नद्यः प्रतिमुखावहन्[10] । उष्णोदकं महाकूपं दारुणं दीर्घकासु च ।

अकालविकृतिः पुष्पफलानामभवत् तदा ॥२६॥

शीत उष्ण विर्पय्यासा मेघनादाश्च दारुणाः । आरण्य-सत्त्वा ग्रामेषु ग्रामजारण्यवासिनः ।।२७॥

कृष्ण सर्प समूहाश्च शशश्चल[11] पिपीलिकाः । ध्वांक्षाणां महती सेना[12] मृगाणाञ्च तथैव च ।२८।

एते च पुर प्राकारे निपतन्ति वसन्ति च । दुर्गन्धः शर्करो वायुर्दीना योधा हत प्रभाः ॥२९॥

शकृन्मूत्राश्रुपातानि गजा अश्वा[13] प्रचक्रिरे । ध्वजच्छत्र[14] पताकानां स्फुटनं दण्ड भेदनम्[15] ।३०।

---

१. नयनं मम ग ।
२. बिलाञ्जन क ग ।
३. दक्षिणाधीशदैवत्ये ख ।
४. सवाहन बलोमंत्रि क ग ।
५. महारवै क ग ।
६. वाशिभिः ग ।
७. कुम्भोदकं विशीर्यंत ग ।
८. वसा ग ।
९. भयदारुणाः क ग ।
१०. प्रतिमुखावहन् ग ।
११. श्वानः क ग ।
१२. मेहा क ।
१३. अश्वः ख ।
१४. ध्वजछत्र ग ।
१५. भिदना ख ।

कलङ्कमसि-चक्रेषु नाहंताद् दुन्दुभे रवः[1] । ज्यातल त्रुटनं चापे नाराचानाञ्च कुण्टता[2] ॥३१॥
गदानां मुद्गराणाञ्च शीर्णतादाय[3] भिन्नता । शुष्कप्ररोहणञ्चार्कः सार्द्रपातस्तथैव च ॥३२॥
प्रतिमारुदत्[4] प्रस्वेदं मृतकानाञ्च[5] जल्पनम् । गवां रासभमारोहः[6] स्त्रीणाञ्च बह्वपत्यता ॥३३॥
स्त्री सुते[7] अविद्दागादि अजमृत सुशोभनम् । बालानां घातनं युद्धो निर्स्त्रिशः[8] सकलाः प्रजा ॥३४॥
मक्षिकादंशमडुका[9] बहुशो नाश दर्शनम् । निस्तेजा दहने वह्निः[10] सधूमः स्फुटते मुहुः ॥३५॥
एवंविधास्तथोत्पाता दृष्टा[11] घोरेण वासव । प्रपृच्छ नारदं सोऽपि किमेतच्च[12] कृतं द्विज ।३६।

नारद उवाच ।

शैलराजः क्षितिधारीः वासवांशः[13]शिवात्मकः[14]। देवानां ता स्त्रियः[15] कन्याः ह्रियतामसुराधिप ३७
साग्निदेवगणास्तत्र तेनेदमाकुलं जगत्[16] । प्रयाहि मात्रं त्वं तिष्ठ कालो हि बहुदोषकृत् ॥३८॥
तदा स नारदेनोक्तः प्रययौ शीघ्रगामिभिः । विन्ध्याचलस्य रसना नर्म्मदा[17] यत्र निम्नगा ॥३९॥
यत्र सा वीचिकल्लोल-कल गीत[18]-महोत्सुका । मत्तमातंग संघृष्ट तरु-पर्व्वत-सङ्कुला ॥४०॥
यत्र कुररकारंड[19] चक्रवाकोपशोभिता । यत्र वर्हिण पारीन्द्र[20] कलहंसोपनादिता ॥४१॥
राजहंस महावात काल केलीवट्टिट्टिभैः । पारावात शुक[21] सिद्धि सारिकै रूपपाटिभिः ॥४२॥
नक्र मत्स्य महाग्राह[22] मकराकुल चोदका[23] । भ्रमरी सरि चर्म्मार कल सैरन्ध्रि वल्लिका[24] ४३
कालपट्ट महासेन पाठिन झषरोहिताः । गह्वराः सिंह तुण्डो जीवा जलजातयः[25] ॥४४॥

---

१. न हता दुंदुभीखान् क, न । हृतायुः भीरर्वात् ग ।
२. जातनाकुश्त कग ।
३. ताद्यथ ग क ।
४ रोदन क ग ।
५. सूतकानां क ।
६. रांसमारोहः क ।
७. सूतेह्यविद्यांगादि अजाविश्रुणोजनम् क ।
८. घातगा युद्धानिर्स्त्रिशाः क ग ।
९. मयूक क ।
१०. निस्तेजा न दहेद्वन्हिः क ग ।
११. न देव्या क ग ।
१२. पप्रच्छ नारदं सौतं किमेतद्वित क ।
१३. वासवांसः क ।
१४. शिवात्मजः क ग ।
१५. श्रियः क ग ।
१६. सा श्रीर्देव गता तत्र तेनेदमा कुलं जगत् क ग ।
१७. नर्मदा क ग ।
१८. वीचिकल्लोलक ग ।
१९. वैकुरवकारंड क ग ।
२०. पारेन्द्र क ग ।
२१. शुकि, सारिकै, पाठिभिः क ।
२२. मतस्य मत्स्य क ।
२३. कुलि तोदका क ग ।
२४. भ्रमरां शवि चर्मारकण शैरंध्रि वल्लिका क ग । २५. गह्वरासिंह तुंडौष्ठ राजीव जलजाभयः क ग ।

तत्र गत्वा महाबाहो घोरसेनावतिष्ठत[1]। यत्रासौ भूधरेन्द्राणां विन्ध्यो नाम महागिरिः ॥४५॥

यत्र दारित-मातङ्ग-केशरी-नख-मुक्तिभिः[2]। यत्र शूकर संघस्य[3] शूकराश्च भयप्रदाः ॥४६॥

खड्गि-द्वीपि-महागन्डैः रुरु-महिष-शल्यकैः[4]। तरक्षु-[5]ऋक्षशार्द्दूलैः शाखामृग-महामृगैः ॥४७॥

कृष्नसारैः सदाचारैश्चरद्भिः स्वेच्छयान्वितैः। मुनिदारकसंशक्तं सततं समिधानने[6] ॥४८॥

पुष्पपत्र-फलाहारा कन्दमूल-फलाशनाः[7]। वाद्यम्बुकणशाकान्न पक्वमांससमाशनाः ॥४९॥

वेद-वेदाङ्ग-तत्त्वज्ञास्तत्क्रिया ध्यानतत्पराः। योगाभ्यासरता[8] नित्यं शिव-विष्णु-परायणाः ॥५०॥

अनेक शाखशाखान्ता[9] निवसन्ति तपोऽर्थिनः। वेणु[10] सम्भव सन्तान सम्भूता बर्ब्बरा वराः[11] ।५१।

पुलींदाः[12] शवरातङ्काः कपालि[13] म्लेच्छ जातयः। कन्दमूल फलाहाराः यत्र वल्कल-धारिणः ।५२।

गुञ्जाभरण कुष्माङ्गा[14] माला हारावलम्बिनः। शतपत्र-कृता बोढा शुक-पिच्छविभूषणाः[15] ।५३।

धातु-मण्डित-सर्वाङ्गा नित्यं-मुदित-मानसाः। कान्ताङ्ग[16]क्रीडनसक्ताः करिकुम्भ करच्छिदः ॥५४॥

निर्स्त्रिंशप्रसाशतृष्टि दण्डमुद्गरधारिणः। वसन्ति यत्र मातङ्गाः संघशो दन्तधारिणः[17] ॥५५॥

गृहेषु कृत[18]-संस्काराः शाखिच्छाया कृतेषु च। अशोक चूत बकुलमाधवी[19] धनबेणुषु ॥५६॥

अरिष्ट बिष्ट[20] कपालु[21]तमालाज्र्जुन पादपैः।
प्रणष्ट[22] सूर्य्यसन्तापाः[23] शालतालै नभस्पृशैः॥५७॥
इङ्गुदोदुम्बर खर्ज्जूरैः[24] मातुलुङ्गैः[25] सदाड़िमैः।
फलैस्तृप्ति प्रपद्यन्ते बाला मातङ्ग जातयः ॥५८॥

पतङ्गकर संघात छादिताश्च सुपूजिताः[26]। वसन्ति यत्र नीरौघ-मुचः संवर्त्तकादयः ॥५९॥

---

१. वैतिष्ठनां क ग। २. शुक्तिभिः क ग। ३. शूकराश्च भयं प्रदाः क ग। ४. रुरुरोहितशल्लकैः क ग। ५. रिक्षु क ग। ६. सक्ता सक्तं समिधानने क। ७. पुष्पपत्र फलाहाराः स्कंदमूलफलाशनाः क ग। ८. परा क। ९. शाखान्तात् क। १०. रेणु ख। ११. घर्घरारवाः ग। १२. पुलिंदाः क ग। १३. कपाटा क। १४. कृष्णांग क। १५. वोटशुकपिञ्जविभूषणाः क। १६. कांतांक क ग। १७. सज्यकोदंडधारिणः क ग। १८. निज क ग। १९. वकुला चूत माधवी क ग। २०. रिष्ट ग। २१. कम्पिल्लतमालार्जुन क। २२. प्रनष्ट क। २३. संताप क। २४. खर्जुर क। २५. मालतुङ्ग क ग। २६. पतंग कर संहात ग्रीष्मताप सुपीड़िता क।

अथ तस्मिन् महाशैले घोराणीकावतस्थिरे[1] । हयेन रथपादातं बहुधा समावसत[2] ॥६०॥
वाद्यचिन्हखोद्घुष्टा नग्नबृन्द-प्रपीडिभिः[3] । अजायत महानादः सहसा गिरि-पूरकः ॥६१॥
कन्दरेषु विचित्रेषु नादाः प्रतीमुखाहताः[4] । मृगेन्द्रतोषजनकाः कपिसैन्यानुवर्तिनी[5] ॥६२॥
प्रणिर्गता प्रहृष्टात्मा वासवाय वरप्रदा । विचित्रदाम-शोभाढ्या बाला-भरण-भूषिता ॥६३॥
अक्रीडत सा[6] बालाभिः कन्यकाभिः समागता । मार्कण्डऋषयावासं पापौघतमनाशनम्[7] ॥६४॥
तत्र तामागतां दृष्ट्वा मुनीनां सर्व्वसिद्धिदाम् । घोराहरप्रवृत्यर्थं देव्या[8] हेतोः समागता[9] ॥६५॥
दानवापि तदा क्रुष्टाः कालपाशेन वासव । शैलेन्द्रं बोधयामासुः भास्वराद्या महाभटाः[10] ॥६६॥
अज पादे[11] तथा ऋक्षे दानवस्य बरुथिनी । स चाश्विन-प्रथमाहे गिरीन्द्रमवरोहयेत[12] ॥६७॥
तदा दुर्म्मुख नामानं महाबल-पराक्रमम् । अग्रगः[13] सर्व्व सैन्यस्य प्रददौ स तु दानवः ॥६८॥
तत्रैव विजया देवी क्रीडनाय समागता । स च तां प्रेक्ष्य दैत्येन्द्रः कामविह्वलचेतनः ॥६९॥
करं प्रसारयेद् देव्या[14] देवी तमवलोक्य च । गतासुश्च स दुष्टात्मा पपात धरणीतले[15] ॥७०॥
संध्यायां विजया गत्वा कारणाय[16] निवेदयेत् । आगतो दानवो देवि मया स धरणोत्सुकः ॥७१॥

यावत् क्रुद्ध्वा प्रपश्यामि तावत् स विगतासवः ।
तत् श्रुत्वा[17] चिन्तयेद् देवी घोरो ह्यत्र समागतः ॥७२॥

घातनीयो मया दुष्टः पूर्वं शापेन शापितः । घोरोऽपि स्वप्नान् पश्येत्[18] निशान्ते शृणु वासव ॥७३॥
अभ्यङ्गा[19] कटुतैलेन रक्ताम्बरविभूषितः । कुरूंडकुसुमामोद पुष्पमालाभिमालितः[20] ॥७४॥
उद्वाहकरणं प्रेक्ष्य[21] पक्वमत्स्यामिषाणि च । नृत्यन्ते[22] दानवाः सर्व्वे कृष्णवस्त्रविभूषणाः ॥७५॥

---

१. चावक्रीडते क । २. समवासत क । ३. द्युष्टनग्नवृन्द प्रपाठिभिः क । ४. प्रति मुखागताः क ग ।
५. तं श्रुत्वा विजया देव्याच्छंदानुवर्तिनी क ग ।
६. कपिसैन्यमयापट्टा ग ।
७. सं चौघतमनाशनम् क ।
८. देवी क ग ।
९. हंतुं क ।
१०. भासुराद्यामहाभटाः क ग ।
११. तदा क ।
१२. सा चाखिणाः प्रथमाहेगिरीन्द्रमवबोधयेत् क ग ।
१३. अग्रतः क ग ।
१४. देव्यै क ग ।
१५. धारणी तले क ।
१६. कारणायां ख ।
१७. तं स्मृत्वा क ।
१८. स्वप्नात् प्रापश्यन् ।
१९. अभ्यक्तः क ग ।
२०. मालिप्तः ख ।
२१. प्रेक्ष्य पक्व क ।
२२. नृत्यते क ।

कृष्णायसाः सालङ्काराः कृष्ण-स्रग्-गन्ध्य-चर्च्चिताः ।
कृष्णाम्वरधर-स्त्रीभिः सर्व-दैत्या[1]वगूहिताः ॥७६॥

ऊष्ट्रारुढ़ैस्तथा पुम्भिः पाशदण्डोद्यतैर्महान् । नीयते ह्यवशाः सर्व्वे तुषकेशास्थिसङ्कुलैः ॥७७॥
तमोन्धकारे कान्तारे[2] पङ्ककूपगताः परे । शृगालैः श्वभिर्भक्ष्यन्ते ह्यपरे विगतासवः ॥७८॥
अपरे वायसैर्गृध्रैस्तरक्षैर्वानरैः परैः । एवंविधैर्महासत्त्वैः महासैन्यानुपाद्रुतान्[3] ॥७९॥
दृष्ट्वा क्षुभितो घोरश्छर्द्धि मूर्च्छादि विह्वलः[4] । पपात शिखरारूढ़स्ततो भैरवरूपिणी ॥८०॥
जयापुष्पकृता शोभा गर्दभारूढ़वाहनः[5] । अस्थिमाला लसद्ग्रीवा महाशुकरानना[6] ॥८१॥
निर्मांसा केकराक्षी कुद्धकेशा भयंङ्करी[7] । आगत्य सहसा नारी पाशाङ्कुशकरोद्यता ॥८२॥
धूम्रायमाणा च तथा गृहीतोऽयं निरायुधः । याम्याय[8] तथा नीतः अनन्त पथ देवलः ।
एवं दृष्ट्वा तदा घोरः प्रबुद्धः शर्वरीक्षये । ॥८३॥

इत्याद्ये[9] श्रीदेवीपुराणे घोरवधे स्वप्नदर्शनो नाम त्रयोदशोऽध्यायः ॥८४॥

१. सर्वे तेह्य क ग ।
२. तमोंधकारे कांतारे क ।
३. सर्वसैन्यान्उपाद्रुतान् ख ।
४. क्षुभिते घोर श्रूर्दि मूर्च्छादि विह्वलः क ग ।
५. रासभारूढ़ क ग ।
६. ललद्ग्रीवा महाशूल करानना क ग ।
७. मयंकरा क ग ।
८. चाभ्यान क याम्याननं ग ।
९. देव्यवतारे क ।



# चतुर्दशोऽध्यायः ।

इन्द्र उवाच ।

एवंविधैस्तथा स्वप्नैः दृष्टै घोरेण पद्मज । प्रभाते किमभवत् तस्य शुभं वाप्यथवाशुभम् ॥१॥

किं वा सा वाहिनी तस्य तथा मन्त्रि पुरोहितौ । चकार तत् समाख्याहि कौतूहलपरा वयम् ॥२॥

ब्रह्मोवाच ।

शृणु वासव तत्वेन वदतो ह्यखिलं मम । उत्थाय स तदा वीरो देवमन्त्रमनुस्मरन् ॥३॥

तावन्नष्टाः स्मृतिस्तस्य महामोहविमोहितः । प्रतीक्ष्य वासरात् पंच तावत्-कालः समागतः ॥४॥

तेन श्रुत्वा हतं वीरं दुर्मुखमरिसूदनम् । शैलराजेन्द्र-कन्याया विना कोपान्निरायुधः ॥५॥

ततः स कालकालेन प्रेरितो वदतेऽसुरान् ॥६॥

काल उवाच ।

तया निपातितो वीरो दुर्मुखो ह्यरिमर्द्दनः । तां कन्यां कुत्र पश्यामि तन्नो वदत सुव्रताः ।

यदि पर्वतराजेन्द्रो रक्षते सह शंभुना ॥७॥

तथापि प्रत्यनिघ्नामि यदि वा केशवो भवेत् । इत्युक्त्वा तदा कालः पूर्णकालो महाबलः ॥८॥

निवारितः सुषेणेन मन्त्रिणा न च संस्थितः । काल-भैरव-चामुंडा पिङ्गलाक्षा महासुराः ॥९॥

आरुह्य पर्वतं वीरास्तर्ज्जयंस्तां च कन्यकाम् । तान् दृष्ट्वा उष्ट्रारुढ़ान् केचित् स्यन्दन-संस्थिताः ।१०।

जया च अश्वमारोहत् गजमिव महाबलम् । कृपाण पाणिनी तर्ज्य तदा कालं महाबलम् ॥११॥

मायारूपं सुरास्त्रज्ञं युद्धशास्त्र-विशारदम् । मायोत्थं निर्म्ममे[2] सिंहं गजराजभयङ्करम् ॥१२॥

महिषं च महाघोरं यमस्य इव वाहनं । भैरवं तं समास्थाय विजयामभिमर्दयेत् ॥१३॥

---

१. चामुंडपिंगलाख्या, क ग ।  २. निर्मं क ।

यमान्तकस्तथा रौद्रं विभुं प्रह्लाद-दुन्दुभिः । अजितां मृगमारूढां मर्दयेत् सहसा तदा ॥१४॥

वामनैर्दुष्ट-लोभाक्षैर्हालाहल-भयङ्करैः । दशधा वेष्टिता देवी या सा नाम्नापराजिता ॥१५॥

दशधा शतधा चैव तयायुतायलक्षधा । निगूढजंतवः शक्र देवाः पश्यन्ति शङ्किताः[1] ॥१६॥

ततःकर्णिक-नाराच-भुषुण्डि मुद्गरैस्तथा । ववर्ष दानवी सेना देवीनां सहसोपरि ॥१७॥

तदा जया तु संक्रुद्धा शरपातेन पीडिता । प्रासं प्रक्षेपयेत् काले तस्याः सिंह निपातनम् ॥१८॥

तं प्रासघाताहत-छिन्नबन्धं निस्त्रिंशमादाय तदा तु कालः ।
चर्म्मेण वामं भुज पूरयित्वा जयामुखोऽधावत क्रुद्ध कोपात् ॥१९॥
दृष्ट्वा तु कालं सहसा पतन्तं कृपाणपाणिं सुविवृद्ध-मन्युम् ।
जया मुमोचोपरि तस्य शक्तिं कृपाण-घातादपि तां जघान ॥२०॥
शक्तिं हतां पश्य तदा जया तु नाराच-धारा जल वारि वाहैः ।
कालस्य सेनोपरि सा ववर्ष कालोऽपि भिन्नः शतवारणघातैः[2] ॥२१॥
स देविघाताहत भू-निषण्णो लब्ध्वा तु चेष्टां सुविस्रब्ध चेता ।
आदाय वज्राशनि वज्रकोपः क्षुरं प्रमुमोच सुतीक्ष्णधारम् ॥२२॥
तमापतन्तं[3] तु देवी शरेभ्यश्चिच्छेद यान्यान्यपि तस्य मोच[4] ।
एकेन यानमपरेण अश्वा[5]नन्येन छत्रं सपताकदण्डम् ॥२३॥
चिच्छेद सा[6] काल महाबलस्य देवीं शरैस्तस्य विवृद्धमन्युः ।
तथापि कालो गदतां[7] मुमोच देवीमुखो धावितुं[8] सम्प्रवृत्तः ॥२४॥
चक्रेण तं काल भटस्य तंतं देवी विमुक्तेन गता स्वभूमौ[9] ।
कालं हतं भैरव सन्निरीक्ष्य निषण्णमृत्युः स विवृद्धमन्युः ॥२५॥
गदां समादाय जयां प्रवृत्तः खरप्रघातादपि सो गतायुः[10] ।

---

१. सकिता क ।
२. कातराणां घातैः ग ।
३. तु मापतम् क ।
४. तस्य ख ।
५. अश्वाम् क ।
६. या क ।
७. गदया क ग ।
८. धावति ख ।
९. गदा स्व भूमौ ख ।
१० कौरव कग
११ सुखदप्रभातावपि ख ।

एवं स कालो हत-भैरवञ्च[1] चामुण्डपिंगाक्ष महाबलश्च ॥२६॥
मायाविनो मत्तमतङ्गरूपा देव्या समासाद्य ज्वलन्तकोपाः ।
ते देवि वाणाशनि भिन्नरक्षा[2] गतासवः प्रेतपथं प्रयाताः[3] ॥२७॥
एवं हते कालबले अशेषे देवा मुमोचोपरि पुष्पवृष्टिम् ।
मेघाश्च शीतोज्वलवारिविन्दून् वाता ववाहापि दिव्यगन्धाः ॥२८॥
नृत्यन्ति विद्याधर-सिद्ध-संघा महाप्सरा-किन्नर-चारणाश्च । ॥२९॥
इति श्रीदेवीपुराणे देव्यवतारे कालवधोनाम चतुर्दशोऽध्यायः[4] ।

---

१. भैरवस्य ग । २. भिन्नरूपा ग । ३. प्रयाति ग ।
४. इति देव्यवतारे कालवधः ग ।

## पञ्चदशोऽध्यायः ।

ब्रह्मोवाच ।

हते काले[1] कालबल प्रभावे[2] सुहृष्ट देवाः सह वासवेन[3] ।
घोरस्य पत्नी विमना[4] विषण्णा दृष्ट्वा तु शक्र स्तुवते तु देवीम्[5] ॥१॥

शक्र उवाच ।

जय जय सुराणां परित्राणभूते[6] महाहरे सङ्गरसुप्रतापे[7] ।
समस्त भीतान् परिरक्षणाय त्वां देवीं मुक्त्वा अपरो न चास्ति ॥२॥
महाबलं घोरबलं प्रधानं यमस्य वह्नेरपि संचितारम् ।
वयं सब्राह्मणाः सवायुयक्षास्त्वया पुनर्देवि दिवं निविष्टाः ॥३॥
सर्वेऽपि भीता भवतीं प्रणम्य भयेभ्य मुञ्चन्त्यविचारणेन ।
महार्णवे सिंह-गजाभिभूतास्त्वामाश्रिता वीतभया भवन्ति ॥४॥
ज्वालौघकालानल-सम्प्रवृद्धं यं ब्रह्मविष्णोरपि मोहकर्त्ता ।
तं प्रेक्ष्य देवी सहसा महान्तं समं गतं प्रावृषिणेव पांशु ॥५॥
यं दुन्दुभिः ब्रह्मजनाद्र्दनैश्च न निर्जितं भास्कर-वायु-यक्षैः ।
जले[8]सरक्षैः सहसा बिभेति तं देवी दृष्ट्वा भस्मीप्रयातम् ॥६॥
त्वं भूमि वायु ख जलं हुताशं दिशो दिवं सागर ऋक्षचक्रन् ।
यां सर्व्वदेवाः सततं नमन्ति तां देवदेवीं शरणं व्रजामि ॥७॥

---

१. काले हते क ग ।
२. प्रभवे क ।
३. सुरेण ख ।
४. विमानां क ।
५. तनुवते तुदेव्यां ख ।
६. परित्राण भूत् क ग ।
७. महाहर संग वस्तु प्रभाते क । महोदर संगरसुप्रभाते ग ।
८. क्षेज क ।

यां ध्यानयोगैरपि योगशक्त्या[1] ध्यायन्ति नित्यं[2] परतत्त्व देवीम्[3] ।
वेदान्त[4] वादी सततं च कृत्स्नां यां याजिनो नित्यमखेषु यज्वाः ॥८॥
यां सांख्ययोगैः[5] सपतञ्जलाख्यैः सिद्धान्त-मन्त्रैरपि मन्त्रवादी ।
या डाकिनी भूतग्रहैः प्रशस्तान् सत्त्वान् समस्तानपि मोचयेति ॥९॥
न चादिरस्य न च मध्यमन्तं न रूपकान्तिर्न च स्तोत्रमन्यत् ।
यां शंङ्करः सर्व्वगतोऽपि स्तौति तां देवदेवीं शरणं प्रपद्ये ॥१०॥
एवं तां तोषयांञ्चक्रे जयां कालनिवर्हणाम्[6] ।
प्रददौ सा[7] वरं तस्य देवराजस्य वासव ॥११॥
इदं घोरबलं हत्वा भूयोऽपि सुरसत्तमः । तव पुष्टि[8] करिष्यामि सर्व्वकालं पुरन्दर ॥१२॥
यो ह्येतद्विजया स्तोत्रं भक्तितः सम्पठिष्यति । प्रणष्ट-राज्यद्रव्याणि पुनरेव लभिष्यति ॥१३॥

ब्रह्मोवाच ।

श्रुत्वा हतं तदा कालं सह भैरवं पिङ्गलम्[9] । वज्रदण्डस्तदा क्रुद्धो देव्या योद्धुं व्यधावत ॥१४॥
पाश-मुद्गरदण्डाब्ज कुन्त-बाण-कृपाणभृत् । ववर्ष सहसा वज्रः प्रावृण्मेघ इवाम्बुभिः ॥१५॥
न दिशो न तदाकाशं न च भूवायुगोचरम्[10] । लक्ष्यते बाणधारोघैर्वज्रदण्डमहाध्वनैः ॥१६॥
देव्या धनुषि वज्रेण शराः पञ्चाशत् प्रेरिताः । तैर्विविध्य धनुर्देव्या कोपानल-सुदीपिता ॥१७॥
विमोक्षे[11] वारुणं शस्त्रं महामेघ-समप्रभम् । तं नदन्तं महाघोरं विद्युत्पूर्व्वां दिशो दश ॥१८॥
ववर्ष प्लवते सर्व्वा दानवीं वाहिनीं तदा । तं दृष्ट्वा वज्रदण्डेदं महामाया-समुद्भवम् ।
वायुं मुमोच मेघानां तेन ते शमिता घनाः ॥१९॥

---

१. सक्ता ग । २. देवीं ख । ३. वेदी ग । ४. वदन्ति ख ।
५. सांख्ययोगैरपि योग सक्ताध्यायंति सपतं जाख्यैःक । ६. निवर्हणीं क ग ।
७. च क ग । ८. इष्ट ग । ९. सह भैरवपिंगलां ग ।
१०. यमीवरम् ग । ११. वारुणमस्त्रं ग ।

दृष्ट्वा घनान् वज्रानिलेन शान्तान् देवी तदा क्रोधविवृद्धमन्युः ।
मेघाद्रिमाला इव द्रोणतुल्यान् सभूधरान् सर्व्वदिशो विचिक्षिपे ॥२०॥
तं वायुशस्त्रं सहसा निरुध्य वज्राशनिं र्वाण-शिला ववर्षः ।
हत्वा तदश्वान् यदरक्षरक्षम् संसारथिं छत्र धरं च दण्डम् ॥२१॥
जिघांस वज्रं वल-वज्र-वीर्य्यम् शरेण हेमदल पत्रितेन ।
हतन्तु वज्रं सहसा च दृष्ट्वा यमान्तको यत्र जया जयन्तम् ॥२२॥
मुमोच वाणान् सहसा सकोपात् देव्याहतः सोऽपि परं प्रयाति[1]
यमान्तकः प्रेतपथं महान्तम् ॥२३॥

इति देव्यवतारे श्रीदेवीपुराणे वज्रवधोनाम पञ्चदशोऽध्याय[2] ॥२४॥

---

१. प्रयातः क ।

२. इत्याद्ये देव्यवतारे वज्रदण्डवधः क ग ।



# षोडशोऽध्यायः ।

ब्रह्मोवाच ।

हते वज्रे महावीरे हते चापि यमान्तके । घोरसेनाह्विता भूता हतवीर्य्यपराक्रमा ॥१॥
तान् दृष्ट्वा निहतान् वीरान् सुषेणः प्रत्यभाषत । मया त्वं देव-देवानां बुद्धिमद्भ्योधिको मतः ।
येन पूर्व्वं सुरः स्वामी अच्युतः परितोषितः ॥२॥
यः समः सर्व्वभूतेषु स्थावरेषु चरेषु च । यस्य राज्य-मदोत्सेकान्न विकारः प्रवर्द्धितः ॥३॥
यस्य मातृसमाः सर्व्वाः परदाराः स्नुषा इव । यस्य काञ्चनलोष्टानां विशेषो नोपलभ्यते ॥४॥
यस्य शब्दादयो भावा न बाधन्ते मनागपि । यस्य कामजक्रोधादिर्न गणो विशते तनुम् ॥५॥
यस्य दुर्गाष्टकारम्भे नित्यञ्च करुणोदयम्[1] । यस्य व्यूह-क्रियां भावमण्डलं तत्त्ववेदिता ॥६॥
प्रत्यक्षं वर्त्तते नित्यं करस्यमपिधात्रिजम् । यस्य करि महागन्धा मदमत्ता न राष्ट्रजाः ॥७॥
यस्य हारकदण्डानि छत्रेषु न जने क्वचित् । यस्य घाता अश्वोष्ट्रेषु न पुरे न च खेटके ॥८॥
यस्य भूताः प्रियाकोपे कार्म्मुकाणां न विग्रहे । यस्य चाध्वरयज्ञेषु चाश्रुपातो न शोकजः ॥९॥
यस्य शक्ति कृपाणेषु कलङ्को न च भीकृतः । यस्य स्वप्न प्रभा मिथ्या न च वक्तव्ययाजने ॥१०॥
यस्य वाले मुखाभङ्गी[2] न च क्रोधात् भयात्क्वचित् । एवं विधस्य ते देव सर्व्वशास्त्रविदस्य च ॥११॥
आपदो या विशन्तीगास्तन्महदद्भुतं रिपुः ।[3] यावद्यावत् समाधाय[4] घोरो मन्त्री प्रचक्रमे[5] ।१२॥
तावन्नारद आयातो विष्णुब्रह्मेशप्रेषितः । यत्र सा परमा देवी त्रयाणामपि कारणा ॥१३॥
निष्कला शान्तिदानन्ता मुनीनां[6] त्रागर्धामिणी । स्थिता सा वस्त्ररूपेण जया श्री शम्भुराज्ञया ॥१४॥

---

१. ग पुस्तके नास्ति श्लोकोऽयं ।
२. वाणेषु ज्याभंगो ग ।
३. विशंत्ये हतमहत्पद्भुतंविदुः क ।
४. समवाय क ।
५. प्रचमेत् क ।
६. दाशांतामनन क ।

ताश्च कृत्स्नां तदा ध्यात्वा नारदस्तत्त्वविन्महान् । दुर्व्विज्ञेयां महादेवीं मन्त्रनामैस्तुतोष सः ।१५।

॥ नारद उवाच ॥

जय शम्भुनुते देवी जय रुद्रतनूद्भवे । जय केशव ब्रह्मेश उत्पत्तिस्थिति कारकि ॥१६॥

जय-संहार काराय रुद्रदेहभवाय च । जय परार्थ[1] भावेशि जय वागेशि मङ्गले ॥१७॥

जये सर्व्व मते माते जय नामवरप्रे द । सर्व्वगे सर्व्वनामेभ्यः प्रसीद मम शङ्करी ॥१८॥

नामान्युदीरयिष्यामि यानि ते प्रथितं त्रिषु । यैस्तु नामैः सदा लोके अत्रैवमनुगीयसे ॥१९॥

दुर्गा शाकम्भरी गौरी वरदा विन्ध्यवासिनी । कात्यायनी सुप्रसादा कौशिकी कैटभेश्वरी ॥२०॥

महादेवी महाभागा महाश्वेता महेश्वरी । त्रिदशा वन्दिनीशानी भवानी भूतभाविनी ॥२१॥

ज्येष्ठा षष्ठी तमोनिष्ठा ब्रह्मिष्ठा ब्रह्मवादिनी[2] । अपर्णा चैकपापा च सुपर्णा चैकपाटला ॥२२॥

त्रिलोकधात्री सावित्री गायत्री त्रिदशार्च्चिता । त्रिशूलिनी त्रिनयना त्रिपदा त्रिगुणात्मिका ॥२३॥

श्रद्धा स्वाहा स्वधा मेधा लक्ष्मीः कान्ति[3]क्षमावती । वृद्धि समृद्धि बुद्धिश्च शुद्धि संशुद्धि[4]रेव च ।२४।

सर्व्वज्ञा सर्व्वतोभद्रा सर्व्वतोक्षि शिरोमुखी । सर्व्वभूतादिमध्यान्ता सर्व्वलोकेश्वरेश्वरी ॥२५॥

मानवी यादवी देवी योगनिद्राथ वैष्णवी । अरुपा बहुरूपा च सुरुपा कामरुपिणी ॥२६॥

शैलराजसुता साध्वी स्कन्दमाताच्युतस्वसा[5] । जया च विजया देवी अजिता अपराजिता ॥२७॥

श्रुतिः स्मृतिः धृतिः क्षान्तिः शक्तिः शान्तिरथोन्नतिः ।
प्रकृतिः विकृतिः कीर्तिः स्थितिः सन्ततिरेव च ॥२८॥

कालरात्रि महारात्री भद्रकाली कपालिनी । चामुण्डा चण्डिनी चण्डी चामुण्डविनाशिनी[6] ॥२९॥

रुद्राणी पार्व्वतीन्द्राणी शंकरार्द्धशरीरिणी । दीक्षा दाक्षायणी चैव नारी नारायणी तथा ॥३०॥

निशुम्भ–शुम्भदमनी[7] महिषासुरघातिनी । सहस्रनयना धोरा[8] रेवती सिंहवाहिनी ॥३१॥

विश्वावती वीर्य्यवती वेदमाता[9] सरस्वती । मायावती भोगवती[10] सती सत्यवती तथा ॥३२॥

---

१. परार्द्ध क । २. ब्रह्मने ब्रह्म चारिणी क ग । ३.शान्तिः क ग ।
४. सिद्धि क । ५. च्युतम्बरा ख ।
६. चंडा शिखंडिनी क ग । ७. युधिनी क । ८. वीरा क ग ।
९. देवमाता क ग । १०. भगवती क ग ।

समस्त कार्यकरणी ईप्सितार्थ-प्रसाधको । व्रजामि शरणं देवीं शरणागतवत्सलाम् ॥३३॥

भीमामुग्रां तथा धूम्रामम्बिकां त्र्यम्बक-प्रियाम् ।

त्वं ही भावप्रपन्नानां हृदिस्था पापनाशिनी[1] ॥३४॥

जयञ्च समरे नित्यं विद्यालाभञ्च दुर्लभम् । दीर्घमायुरयोत्साहं पार्थिवानाञ्च इच्छताम् ॥६५॥

पुत्राश्च गुणसम्पन्नाः परापर परागतिः । त्वया ह्येतानि प्रार्थ्यन्ते ममापि वरदा भव ॥२६॥

एवं स्तुता ततो देवी नारदेन महात्मना । ददर्श सहसा शक्र सिंहारूढ़ां महाबलाम् ॥३७॥

चर्म्मासि-धनु-नाराच-शूल-खट्वाङ्गधारिणीम् । वज्र-शक्ति-गदादण्ड-पशु-मुद्गर-बिभ्रती ॥३८॥

पाशाङ्कुश-ध्वज-वीणा-घण्टा-डमरू-धारिणी । चित्र दण्डा तथा मुण्ड कनकाभेदीनी तथा ॥३९॥

द्विपार्द्र चर्म्म सा रौद्र शैलकृतश्चारिणी[2] । अक्ष सूत्र करा देवी वरदोद्यत-पाणिनी ॥४०॥

भक्तानां भक्ति-जननी पावनी जननी तथा । याच याचेती वाचन्ती वरं ब्रूह्य मनोगतम्[3] ॥४१॥

ततः स प्रणतं उचे घोरं देव-रिपुं वध । तथेती नारदमुक्त्वा तावद् घोरः समागतः ॥४२॥

॥ इति श्री देव्यवतारे देवीपुराणे देव्यानारददर्शनं नाम षोडशोऽध्यायः ॥

---

१. पादशनी क ।

२. हुतभुग्धारिणी क ग ।

३. मनोनुगां क ।



# सप्तदशोऽध्यायः ।

इन्द्र उवाच ।

नारदस्य वरं दत्ते घोरे तत्र समागते । किमकुर्व्वद् भगवती किं वा घोरो महावलः[1] ॥१॥

किञ्च लोक[2] प्रमाणन्तु हतशेषस्य नो वद । एवं पृष्टस्तदा ब्रह्मा अशेषं वासवेन तु ॥२॥

विमृष्य कथ्यते सर्व देव्या घोरं महारणम्[3] । यदिदं पृच्छसे शक्र देव्या घोरस्य सङ्गरम् ॥३॥

ब्रह्मोवाच ।

तं ब्रवीमि यथावृत्तं प्रत्येकं न तु वाहिनी । वर्णितुं शक्यते शक्र समैर्ग्रन्थिभिः कोटिभिः ॥४॥

तथापि किञ्चित् संक्षेपात् कथयामि सुराधिप: । रथानां कोटयस्त्रिशत् सप्तलक्षास्तथायुतम् ॥५॥

कोटिशतानि पञ्चाशद् गजानां सप्ततिस्तथा । लक्षायुत सहस्राणि षष्टिः पञ्चाधिका विभो ॥६॥

कोटि लक्षाणि चाश्वानां पंच पंचाशद् वासव[4] । लक्षा द्वात्रिंशत् पञ्चाशत् सहस्रपरिसंख्यया ॥७॥

लक्षा द्वासप्ततिः शक्र तथायुतत्रयं त्रयम् । हतशेषन्तु घोरस्य तिष्ठतेऽमरपुङ्गवः ॥८॥

घातितं द्विगुणमेतज्जया विजयासङ्गरे ॥९॥

यमान्तकस्तथा काल दुर्मुख–वज्र–भैरवैः । स्वयन्ते घातितं देव्या महाकाल्या ह्यनेकशः ॥१०॥

शक्र उवाच ।

हतशेषबलो ब्रह्मन् घोरो घोर–पराक्रमः । भीतो वा प्राणरक्षार्थं किं वा युद्धमनोनुगः ॥११॥

ब्रह्मोवाच ।

हतशेषबलः शक्र घोरः क्रोधाग्नि–दीपितः । चकार मायया सेनां हताहतसहस्रधा ॥१२॥

तां घोर–मायामनुभूतभूतां सेना ययौ वासव सप्त लोकान्

भूम्यन्तरीक्षान् सहसप्त[5] द्वीपान् पाताज लोकान्तरव्याप्त मार्गान् ॥१३॥

---

१. किं कुर्वन्द्भगवती तत्रकिं वा घोरो महावल. क ।
२. किं बलं क ग ।
३. महावलं क ग ।
४. कोटि लक्षाणि चाश्वानां पंच पंचाशद्वासव क ग ।
५. सद्वीप क ग ।

विष्णुं समस्तेश–सुरेश–वन्द्यं शक्रं महामत्त–मतङ्ग–यानम् ।
रक्षोऽनलं वायुं तथा कुबेरमीशञ्च रुद्रं जगदीशितारम् ॥१४॥
सोमं रविं दीप्तवतां वरिष्ठं रुद्रान् समस्तान् ह्यथ विश्वदेवान् ।
ऋक्षान् ग्रहान् नाग–सुसिद्ध–सङ्घान् विद्याधरान् किन्नरभूत-पितॄन् ॥१५॥
सर्वान् समस्तानपि पीडयित्वा देव्यस्तया घातयितुं प्रवृत्तः ।
तां घोर–माया–मति[1]–मुग्ध[2]–चेताः शम्भुस्तथा संस्मरते परां ताम् ॥१६॥

ईश्वर उवाच ।

जय–जय हरिहर कमलासनाभ्यर्चिचते[3] नमो देवी शिवे शम्भु वक्त्रोद्भवे ।
चण्ड रूपे[4] सुवक्त्रे सुनेत्रे सुगात्रे सुवेशे[5] सुबिम्वाधरोष्ठि महायोगिनि बर्हिणीव ॥१७॥
पिच्छध्वजे तुहिनकर – कुमुदकुन्देन्दु–सवर्णाभिरत्यन्ततीक्ष्णाभिर्दंष्ट्राभिः संदृश्यते ।
भैरवी भीषणी वीरभद्रे सुभद्रे श्मशानप्रिये पद्मपत्रे[6]क्षणे घोर रूपे ॥१८॥
जयन्ती जये मानसि मानवि मर्त्यमाते मृगेन्द्रध्वजे सर्व्वसिद्धिप्रदे ।
जलनिधि वरदुन्दुभि मेघनिर्घोष हासस्वने[7] ॥१९॥
ब्राह्मि कौमारि माहेन्द्रि माहेश्वरि वैष्णवि वाराहि वायुरग्न्यात्मजे ।
हेमकूटे महेन्द्रे हिमाद्रौ महीधारिणि विन्ध्यसह्यालये श्री गिरौ संस्थिते ॥२०॥
ह्रस्व दीर्घैः कृशैः स्थूललम्बोदरैस्तालजङ्घैः[8] महाभैरवैः प्रमथलक्षणैर्वृते ।
दिनकर–कोटि कल्पान्तर वह्निप्रभे हेमवर्णे सुवर्णे रति–प्रीति दक्षे[9] ॥२१॥
मति–शान्ति–लक्ष्मी–धृति–ऋद्धि–द्युति–सिद्धि–बुद्धि–कृति[10]–तुष्टि–पुष्टि–स्थिति ।
सृष्टि–वृष्टि–प्रिये वेद–माते कृतज्ञे कुमारि ध्रुवे शाश्वति तापसि सांख्ययोगोद्भवे ॥२२॥

---

१. मभि क ।
२. दुग्ध क ।
३. अर्चिचते देविमाते क ।
४. रूपे स्वरूपे क ग ।
५. सुवेशे सुकेशे क ग ।
६. पद्मवक्त्रे क ।
७. निर्घोष महासुरे क ग ।
८. जङ्घैः क ग ।
९. रक्षे क ।
१०. गति क ।

विषधरहल-मूसल-परशु-पाषासि-चक्राब्ज-खट्वाङ्ग-दण्डांकुशानेकशस्त्रोद्यते ।
शूलाक्षसूत्रधनुर्द्धारिणी दैत्यविद्रावणि हारिणी धारिणी बन्धनि मोक्षणि ॥२३॥
दुरितानि[1] मारणि कीर्तिविस्तारिणी दीप्ति सञ्जीवनी[2] भेदनी तापनि ।
शुष्कमूर्धे उमे चण्डिके भीम वक्त्राम्बुजे त्रिपुरदहने हरस्यार्द्ध [3]स्थिते ॥२४॥
विद्युदुल्कामुखि कृष्णमूर्धे नवम्यष्टमी पञ्चमी पौर्णमासी चतुर्थी तथैकादशी कृष्णपक्षोत्सवे ।
इन्द्रनीलै र्महानील-मुक्ता फलैः पद्मरागैः स्फटिकैर्मणि-मरकतैर्वज्रवैडूर्य्यचामीकरालङ्कृते ॥२५॥
नूपुरैः कुण्डलैर्मुकुट-केयूर-हार-द्युति-विभूषिते
हेमरत्नोज्ज्वले वल्कल नील कौशेय पीताम्बरे[4] ।
कनक-कलश तुल्येन पीनोन्नतेनातिरम्येण हेमांशु जालोग्रनिष्पीडितेन स्तनेनोरसा मध्ये ॥२६॥
तन्वङ्गयष्टा नितम्बस्थले नाभि संवर्द्धनेनाम्बिके[5] त्र्यम्बके नृत्यमाना[6]सदा शोभसे ।
वर-वृषभ-हंस-मातङ्ग-नील-गति-गामिनि-मेरु सञ्चारिनिसागरान् शोषणि पर्वतान् पूर्वान् ॥२७॥
कद्रु सावित्रीं गायत्रीं धात्रीं विधात्रीं दितिम्वीक्ष्य
माया जितेन्द्रियस्य विद्रावणी ब्राह्मि वेतालि ।
कङ्कालिका कपालिनि भद्रकालि महाकालि कालानले कलिकाले कले निष्कले ॥२८॥
जय जय[7] मङ्गलोद्घुष्टरावे धारिणिभिर्महीं सिद्धसङ्घैः सुशब्दैः[8] सहायैः सुसन्नद्ध[9]त्वङ्गैः ।
[10]विमानैश्च दिव्यैर्गजेन्द्रैः सुनीलैस्तुरङ्गैः [11]सुवेगैः सितैश्चातपत्रैश्च संछादिते अम्बरे ॥२९॥
रक्तमौले गणैर्देव[12] दैत्येन्द्र यक्षाप्सरैर्वन्दिभिः स्तूयसे लोलजिह्वैर्ललदुग्र केशैः शरण्ये वरण्ये ।

---

१. साधकांस्तरणी ख पुस्तके नास्ति ।
२. संजीवनी छेदनी क ।
३. देह क ।
४. चीराम्बरे क ।
५. सद्वर्त्तुलेनांविके क ग ।
६. नेत्रमाना क ।
७. महा क ।
८. घुष्टरारब्ध निमिर्महासिद्ध संङ्घैःसुसङ्घैः. सुशब्दैः क ।
९. स्वसम्वद्ध क ग ।
१०. वद्धैः क ।
११. तरंगैः क ।
१२. अमूरेवलगमानैर्गणै देवि क ।

महारुक्ष[1] घण्टा रवोद्गीत[2]कर्णोत्सवे[3] वेणू-वीणा-ध्वनि-स्तोत्र-वादित्र-गन्धर्व-नित्यप्रिये[4] ॥३०॥

कृतभुजगवर[5] कुण्डलोद्धृष्ट गण्डद्वये सर्व्वभूतालये सर्व्वभूतोत्तमे[6] ।

गौरि गान्धारि मातङ्गि धूमेश्वरि धर्म्मकेतू दक्षविध्वंसिनि महिष मृत्युप्रदे[7] ॥३१॥

शुम्भ निशुम्भनी मोहिनी दीपनि वर्षणि रेवति कालकर्णी सुकीर्णि जगत् सृष्टि संसारकर्त्री ।

योगेश्वरि[8] सर्व्वलोकेश्वरि खेचरि गोचरि चण्डि

मातङ्गि धूम्रे शशाङ्कानले गिरिवरतनये ॥३२॥

वरे मन्त्र मूर्ति महामूर्त्ये[9] दिग्व्यापिनि सुप्रसन्ने प्रसन्नार्चिते सुव्रते ।

गोतमि कौशकि पार्व्वति भूतवेतालि[10] कात्यायनि ऋग्यजुः[11] सामाथर्व्वप्रिये देवी नित्ये ॥३३॥

शुभे भींमनादे महावायुवेगे सरस्वत्यरुन्धत्यमोघे असंख्यात बाहूदरेऽनेकवक्त्रे ।

विविध–मृत्यु–मारीति[12]शाकम्भरी शैलशृङ्गेषु तुङ्गेषु नित्यम्

वत[13] कन्दरवासिनि भीमसङ्गे[14] नित्यं त्वमेवोच्यसे ॥३४॥

कुवलयादल नील लोला लसैः[15] लोचनैः[16] स्नेहयुक्ते,

शताक्षेपवक्त्रा[17] म्बुजोद्भासिभिः कालनिर्णाशिनि ।

काम सन्दीपनि साधकालोकानि स्वर्ग–पाताल-मोक्ष-प्रदे,

चक्रवर्तिप्रदे श्रीधरे पुत्रवत् पश्य माम् ॥३५॥

दर्भरोमाग्नि जिह्वे त्रिगुणे प्रमेये त्वमेवोदधिवीचि भानोःसुषुम्ना

ईडा पिङ्गला सौमनाडी तु सौत्रामनीं किङ्किणी चण्डी निर्घोषजुष्टा ॥३६॥

---

१. महारुक्त
२. घंटावरोद् गीत क ।
३. चारुकर्णोत्सवे क ग ।
४. नित्यप्रिये ख ।
५. कृत्य भुजंगवर क ।
६. क पुस्तके नास्ति ।
७. पदे क ।
८. वियोगेश्वरी क ग ।
९. महामूर्ति क ग ।
१०. भूतानि ख ।
११. ऋग्यजुः क .
१२. मारीच क ग ।
१३. रते क ग ।
१४. भीमसंज्ञोति क ।
१५. लोल लीला क ग ।
१६. स्नेह दिग्धैः क ।
१७. सितसूलताक्षे क ।

त्वमेवोषधी कालनिर्णाशिनी जाह्नवी त्वं जटाभिर्मया धारिणी गम्भीरघोरस्वने ।
सर्व्वं शस्त्रोद्यते सर्व्वदेवैर्वृते रक्ष रक्षस्व मां दिव्यमाल्याम्बरे दिव्यगन्धानुलिप्ते ॥३७॥
धार्य ताराह[1] मृता सत्यवादित्यजाता जिता क्रोधनावमेव क्रोधनिष्ठा[2] ।
विभुत्याहूती कालरात्री शची कामरूपी स्वधावेशिनी[3] विघ्न निर्णाशिनी ख्यातिर्नारायणी ॥३८॥
कृष्ण पिङ्ग प्रगल्भानिलभ्रामणी देवदैत्येन्द्ररक्षोरगैः किन्नरैः ।
यक्ष गन्धर्व्व विद्याधरैर्वन्दिते मुनिवरैः संस्तुते भगवती तव कीर्ति नामुच्यते ॥३९॥
कालपाशे निवद्धं सुरेन्द्रैश्च नीतमृषीन्द्रैश्च शप्तं मृगेन्द्रैर्गृहीतं गजेन्द्रैर्विभिन्नं ग्रहेन्द्राभिभूतम् ।
खगेन्द्रैर्विलुप्तं भुजङ्गैश्च दष्टं जले वापि मग्नं स्थले
वापि खिन्नं वने वापि मूढं रणे शरैर्भिन्नदेहम् ॥४०॥
परैः सम्मुखस्य[4] विवादे निरस्तं महाग्राहग्रस्तं तथाराध्यमानन्तु मातेव संरक्षसे पुत्रवन्नित्यशः ।
विविधकलिकलुषपापाधिये मानवास्तेऽपि सञ्चिन्त्य[5] देवी त्वदीयं मुखं पूर्णचन्द्रप्रभम् ॥४१॥
सोम सूर्याग्निनेत्र प्रद्योतित कुण्डलैर्लोलसंघृष्टगंडद्वये तेऽपि पापान् प्रभुञ्चति ।
संसारघोरार्णवे[6] मज्जमानांस्तथा शत्रुमध्यगतान्
यानपात्रस्थितान् शृङ्खलैर्वेष्टितान्[7] तस्करैरावृतान् ॥४२॥
त्रासि सर्व्वान् सदेवान् सरक्षान्[8] सगन्धर्वं नागान् सविद्याधरान् साश्विनान् ।
सग्रहान् सप्त पातालभूर्लोक दिव्यान्तरीक्षस्थितान्
नात्र कुर्याद् विकल्पं महादेवी सञ्चिन्त्य त्वाम् ॥४३॥
चण्डिके शिवपुरवरमार्ग सोपानमेतन्महादण्डकं शिवकृतं घोरनिकृन्तं पापनिर्णाशनं सर्व्वकामप्रदम् ।
नामभिश्छान्दसैः साधकानां हितार्थाय संक्षेपतः[9] कीर्तितं सारमुद्धृत्य दघ्नाज्यमिव सर्वदा ॥४४॥

---

१. त्वमेवार्य्यं भावा क ।
२. क्रोधनिष्ठा क ग ।
३. सुधावेशनी क ।
४. संप्रतस्थं क ।
५. सिंचित्व क ।
६. संसार घोगंतरे क ग ।
७. क्षुत्पिपासार्दितान् वृक्षसायागतान् यंत्रसंपीतान् क ।
८. सराक्षन् क ।
९. संयोगतः क ।

ये पठन्ति[1] सदा भक्त्या तेषु वक्षाम्यहं शृणु[2] । वाजपेयाश्वमेधाग्निष्टोम[3] गोदानादिकं तथा ॥४५।
ऋक् सोपानादिकं यज्ञ पुण्यं लभ्यते[4] तथा[5] भूतले यानि तीर्थानि[6] चान्यानि वा ।
तेषु तीर्थेषु देवार्च्चन-स्नान-होमोपवास-स्तुति-दानं पुण्यं व्रतं सर्व्वमेतत् फलम् ॥४६॥
यः पठेत् दण्डकं दंण्डकेनापि सिद्धो दिवि क्रीडते ब्रह्माविष्णिवन्द्र लोकोत्तमैः ।
दिव्ययानैर्महाकल्पकोटि सहस्राणि सिद्धैर्वृतः साधकः ॥४७॥
तरु विनिपातकाले व्रजत्यग्नि कालाग्नि रुद्रं शतं नारकं विंशतिश्चाष्ट कोटि समेतम् ।
तथा भूर्भुवः स्वर्महर्जनस्तपः सत्यं लोकान्तिकं ब्रह्मणोंऽडं विनिर्मद्य रुद्रान्[7] ॥४८॥
द्वि पञ्चाशत् संख्यास्तथा तोय-तेजो-नीलाकाश गुह्याष्टकम् ।
अष्टषष्ठिमतिक्रम्यत् प्राकृतं पौरुषं नियतिकालं समग्रं सविददेश्वः ॥४९॥
चर्क्रति[8] शक्तिकलां वापि सूक्ष्मां त्यजित्वा व्रजन्ते परं यत्र नित्यम् ।
पदं सर्व्वभूतोत्तमं सर्व्वगं निष्फलं ध्यानहीनं विशन्ते सदा ॥५०॥

इति श्री देवीपुराणे घोरवधे शिवकृतो देवीस्तवो नाम सप्तदशोऽध्यायः[9] ॥

---

१. पठन्ते क ।
२. ग पुस्तके नास्ति ।
३. मेधानल क ।
४. लभन्ते क ग ।
५. क पुस्तके नास्ति ।
६. पुरा यानि क ।
७. रुद्रा क ।
८. समापं सविद्यरेवरं चक्रवर्त्ति स्व शक्ति क ग ।
९. इत्याद्ये देव्यवतारे घोरवधे देव्यास्तवः क ग ।



# अष्टादशोऽध्यायः।

ब्रह्मोवाच।

स्तुता[1] ह्येवं पुरा देवी देवदेवेन शम्भुना। हितय विष्णुशक्राणामन्येषामपि देवताम् ॥१॥
तन्माया तमसाच्छन्नमशेषं सचराचरम्। उद्योतितं[2] क्षणेनैव भानुना तद्यथा[3] दिवम् ॥२॥
प्रवृद्धि[4] शक्ति संरम्भाः सर्व्वे देवाः सवासवाः। ववर्षु पुष्पमालाभिर्भवान्याश्चरणाम्बुजे ॥३॥
अथ तं दनुपतिं[5] घोरं प्रावृट्काल घनोपमम्। मर्दयन् विहसन्[6] देवी [7]सुतीक्ष्णैर्निशितैः शरै ॥४॥
अर्दिता शरवर्षेण दानवस्य तु वाहिनी। देवी-कर-विमुक्तेन लाघवेन बलेन च ॥५॥
निश्चेष्टं दानवं सैन्यं तदा ह्यासीत् पुरन्दर। एवं कात्यायनीं वाणैर्निष्प्रभं घोरजं बलम् ॥६॥
चक्राविद्धं न लक्ष्येत् दानवैर्विगतौजसैः। सुषेणस्तु तदा क्रुद्धो मन्युमास्थाय वासव ॥७॥
मायागज—समूहन्तु चकार मदविह्वलम्। तान्नागान्मदगन्ध्यादैर्वलि[8]वृन्दैर्निषेविताम् ॥८॥
चोदयामास दिव्याया जयायामसुरोत्तमः। जयापि दानवं वीक्ष्य सिंहमारोह भास्वरम्[9] ॥९॥
गजान् विमर्द्दयेत् सर्व्वान् विशीर्णा इव दिग्गजाः। गजसैन्ये हते शक्र दानवः सुरदर्पहा ॥१०॥
आदाय तरसा खड्गं जयायाः सिंहघातकम्। अथ सिंहे हते देवी कौशिकोपरिसंस्थिता ॥११॥
सुषेणस्य शिरश्छेदं रथाङ्गेन तु वासव॥१२॥

इति श्री देवीपुराणे सुषेणवधो नामाष्टादशोऽध्यायः[10]।

---

१. स्त्कना क।
२. उद्योतयन् क।
३. तु क।
४. प्रवृद्ध क ग।
५. तं तत्तु राति क।
६. अर्द्दयन् विसहं क।
७. स्व क।
८. मदगंधादैः ख।
९. भासुरम् ग।
१०. आद्य देव्यवतारे सुषेणवधः क ग।

# एकोनविंशोऽध्यायः ।

ब्रह्मोवाच ।

हते तस्मिन् महादैत्ये[1] दानवस्य वरूथिनी । नलिनी हिमपातेन शमितेव विभाव्यते ॥१॥
सुषेणे निहते शक्र दैतेयः सुरमर्द्दकः । सुषेण-सदृशान् योधान् मायोत्थां चक्रिरे बहून् ॥२॥
अजा–विवदनान् घोरान् सिंह-शूकर आननान् । गजाश्वरथमारूढान् चर्म्मखड्गकरोद्यतान् ॥३॥
ते सर्व्वे अजितां योद्धुं महाबल–पराक्रमाः । मकरस्थां पाशहस्तां दन्डांकुशकरोद्यताम् ॥४॥
ते दृष्ट्वा अजितां सर्व्वे न विभ्यथु मनागपि ।
अथ[2] तैः कलकलारावं कृत्वा देवी विचेष्टिताम् ॥५॥
दशधा शतधा शक्र तथा ह्ययुत–कोटिधा । देव्या शरासनं चक्रं चिच्छेदुर्दनुसत्तमाः ॥६॥
विमोच[3] शर जालानि देवी सर्वे ह्युपद्रुता । सम्पीडितबलान् दृष्ट्वा तृतीयाश्चापराजिताम् ॥७॥
शमितुं[4] शरवर्षेण दानवानां भयङ्करीम् । घोरमायासमुत्थानां वाहिनी यमपन्थगा ॥८॥
प्रयाता दानवी शक्र–गजाश्व–भट पत्तिषु । नहि संख्या तदा ह्यासीत् द्विविधासु बलासु च ॥९॥
हतसेनस्तदा घोरो बहुमायी पुरन्दरः । इन्द्र–चन्द्रार्क–विष्णूनां रूपाणि बहुधासृजत् ॥१०॥
चन्द्रं चक्रेण सम्पीड्य विष्णुमिन्द्रं तथैव च । देवीनां सम्मुखो देव्या द्वन्द्वयुद्धेन प्रेषयेत्[5] ॥१२॥
ता मायां घोरजां देव्या जयापाशेन पाशिताः । निकृत्याशिव[6] पद्मानि गजैरिव महाह्रदे ॥१२॥

इति श्री देवीपुराणे मायासैन्यवधो नाम एकोनविंशोऽध्यायः[7] ॥

---

१. महामाये क महामात्ये ग  २. तथा ग ।  ३. मुमोच क ग ।
४. शमेतुम् क ग ।  ५. प्रेषितां क ग ।  ६. शर क ।
७. प्राये देव्यवतारे मायासैन्यवधः क ग ।

# विंशोऽध्यायः ।

ब्रह्मोवाच ।

यां यां चकार दैत्येन्द्रो मायां मायाविदां वरः । तां तां निकृन्तते देवी नयं देवो यथा गुणः ॥१॥

शक्ति-त्रय-समोपेतः पौरुषेण समन्वितः । बल-वाहनयुक्तोऽपि दैवेनैकेन पीडितः[1] ॥२॥

शक्र उवाच ।

यदा हि बलवान् दैव एकः शत्रुबलं जयेत् । तदा गजाश्वयोधानां व्यर्थता ह्यनुमीयते[2] ॥३॥

न धर्म्मो नापि चाधर्म्मो न मन्त्री न पुरोहितः । दैव एव हि कर्त्ता तु शुभाशुभफलप्रदः ॥४॥

अश्वमेधादि यज्ञा ये ब्रह्महत्यादि पातकाः । दैव एव हि कर्त्ता च न पुण्यं न च दोषभाक् ॥५॥

भिषक् सम्वत्[3]सराभाद्यैर्न हि किञ्चित् प्रयोजनम् ।

कृषि कर्म्मानु वार्ता च दैवं सर्व्वं करोति हि ॥६॥

यदेतत् कथनारम्भे देव्या आद्यवतारणम् । तत करोति विधिर्ब्रह्मन् किमेतद् भवता कृतम् ॥७॥

अनेनैवानुमानेन शुश्रूषा विनयेन हि ।

अगस्त्य उवाच ।

एवं पूर्व्वं भवानासीत् चक्र ब्रह्मस्य देविके ॥८॥

पौरुषस्यानुसन्धाय यतते कमलोद्भवः ।

ब्रह्मोवाच ।

दैवो हि सर्व्व-शक्तीनां बलानां परमं बलम् ॥९॥

चिन्त्याः अन्य[4]पदार्थाः स्युर्दैवं केनापि चिन्त्यताम् । दैवानुकूलता शक्र शक्ति पौरुष चेष्टितम् ॥१०॥

---

१. पातितः क ग । २. ध्यनुमीयप्तो ख । ३ संवत्सरा क ।

४. सर्व्वे क ग ।

फलते सर्व्वलोकानां कृषेर्वृष्टिरिव द्वयम् । तथापि पौरुषं शक्र यतितव्यं[1] जिगीषुणा ॥११॥
नहि शय्यागतां कान्तां दैवमेवावगूहते । तस्मात् पुरुषकारोऽपि सिध्यत्येव नियामितः ॥१२॥
तथापि शक्ति युक्तेन[2] बलायतो[3] समन्वितैः । परं पुरुषकारस्य यतितव्यं सदा विभो[4] ॥१३॥
देव दानव गन्धर्व्वा ऋषयो मानवाः सुराः[5] सर्व्वे दैववशाः शक्र दैवोऽपि[6] हि शिवा मता ॥१४॥
स च दानव रूपेण देव रूपेण वासव । स्थित्युत्पत्ति विनाशाय ब्रह्म-विष्णु-शिवा तनुः ॥१५॥
नाना रूपधरा भूत्वा सर्व्वं हंति करोति च । तेनेमां दानवीं[7] मायां घोरो घोरां प्रचक्रमे ॥१६॥
एवं ब्रह्मा पुरा शक्र शक्रेण समभाषत । यावत् सा वाहिनी देव्या दानवेन विमर्द्दिता ॥१७॥
तथास्तं[8] प्रापिते सूर्ये सन्ध्यायां समुपस्थिता[9] । अजिता सर्व्वदेवानामभयाय च प्रेषिता ॥१८॥
ब्रह्म विष्ण्वन्द्ररुद्राणां योगनिद्रा च सा स्मृता । सा रक्षा परमा भूता काल-बन्धन-कारिका ॥१९।
तथागता महादेवी देवता रक्षणे निशि । कालोऽपि सार्द्ध यामे तु यामिनि विगते विभो ॥२०॥
अनेकाकारिणो भूत्वा बहुमायो महाबलः । प्रावृट्काले समारम्भे[10] कालनीलानिलप्रभुः ॥२१॥
रक्ताक्षो भैरवाकारः सुरासुरभयङ्करः । यमवाहनकोटीनां सह्यैवेको विनिर्मितः ॥२२॥
तस्य सञ्चरमानस्य कम्पते च वसुन्धरा । निम्नोन्नतानि कुरुते भयं जग्मुः सुरासुराः ॥२३॥

घोरो महाघोर तनुं विधाय देव्या समं जग्मुर्महाहवाय ॥
संक्रुद्धकाला नलदीप्ततेजां तां पश्यते सिंहवरे निविष्टाम् ॥२४॥
भयानि कुर्व्वन् दनुजाधिपस्य सुराधिपे चाभयरूपरूपाम् ।
दैत्यान्तकीं सृष्टिकरीं सुराणामालोक्य देवीं सहसा तु घोरः ॥२५॥
पादान्त रन्ध्रेषु[11] गिरीन् स कृत्वा चन्द्रार्कताराणिशिरे ध्वनित्वा[12] ।
सिंहेन योद्धुं सहसा प्रवृत्तः सिंहेऽपि तञ्चाङ्घ्रिनरवैर्विविध्य[13] ॥२६॥

---

१. जतितव्यं यः क ।
२. उक्तेव क ।
३. बलायति क ग ।
४. वृधैः क ग ।
५. मानवेश्वरा क ग ।
६. दैवोपिद्धि क ।
७. मायावीं क ।
८. तथात्वं क ।
९. समुपस्थितो ख ।
१०. महारम्भी क ।
११. पादांतकवह्निषु ख ।
१२. धुनित्वा क ।
१३. सिंहोपि तं अंघ्रिनखैः विविध्य क ग ।

नखप्रहारैर्महिषस्य काये असृक् प्रवाहौघ-विनिर्गता ये ।
दिवौकसैस्तैः सहसा प्रदिष्टां कुरुण्ड[1] माला इव वध्य-काये ॥२७॥
तद्[2] घोर-श्रृङ्गाग्र-प्रहार-भिन्नो हरिर्ननाद सहसा च रिवन्नः[3] ।
संकोपितं दैत्य-निपात-घातैर्हरिः प्रजघ्ने नरव-दंष्ट्र-घातैः ॥२८॥
देव्याः शिरे मुद्गरपाशघातात्[4] वहून् मुमोच शर-दण्ड-घातान्[7] ।
तथापि नो बाधयितुं स शक्तः पञ्चाननः श्रृङ्गहतः पपात ॥२९॥
तं घोरघाताहत-सिंह-राजं भूमौ गतं घोर भटैः प्रदृट्ष्वा ।
ते दानवाः क्रोधवशं प्रपन्ना देवीतनावस्त्रवराणि चिक्षिपुः[5] ॥३०॥
दृष्ट्वा तु देवीं तैः पीड़िताङ्गीं[6] निवारयेताम् विजया जया च ।
निवारिते घोरबले समस्ते मायासमुत्थे तमपायरुपे ॥३१॥
देवी कृपाणेन तमापतन्तं चिच्छेद ग्रीवां धरणीं निपात्य ।
दृष्ट्वा सुरास्तं निहतं सुरारिं पुष्पाणि देवी चरणेषु चिक्षिपुः ॥३२॥
तस्य शिरश्छेद-समुद्भवन्तं रक्ताननं रक्तविलोचनान्तम् ।
क्रुद्धाननं मुक्त-कचं सुघोरं कृपाणपाणिं शत-घोर-कारम् ॥३३॥
देव्याननं तर्ज्जन गर्ज्जमानं शङ्कावहं निर्भय देवतानाम् ॥
तं दृष्टमात्रं सहसा तु देवीं पाशेन संपाश्य मुमोच नैनं ॥३४॥
शूलेन मूर्ध्नि सहसा विभिन्नं तं मुक्तवीर[7]मपतद् गृहीतम् ॥
ऋक्षाधिपे चास्तगतेऽसुरेशे दैत्याधिपाः प्रेतपथं प्रजग्मुः ॥३५॥
इति श्री देवी पुराणे देव्यवतारे घोरवधो नाम विंशोऽध्यायः[8] ।

---

१. कूरुण्ट क ग ।    २. तं क ।    ३. सहस च खिन्नः क ग ।
४. क्रंतचक्रान् क ।    ५. असुराणि चिक्षियुः क ग ।    ६. निष्पीड़ितांगी क ग ।    ७. जीवं क ग ।
८. इत्याद्य देव्यवतारे घोरवधः समाप्तः क ग ।



# एकविंशोऽध्यायः ।

ब्रह्मोवाच ।

हते घोरे महावीरे सुरासुरभयङ्करे । देवीमुपासका देवाः प्रभूता राक्षसास्तथा ॥१॥
आगता घातितं दृष्ट्वा महिषं तं सुदुर्ज्जयम् । ब्रह्म-विष्णु-सुरेशाना-इन्द्र चन्द्र-यमानिलाः ॥२॥
आदित्या वसवः साध्या ग्रहा नागाश्च गुह्यकाः । समेताः सर्व्व[1]देवास्ते देवीं भक्त्या तुतोषिरे ॥३॥
वरञ्च सर्व्वलोकानां प्रददौ भयनाशिनी । बलिश्च दद्यु र्भूतानां महिषाजामिषेण च ॥४॥
पुरेषु शङ्खभेर्य्यश्च शतशोऽथ सहस्रशः । हता[2] दुन्दुभिनादाश्च पटुशब्दाः समर्द्दलाः ॥५॥
पताका-ध्वज-छत्रादि-घण्टा-चामर शोभितम् । तद्दिनं कारयाञ्चक्रु र्देवीभक्ताः सुरोत्तमाः ॥६॥
एवं तस्मिन् दिने वत्स भूतप्रेत समाकुलम् । कृतवान्[3] सर्व्वदेवैश्च पूजाश्च[4] शाश्वतीर्महान्[5] ।७॥
जलदान्ते आश्विने मासि महिषाजि-निर्वाहिणीम । देवीं सम्पूजयित्वा तु अष्टमीष्वर्द्ध रात्रिषु[6] ।८।

ये घातयन्ति सदा भक्त्या ते[7] भवन्ति महाबलाः ।
बलिञ्च ये प्रयच्छन्ति सर्व्वभूत-विनाशकम् ॥९॥

तेषान्तु तुष्यते देवी यावत् कल्पन्तु शाङ्करी[8] । क्रीडते विविधैर्भोगै र्देवलोके सुदुर्लभे ॥१०॥
नाधयो व्याधयस्तेषां न च शत्रु-भयं भवेत् । न च देवा ग्रहादित्या नासुरा न पन्नगाः ॥११॥
बाधयन्ति[9] सुराध्यक्ष देवीपादौ समाश्रीतान् । यावद् भूर्वाय्वाकाशं जलं वह्निशशिग्रहाः ॥१२॥
तावच्च चण्डिका पूजा भविष्यती सदा भुविः । शरत्[10] काले विशेषेण आश्विने ह्यष्टमीषु च ॥१३॥
महाशब्दो नवम्याञ्च लोके ख्यातिं गमिष्यति । एतत् ते देवराजेन्द्र स्वर्गवासफलप्रदम् ॥१४॥

परस्पर विभागन्तु क्रियायोगेन कीर्तितम् ॥१५॥

इति श्री देवीपुराणे देव्यवतारे नवमीक्रियासूचनं नामैकविंशोऽध्यायः ।

१. समेत्यसर्वं क ग । २. कृता क । ३. व्रताश्च क । ४. महा शाश्वतीः क ग ।
५. ग पुस्तके नास्ति । ६. अर्द्ध रात्रेष्टमी मखे क । ७. पशून् भक्ष्यान्ते क ।
८. कलयतु शांकरं क । ९. पीडयन्ति क । १०. प्रावृट् क ।

# द्वाविंशोऽध्यायः।

ब्रह्मोवाच ।

चन्द्रप्रभा गता यत्र आस्ते घोरः प्रतापवान् । कैलाशं परमं स्थानं नवमे-घशशि-प्रभा[1] ॥१॥
एवं महाबलं शक्र पुरा देवारिकण्टकम्[2] । हत्वा देवी वरं प्रादाद्[3] विष्णवादीनां प्रतोषिता ॥२॥

इन्द्र उवाच ।

आश्विने घातिते घोरे[4] नवम्यां प्रतिवत्सरम् । श्रोतुमिच्छाम्यहं तात उपवास व्रतादिकम् ॥३॥

ब्रह्मोवाच।

शृणु शक्र प्रवक्ष्यामि यथा त्वं परिपृच्छसि । महा-सिद्धि-प्रदं पुण्यं[5] सर्व्वशत्रु-निवहर्णम् ॥४॥
सर्व्व लोकोपकारार्थं विशेषादृषिवृत्तिषु । कर्त्तव्यं ब्रह्मणाद्यैश्च क्षत्रियैर्भूमि[6]पालकैः ।
गोधनार्थं विशैर्वत्स शूद्रैः पुत्रसुखार्थिभिः ॥५॥
महाव्रतं[7] महापुण्यं शङ्कराद्यैरनुष्ठितम् । कर्त्तव्यं देवराजेन्द्र देवी-भक्ति-समन्वितैः ॥६॥
कन्या संस्थे रवौ शक्र शुक्लादारभ्य नन्दिकाम्[8] ।
अयाची त्वथ[9] एकाशो नक्ताशी अथवा घृतम्[10] ॥७॥
प्रातः स्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः । जपहोमसमायुक्तः कन्यकां भोजयेत् सदा ॥८॥
अष्टम्यां नवगेहानि दारूजानि शुभानि च । एकं वा वित्ताभावेन कारयेत् सुरसत्तम ॥९॥
तस्मिन् देवी प्रकर्त्तव्या हैमा वा राजतापि वा । मृद्वार्क्षी लक्षणोपेता खड्गे शूलेऽथ पूजयेत् ॥१०॥

---

१. यह नहीं है क । २. कटकम् । क ३. दद्युः कग । ४. आश्विनस्य सिते पक्षे क ।
५. धन्यं क ग । ६. क्षत्रियैर्लोक क ।
७. सौभाग्यार्थं स्त्रिया कार्यमन्यैश्च धनकाङ्क्षिभिः क ग ।
८. कन्यकां कग । ९. अथ क । १० द्वादः कग ।

सर्व्वोपहारसम्पन्नोवस्त्र-रत्न-फलादिभिः । कारयेद्रथदोलादि पूजाञ्च बलि वेदिकाम्[1] ॥११॥

पुष्पादि[2] द्रोण-विल्वाम्र-जाती-पुन्नाग-चम्पकैः ।
विचित्रां रचयेत् पूजामष्टम्यामुपवासयेत् ॥१२॥

दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः सुभावितः । तदर्द्ध-यामिनी शेषे विजयार्थं नृपोत्तमैः ॥१३॥
सर्व्वाङ्ग[3] लक्षणोपेतं गन्ध पुष्प[4] स्रगर्च्चितम् । विधिवत कालिकालीति जप्त्वा खड्गेन घातयेत्।१४।
तस्योत्थं रुधिरं मासं गृहित्वा पूतनादिषु । नैर्ऋताय प्रदातव्यं महाकौशिकमन्त्रितम् ॥१५॥

तस्याग्रतो नृपः स्नायाच्छत्रुं कृत्वा तु पिष्टजम्[5] ।
खड्गेन घातयित्वा तु दद्यात् स्कन्दविशाखयोः ॥१६॥

ततो देवीं स्नापयेत् प्राज्ञः क्षीरसर्पिर्जलादिभिः । कुङ्कुमागुरुकर्पूर चन्दनैश्चापि धूपयेत् ॥१७॥
हेमादि पुष्परत्नानि[6] वासांसि अहतानि च । निवेद्य च प्रभूतं तु देयं देव्याः सुभावितैः ॥१८॥
देवीं भक्ताश्च पूज्यंते कन्यकाः प्रमदादि च । द्विजा दीनानुपासन्नान्[7] अन्नदानेन प्रीणयेत् १९॥
नन्दा भक्ता नरा येतु[8] महाव्रतधराश्च ये । पूजयेत् तान् बिशेषेण यस्मात् तद्रूपचर्चिका[9] ॥२०॥
मातराणाञ्च देवीनां पूजा कार्य्या तदानिशि । ध्वजछत्र-पताकादिमुच्छ्रयेच्चर्च्चिका गृहे ॥२१॥
रथ यात्रा बलिक्षेपं पट्टवाद्य वराकुलम् । कारयेत् तुष्यते येन देवी वस्त्र[10] निपातनैः ॥२२॥
अश्वमेधमवाप्नोति भक्तिनां[11] सुरासत्तम । महानवम्यां पूजेयं सर्व्वकामप्रदायिका ॥२३॥
सर्व्वेषु सर्व्व[12] वर्णेषु तव भक्त्या प्रकीर्तिता । कृत्वाप्नोति यशो राज्यं पुत्रायुर्धन सम्पदः ॥२४॥

इति श्री देवीपुराणे देव्यवतारे नवमी कल्पो नाम द्वाविंशोऽध्यायः ॥

---

१. देविकाम् क ग । २. पुष्पैश्च– क । ३. पंचाद्वङ्ग, क ग । ४. धूप कग ५. पिष्टजम् क ग ।
६. रत्न पुष्पाणि क। ७. द्विजादीनांधपाषंडा कग । ८. नरा ये च क।
९. मम्बिकां क ग । १०. पशु क ग । ११. भक्तितः क ग।
१२. वत्स– कग ।



# त्रयोविंशोऽध्यायः ।

ब्रह्मोवाच ।

क्षीराशी नन्दिका[1]रभ्य देव्या भक्तिरतो नृपः । शाक यावक एकाशी प्रातः स्नायी शिवारतः ॥१॥
पूजयेत् तिलहोमैस्तु दधि क्षीरघृतादिभिः । कार्य्यन्तु देवीमन्त्रेण शृणु पूजा फलं हरे ॥२॥
महापातकसंयुक्तो युक्तो वा सर्व्वपातकैः[2] । मुच्यते नात्र सन्देहो यस्मात् सर्व्वगता शिवा ॥३॥
अन्यो वा भावनायुक्तो अनेन विधिना शिवाम् । स्वयं वा अन्यतो वापि पूजयेत् पूजापयेत वा ॥४॥
न तस्य भवति व्याधिर्न च शत्रुकृतं भयम् । नोत्पातग्रहदुःखं वा न च राष्ट्रं विनश्यति ॥५॥
सदा सुभाव[3] सम्पन्ना ऋतवः शुभदा घनाः । निष्पत्तिः शस्यजातानां तस्करा न भवन्ति च ॥६॥
प्रभूतपयसो गावो ब्राह्मणाः स्वक्रियापराः । स्त्रियः पतिव्रताः सर्व्वा निवृत्त-वैरिणो नृपाः ॥७॥
फल-पुष्पवती देवी वनस्पतिः महामतिः[4] । भवते नात्र सन्देहश्चर्च्चिकाविधिपूजनात् ॥८॥
जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोस्तुते ॥९॥
अनेनैव तु मन्त्रेण जपहोमन्तु कारयेत । प्रातः संस्मरिता वत्स महिषघ्नी प्रपूजिता ॥१०॥
अघं नाशयते क्षिप्रं यथा सूर्य्योदये तमः ॥११॥
सिंहारूढा ध्वजे यस्य नृपस्य रिपुहा उमा । द्वारस्था पूज्यते वत्स न तस्य रिपुजं भयम् ॥१२॥
कपिसंस्था महामाया सर्व्वशत्रु विनाशिनी । वृषे यथेप्सितं दद्यात्कलशे श्रेयमुत्तमम् ॥१३॥
हंसे विद्यार्थ कामांस्तु वर्हिणे सुतमिष्टदा । गरुत्मगा महामाया सर्व्वरोगविनाशिनी ॥१४॥
करिस्था सर्व्वकार्य्येषु नृपैः कार्य्या त्रिशूलिनी ॥१५॥
महिषस्था महामारी शमते ध्वजसंस्थिता ।

---

१. कात्तिका क ग ।
२. उपपातकैः क ग ।
३. स्वभाव क ग ।
४. धात्री शस्यानि रसवंति च ।

पद्मस्था चर्च्चिका रोप्या धर्मकामार्थ मोक्षदा । प्रेतस्था सर्व्वभयदा नित्यं पशु-निपातनात् ॥१६।
पूजिता देवराजेन्द्र नीलोत्पलकरा वरा[1] । भवते सिद्धिकामस्य चित्ताग्रे संव्यवस्थिता ॥१७॥
गन्ध पुष्पार्च्चितं कृत्वा वस्त्र होम सुर्चाच्चितम् । फलशालियव शुचि वर्द्धमाना विभूषितम् ॥१८॥
शोभने उच्छ्रये लग्ने पताकां वा मनोरमाम् । चामरं कलशे शङ्खमा तपत्र वितानकम्[2] ॥१९॥
भवते सिद्धिकामस्य नृपस्य शुभदायकम् । ॐ नमो विश्वेश्वरि दुर्गे चामुण्डे चण्ड हारिणी ॥२०॥
ध्वजं समुच्छ्रयिष्यामि वसोर्धारां सुखावहाम् ॥२१॥

इति श्री देवीपुराणे देव्यवतारे चित्रण विधिनाम त्रयोविंशोऽध्यायः[3] ॥

---

१. धरा क ग ।
२. श्लोकोऽयं नास्ति क ग पुस्तके ।
३. आद्ये देवीपुराणे चिन्हविधिः ग ।



# चतुर्विंशोऽध्यायः ।

ब्रह्मोवाच ।

समयेन ऋतुमास पक्षाहादि क्रमेन तु । सूक्ष्म-स्थूल-विभागेन देवी सर्व्वगता विभो ॥१॥
द्वादशैव समाख्याता समा संक्रान्तिकल्पनाः । सप्तधा सा तु बोद्धव्या एकैकैव यथा शृणु ॥२॥

मन्दा मन्दाकिनी ध्वांक्षी घोरा[1] चैव महोदरी ।
राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप ॥३॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रैर्घोरा प्रकीर्तिता ॥४॥

चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैस्तु राक्षसी । मिश्रिता चैव निर्दिष्टा मिश्रिताक्षैस्तु संक्रमे ॥५॥
त्रिचतुः पञ्च सप्ताष्ट नव द्वादशमेव च । क्रमेण घटिता ह्येतास्तत्पुण्यं पारमार्थिकम् ॥६॥
अतीतानागतान् भोगान् आद्यः पंचदश स्मृताः । सान्निध्यं भवते तत्र ग्रहाणां संक्रमे रवौ[2] ॥७॥
व्यवहारो भवेल्लोके चन्द्रसूर्योपलक्षितः: । कालोऽपि कलते सर्व्वं ब्रह्माद्यं सचराचरम् ॥८॥
पुण्य-पाप-विभागेन फलं देवी प्रयच्छति । एकधापि कृतं तस्मिन् कोटि कोटि गुणं भवेत् ॥९॥

धर्म्मो विवर्द्धते ह्यायू राज्यं पुत्र सुखानि च[3] ।
अधर्म्म व्याधि[4] शोकादि विषुवायन सन्निधौ ॥१०॥

विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम् । एवं विष्णुपदे चैव षडशीति मुखेषु च ॥११॥
अयनेषु विकल्पो[5] यस्तन्मे निगदतः शृणु । यावद्विंशकला भुंक्ते[6] तत् पुण्यमुत्तरायणे ॥१२॥
निरंशे भास्करे दृष्टे दिनान्ते दक्षिणायने । अर्द्धरात्रे तु सम्पूर्णे दिवा पुण्यमनागतम् ॥१३॥

---

१. क्षोभ क ग ।
२. ग्रहाणां पातुमेव वै ग ।
३. सुखादयः क ग ।
४. ह्याधि क ।
५. कल्पो क ।
६. युक्ता क ग ।

सम्पूर्णे चार्द्धरात्रे तु उदयास्तमनेऽपि च। मानार्द्ध भास्करं पुण्यमपूर्णे शर्व्वरीदिने[1] ॥१४॥
सम्पूर्णे उभयोर्ज्ञेयमविवेकेऽपरेहनि[2]। षडशीतिमुखेऽतीते वृत्ते च विषुवद् वये ॥१५॥
भविष्यत्ययते पुण्यमतीते चोत्तरायणे[3]। आदौ पुण्यं विजानीयाद् यदा भिन्नातिथिर्भवेत् ॥१६॥
अर्द्धरात्रे व्यतीते तु विज्ञेया चापरेऽहनि। मन्दा विप्रजने शस्ता मन्दाकिन्यस्तु राजनि ॥१७॥
ध्वांक्षी वैश्येषु विज्ञेया घोरशूद्रे शुभावहा[4]। महोदरी तु चौराणां शौण्डिकानां जयावहा ॥१८॥
चाण्डाल-पुक्वशानान्तु ये चान्ये क्रूरकर्मिणः। सर्वेषां कारुकाणाञ्च मिश्रिता धृतिर्वाद्धनी ॥१९॥
नृपान् पीडति[5] पूर्व्वाह्णे मध्याह्णे च द्विजोत्तमान्। अपराह्णे तु सा वैश्याञ्छूद्रानस्तमने रवेः ।२०।
पिशाचांश्च प्रदोषे तु अर्द्धरात्रे तु राक्षसान्। अर्द्धरात्रे व्यतीते तु पीड्यन्ते नटनर्तकीः[6] ॥२१॥

उषःकाले तु संक्रान्तौ हन्ति गो स्वामिनो जनान्।
हन्ति प्रव्रजितान् सर्व्वान् सन्ध्याकाले न संशयः ॥२२॥

एतत् स्थूल विभागन्तु भक्ति कामस्य कीर्तितम्। परमार्थेन या संख्या कथयामि नृपोत्तम ॥२३॥
सुस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्। तस्य त्रिंशत्तमं भागं तत्परं परिकीर्तितम् ॥२४॥
तत् पराच्छतभागं तु त्रुटिरित्यभिधीयते। त्रुट्याः सहस्रभागार्द्धं तत्कालं रवि-संक्रमे ॥२५॥
तत् कालेषु द्रवीभूतं त्रैलोक्यं सचराचरम्। व्यतीपातेऽपि एवं स्याद् भवेत् पुण्यं समाधिकम् ॥२६॥
तत्र[7] ब्रह्मापि सन्दिग्धमुवाच सुरसत्तम। दानाध्ययनजापादि विशिष्टं घोर[8] होमतः ॥२७॥
वसोर्द्धारासु लभ्येत अन्यथा न कथञ्चन। देवीकालगता वत्स यथा सूक्ष्मं प्रकीर्तिता ॥२८॥
साधकी सर्व्वकामाणां महाभय विनाशिनी। कथिता ते मता सा तु किं भूयः परिपृच्छसि ॥२९॥

इति श्री देवीपुराणे संक्रान्तिविधिर्नाम चतुर्व्विंशोऽध्यायः[9]।

---

१. दले क।
२. ग पुस्तके नास्ति।
३. ग पुस्तके नास्ति।
४. शुभप्रदा क ग।
५. पीडयन्ति क।
६. नत्तका क ग।
७. अत्र क।
८. होम ग।
९. आद्ये देवीपुराणे संक्रान्तिविधि क ग।

# पञ्चत्रिंशोऽध्यायः ।

विद्याधर उवाच ।

यथा सा सर्वगा देवी सर्व्वेषाञ्च फलप्रदा । तथाहं श्रोतुमिच्छामि वसोर्द्धारां सुविस्तराम् ॥१॥

अगस्त्य उवाच ।

ब्रह्मणा या समाख्याता देवराजस्य पृच्छतः । विधिश्च पापहा श्रोतुः शृणुष्वावहितो मम ॥२॥

वसोर्द्धारा स्थिता देवी सर्व्वकाम प्रदायिका । तथा ते कथयिष्यामि शृणु पुण्यविवृद्धये ॥३॥

सर्वेषामेव[1] देवानां कथिता देवी[2] चोत्तमा । विशेषेण तु वह्निस्था आयुरारोग्यदा मता ॥४॥

विजयं भूमिलाभन्तु प्रियत्वं सर्व्वमानवान् । विद्या–सौभाग्य पुत्रादि कुण्डस्था संप्रयच्छति ॥५॥

तस्मान् नृपेण भूत्यर्थे वसोर्द्धाराश्रिता शिवा । पूजनीया यथा शक्त्या चण्डी[3] कामफलप्रदा ॥६॥

रुद्रादित्या ग्रहा विष्णुर्वयं यक्षाः सकिन्नराः । हुताशनमुखाः सर्व्वे दृष्टादृष्ट-फल-प्रदाः ॥७॥

गोदानं भूदानञ्च रत्नं सर्पिस्तिलानि च । दानानि महतान्याहुस्तेषां धारा विशिष्यते ॥८॥

विप्राणां कोटिकोटीनां भोजयित्वा तु यत् फलम् । तद्वृत्त-निरतैः शान्तैरेकेनापि च तद्भवेत् ॥९॥

व्यतीपाते न सन्देहः स च सूक्ष्मः प्रकीर्तितः । अयने[4] विषुवच्चैव दिनच्छिद्रं तथैव च ॥१०॥

दुष्प्रापं दानं होमानां धारायां लभते[5] नृपः । तस्मान् नृपेण वृद्ध्यर्थं दृष्ट्वादृष्ट जिगीषुणा ॥११॥

वसोर्द्धारा प्रकर्त्तव्या सर्वकामं जयावहा । समं[6] वा अथवार्द्धं वा ऋतुमासार्द्धवासरम् ॥१२॥

कृत्वा विभवरूपेण शाश्वतं लभते फलम् । एकाहमपि यो देवीं कल्पयित्वा हुताशने ॥१३॥

पातयेत् सर्पिषो धारां स लभतेप्सितं[7] फलम् । देवी-मातृ-समीपस्थं शिव-विष्णु-समीपगम् ॥१४॥

---

१. सर्वेषां ख ।
२. कथिते यं क ।
३. चाश्रु ग ।
४. अयनं क ग ।
५. लभ्यते क ग ।
६. सम क ।
७. अभेदोप्सितं क ग ।

भानोः प्रजापतेर्वापि वसोर्द्धारा गृहे भवेत् ।

चिरन्तनेषु[1] सिद्धेषु[2] स्वयं वा संस्कृतेषु च । पर्व्वतेषु च दिव्येषु नदीनां सङ्गमेषु च ॥१५॥

गुहासु च विचित्रासु गृहगर्भेषु भूमिषु[3] । दत्त्वा समीहितान् कामान् विधिना लभते नृपः ॥१६॥

अथ सामान्यतो गेहं समसूत्रं जनोन्मुखम् । वास्तुसंशुद्धि[4]-विन्यासमेकादशकरं परम् ॥१७॥

त्रीणि पञ्चाथ सप्ता वा दश वा नव कारयेत्[5] । विंशैकं वा बहुनां वा[6] त्रिंशदूर्ध्वं न कारयेत् ॥१८॥

पक्वेष्टं शैलदार्व्वं वा सलिङ्गं सहतोरणम् । पञ्च सप्त नवास्यं वा[7] गवाक्षक विभूषितम् ॥१९॥

सर्व्वतो भद्रविन्यस्तं क्रम वृद्ध्याविवक्षितम्[8] । ऊर्ध्वधूमस्य निष्कासं सप्रकाशं विशेषतः ॥२०॥

इति श्री देवीपुराणे तोरणविधिर्नाम पञ्चविंशोऽध्यायः[10] ।

---

१. पंक्तिरियं नास्ति क ग पुस्तके ।
२. चिरंतनिषू क ।
३. सर्वेषु क ।
४. लभ्यते क ।
५. वस्त्त संशुद्ध वा ।
६. पंचाथ वा सप्त दशवा नव कारयेत क ।
७. भावन्यूनं क ।
८. पण्ठाङ्क ख ।
९. नव वा क ग ।
१०. आद्ये देव्यवतारे शरणविधिः क ग ।



# षड्विंशोऽध्यायः ।

ब्रह्मोवाच ।

सदैवं सग्रहं कार्य्यमथवा देव तोरणम्[1] । तस्य मध्ये भवेत् कुण्डं हस्तादिलक्षणान्वितम् ॥१॥
चतुष्कमथ वृत्तं वा पङ्कजाकृति चाथ वा । पृथिवी जयदं शक्र[2] वृत्तं कामफलप्रदम् ॥२॥
पङ्कजे जयमारोग्यं योग-ज्ञान-प्रदायकम् । शेषाः कार्यविभागेन कुण्डाः कार्य्या विजानता ॥३॥
सामान्यं सर्व्वहोमेषु शक्र[3] कुण्डं वरोत्तमम् । विस्तारं खाततुल्यन्तु मेखलैस्त्रिभिर्भूषितम् ॥४॥
चत्वारि त्रीणि द्वे कुर्य्यादङ्गुलं कुण्डमानतः ।
द्विगुणान् द्विगुणे कुण्डे होम मात्रेण[4] कारयेत् ॥५॥
एवं संसाधयेद्विप्र स्तुतः पात्रं सशृंखलम् । हैमं वा राजतं वापि ताम्रं वा लक्षणान्वितम् ॥६॥
चत्वारि[5] कटकोपेतमयः शृंखल संग्रहम् । तस्य मध्ये भवेद्रन्ध्रं[6] कर्णार्द्धस्य शलाकया ॥७॥
होमोत्थया प्रमाणेन चतुरङ्गुलमानया । धृतनिष्क्रमणार्थाय कुर्य्यात् सम्यक् विपश्चितः ॥८॥
पलैर्दशभिरर्द्धोन्यैर्नान्येकान्तु मया ब्रजेत् । पञ्चभिस्तु शतैर्होमः सप्तत्या च षडस्त्रया ॥९॥
यथा पूर्णा ब्रजेद् वत्स तथा कुर्य्यान्न चान्यथा । हस्तमात्रं भवेद् हैमं शृंखलं भुजगाकृति[7] ॥१०॥
रन्ध्रे सूत्रनिबद्धश्च अवलम्ब्य अधस्तनम् । मणि वा पङ्कजं पात्रमाश्वत्थं कारयेत् तले ॥११॥
एवं कार्य्यानुरूपेण द्विगुणं त्रिगुणं पिवा[8] ।
कुर्य्यात् पात्रं धृतं वेद्यं प्रतिष्ठा-विधिवोदितम्[9] ॥१२॥

---

१. देवतैः समं क ग ।
२. दंशाकं कुडं वरो शास्त्रं ग ।
३. शाक्रं क ग ।
४. सारेण ग ।
५. चतुर्भि क ग ।
६. रत्नम् ग ।
७. शृंखलं च भुजा कृति ग ।
८. देवि क ।
९. सर्वकाल प्रदो यदा क ।

उद्देशं किञ्चिदत्रापि कथयामि नृपोत्तम । समायन ऋतुर्मास पक्षाहोरात्र पूर्व्ववत् ॥१३॥

लग्नादि विशोधयेद् वत्स सर्व्वकाम प्रदा यथा ।

क्षणिकेषु च कार्य्येषु भक्तियुक्तं[1] क्षणे शुभे ॥१४॥

क्षणं देवी च द्रष्टव्या यथा सर्व्वगता शिवा । तत्त्वभूता[2] ग्रहा नागास्त्रिगुणापि शिवा गुणाः ॥१५॥

नित्ये नैमित्तिके होमे मन्त्रयोगेन दापयेत् । यो यस्य भक्तिमासक्तस्तस्य कुर्य्यात् तु सन्निधिम् ॥१६।

सग्रहान् लोकपालाँस्तु मातरा भुजगं पिवा । कल्पयेत् सर्व्वहोमेषु देवी एतैर्व्यवस्थिता ॥१७॥

स्थूलरूपा तु तैस्तुष्टैस्तुष्टा देवी महाफला । कालादिबलि गन्धादि[3] प्रतिष्ठावच्च कारयेत् ॥१८॥

यदा[4] सम्पत्ति सम्पन्नः सर्वकाले[5] प्रदापयेत् ।

तदा मन्त्र-ग्रह-भूतान् लोकपालान् निवेशयेत् ॥१९॥

हैम[6]राजत ताम्रा वा[7] सुनिवे शोपलक्षिता । वस्त्र[8] पुष्पवलिर्गन्धदक्षिणादि यथाक्रमम् ॥२०॥

मातरं लोकपालानां ग्रहाणाञ्च यथाविधि । हृदयेन प्रदेयन्तु मूलमन्त्रैः पुरातनैः ॥२१॥

अथवा सर्व्वसामान्यां वैदिकामपि कारयेत् । अथर्व्व विधिना वत्स पूर्वोक्ता वा यथा पुरा ॥२२॥

प्रभूत-मन्त्र-नैवेद्यै भूँरि-दक्षिण-संयुतैः । कुर्य्यान्महाप्रयत्नेन अन्यथा न कथञ्चन ॥२३॥

छेदे भयं विजानीयात्[9] तदर्थं तन्न कारयेत् ।

सहस्राहुति होमेन यत्र तत्र निवेशयेत् ॥२४॥

मूल मन्त्रेण देव्यायाः शृंखला हृदयेन तु ।

घृतञ्च शिरोमन्त्रेण शिखायां तत्र पातयेत्[10] ॥२५॥

कवचेन तथा वह्नि रक्षयित्वा प्रदापयेत् । अश्वमेधेन मन्त्रेण सर्व्वं सर्व्वासु निक्षिपेत्[11] ॥२६॥

---

१. भक्तियुक्त य ।
२. तद्भूता ग्रहा नागा क ग ।
३. कालादिवनि क ग ।
४. तदा क ग ।
५. संपर क .
६. इमा क ग ।
७. बाल क ।
८. वर्ग क ।
९. विजायात् क ।
१०. क पुस्तके नास्ति ।
११. सर्वं सर्व्वास्त्र निक्षिपेत् क ।

लोकपालान्[1] ग्रहान्-नागान् द्वादशार्द्धेन पूजयेत् ।
शिवाद्यान् सनकाद्यांश्च देवाद्यानपि पूजयेत् ॥२७॥
नित्येषु च महा[2] प्राज्ञ नैमित्तेषु विशेषतः । पञ्चकानि च सप्तादि नवकानि क्रियादिकैः ॥२८॥
अग्रे वर्णाश्च गन्धश्च शब्दाश्चाकृतयस्तथा ।
विकाराश्च तथा[3] वत्स बोद्धव्याः सिद्ध्यसिद्धिदाः ॥२९॥
तदन्ते च स्तवं कार्यं सर्व्वकामप्रदायकम् । येन सान्निध्यमायाति सर्व्वहोमेषु मङ्गला ॥३०॥
सहस्राच्चि महातेजा नमस्ते बहुरूपिणे । नीलकण्ठ शितिकण्ठ पीतवासाय पावने[4] ॥३१॥
स्रुवमेखलधाराय ब्रह्मणे दहने नमः । सर्व्वाशिने सर्व्वभर्त्रे पावकाय नमो नमः ॥३२॥
दुर्गाय उमारूपाय स्त्रीलिङ्गाय सुतेजसे । वसु अश्विनरूपाय सर्वाहाराय वै नमः ॥३३॥
त्वं रुद्र घोरकर्मासि घोरहा परमेश्वरः ।
विष्णुस्त्वं जगतां पालो[5] ब्रह्मा सृष्टिकरः स्मृतः ॥३४॥
त्वञ्च सर्वार्थको[6] देव यमाय पिशिताशिने । वरुणानिलाय सोमाय ईशदेवाय वै नमः ॥३५॥
सूर्याय चात्रिपुत्राय भूसुताय बुधाय च । बृहस्पतये शुक्राय शनि राहोऽथ केतवे ॥३६॥
सर्व्वगे ग्रहरूपाय व्याल[7] मातङ्ग रूपिणे । वृष्टि सृष्टि स्थितिर्भूति कर्त्ताय वरदाय च ॥३७॥
नमस्ते स्कन्द मातस्त्वं पित्रे चापि नमो नमः ।
कुण्डे वा मण्डले वापि स्थंडिले वापि त्वं विभो ॥३८॥
महानसे वा त्वां देव हुत्वा इष्टं लभेन्नरः । घृत-क्षीर-रस-धान्य-तिल-व्रीहि-यवान्[8] कुशान् ॥३९॥
भावादभावतो[9] वापि सततं होमयेदनले । एवं विधिविहीनोऽपि नरो विगतकिल्विषः ॥४०॥
किं पुनर्नित्यहोमं तु वसोर्द्धारा हुताशने । सर्व्वं मङ्गल मन्त्रेण पूर्णाहुतिं प्रदापयेत् ॥४१॥
लोकपाल ग्रहाणां तु ओंकारेण नमोऽन्तिकैः । स्वैः स्वैर्मन्त्रैस्तु शेषाणां होमं कार्य्यं नृपोत्तम ॥४२॥

---

१. लोलाकपाल क ।
२. व पथा क ।
३. तथा राश्चतथा क ।
४. नील क ।
५. जगत्पालोसि क ग ।
६. देव लोकपाल तत्स्थित क इन्द्रा पत्रह्मये क ।
७. वाल्य ख ।
८. यवं क ग ।
९. भावाय भावतो वापि ख ।

अन्नं विचित्रं शुष्कञ्च संस्कृतं घृतपायसैः । होमयेद्विधिवद् विप्रो बलिञ्चापि प्रदापयेत ॥४३॥

सितवस्त्रधरो भूपः सबलः सहवाहनः । पूजयेत् शम्भुं रुद्रादीन् मातरं पितरं द्विजान्[1] ॥४४॥

आचार्य्यान् ब्राह्मणां[2]ल्लोकान् सर्व्वाश्रमरताश्च ये ।

नट–नर्त्तक[3]-वेश्याश्च कन्यका विधवाः स्त्रियः ॥४५॥

दीनान्ध-कृपणांश्चैव अन्नदानेन पूजयेत् । एवं निवेशनं कृत्वा नित्यं जप्यं शतं शतम् ॥४६॥

प्रातर्मध्याह्न संध्यायां स्तवं शान्ति प्रकीर्त्तनम् । भवते नृपराष्ट्रस्य पूर्वोक्तं फलदायकम् ॥४७॥

इति श्री देवीपुराणे वसोर्द्धारा-निवेशनविधिः नाम षड्विंशोऽध्यायः[4] ।

---

१. पूजयेच्छत्र रत्ना दान मातरं द्विजात् क ।
२. बांधवान् क ग ।
३. नरनेर्नक क ।
४. इत्याद्ये देव्यवतारे वसोर्धारानिवेशनविधिः क ग ।



# सप्तविंशोऽध्यायः ।

ब्रह्मोवाच ।[1]

तप्तहाटकवर्णेन सूर्य्य-सिन्दूर-कान्ति कृत । शङ्खकुन्देन्दु-पद्माभो[2] घृत-क्षीर निभः शुभः ॥१॥

जवाभोऽशोक-पुष्पाभो लाक्षादर समन्वितः । शुभदः सर्व्वकार्याणां विपरीतो ह्यसिद्धिदः ॥२॥

मेघदुन्दुभि-शङ्खानां वेणुवीणा-स्वनः शुभः । वृषेन्द्र नृप[3]काकानां कोकिला-स्वन पूजितः[4] ॥३॥

कुंकुमागुरु-कर्पूरसित-गन्धि च पूजितः । हंसछत्रेभ-गोकुम्भ पद्माकृतिकरः शुभः[5] ॥४॥

सिंह-वर्हिण-श्येनानां चामरा कृतिरिष्टिदः । सधूमो मृतगन्धा च मूकः षड्वरणोपमः ॥५॥

छिन्न[6] ज्वालोऽथ वा रौद्रो नेष्टः[7] सर्व्वेषु पावकः ।

सु[8]संहतशिखः शक्र ऊर्द्ध्वं वातेऽपि याति यः ॥६॥

लेलिहानः शुभः कुण्डो दीप्तिमान् वरदोऽनलः । एवंविधः सदा पार्थ यज्ञेनैवाह स्थापनैः ॥७॥

यात्रायां शक्रकेतौ च सर्व्वकार्येषु सिद्धिदः । न्यूना या वहेत धारा मानात् सर्पिर्न सा शुभा ॥८॥

नाधिका[9] शस्यते विप्र[10] दुर्भिक्ष-कलि-कारिका । नुदते वहमाना या शसते च हुताशनम् ॥९॥

सापि चान्यं नृपमिच्छेत् यावद् घोरायते भुवि । ऋजुनादी महारूपा मनोज्ञा[11] प्रियकारिका ॥१०॥

सुवर्णा हेमवर्णा च धारा राज्य-विवृद्धये । सततं पतते यातु तनोतीब च पावकम् ॥११॥

तनोति नृपराष्ट्रं सा वसोर्द्धारा न संशयः । सुगन्धि स्वच्छं विमलं कृमि-कीट-विवर्ज्जितम् ॥१२॥

शस्यते च वसोर्द्धारा सर्पिर्गव्यन्तु पूजितम् । अभावाद् गव्यलाजं[12] वा होतव्यन्तु सुशोभनम् ॥१३॥

---

१. शक्र उवाच ग । २. वर्णाभो क ग । ३. वृषेभ शिखि क ग ।
४. मन शिला कुष्ठ कर्पुर ख । ५. हंस छत्रेभ्यो सिंह वर्हिणं शैलानां चा मग कृतिरिष्टद क ।
६. छित क । ७. शिष्ट क । ८. स्व क ।
९. लोंधिका क । १० शक्र क । ११. श्रनोजा क ।
१२. गव्यजास्नं क ।

घृतक्षौद्र पयोधारा सर्वपीडा निवारिणी। गुड्वीश-कलैर्होमं सहकारदलैः शुभैः ॥१४॥
अश्वत्था मालती दूर्व्वा आयुरारोग्यपुत्रदा । सौभाग्यञ्च श्रियं[1] देवी प्रयच्छत्यविचारणात् ॥१५॥
अर्कादि वा शुभा वत्स सफला सर्व्वकामिका[2] । होतव्या सर्वकालन्तु मातरादविच्छेदिनी ॥१६॥
सर्व्वकालं घृतं प्रोक्तं निमित्ते चात्मवित्तमः[3] । विशुद्धि सर्पिषा यानि तानि नात्र विचारयेत् ।१७।
ज्वाला वर्णं शुभं गन्धं सर्व्वहोमेषु लक्षयेत् । संयतो संयताहारैः सर्व्वशास्त्रार्थपारगैः ॥१८॥
जप होमरतैर्भूप धारा देया च तद्विदैः । पाषन्ड विकलान् लुब्धान् धर्म्मार्पितान् असंयतान् ॥१९॥
सर्व्वकाल-प्रदायी तु न वदेन्नावलोकयेत् । मृत्युञ्जयं महातत्त्वं चतुः सप्ताष्ट जापिना ॥२०॥

भाव्यं वै नित्यहोमे तु अन्यथा विफलं[4] भवेत् ।
सामान्या या भवेद्धारा तस्मिन् जप्यं शतं शतम् ॥२१॥

प्रातर्मध्याह्ण-सन्ध्यासु सर्व्वकाम-समृद्धये । वसु-द्रव्यं घृतमाज्यममृतं हविः कामिकम् ॥२२॥
तस्य धारा सदा देया वसोर्द्धारा हि सा मता । वसुना स्वर्ग-कामेण[5] दक्षेण च महात्मना ॥२३॥
मया च विष्णुना शक्र रुद्रेण च सहोमया । आत्मानञ्च स्वरूपेण धारायान्तु प्रदापयेत्[6] ॥२४॥
देवी सान्निध्यमायाता सर्व्वकाम-प्रदायिका । तस्मात्त्वमपि राजेन्द्र वसोर्धारां प्रपातय ॥२५॥
नातः परतरं पुण्यं विद्यते नृप-सत्तम । वसोर्द्धारा प्रदानस्य एकाहमपि यद्भवेत् ॥२६॥
नृपेणायुष्कामेण पुत्रदारसुखार्थिना[7] । देया धारा सदा वत्स रिपुनाशाय बुद्धिना[8] ॥२७॥
विच्छेदो नित्य-होमस्य न च कार्य्यं कदाचन । महादोषमवाप्नोति ये तत्र विमुखाः नराः[9] ॥२८॥
द्रव्याभावे घृताभावे नृपतस्करजे भये । यदि नो वहते धारा तदाच्छिद्रं न विद्यते ॥२९॥
होमं कृत्वा क्षमापेत देवदेवीं नृपोत्तम । पुनः प्राप्तौ भवेद्होमं प्रतिष्ठा विधिचोदितम् ॥३०॥
महा आश्विन मासे तु अष्टमी नवमीषु च । कार्तिक्यां माघचैत्रे तु चित्रायां[10] रोहिणीषु च ॥३१॥

---

१. प्रियं क ग ।
२. सकला हस कामिका क ।
३. चार्थं क ग ।
४. विकलं क ग ।
५. सर्वकामेण क ग ।
६. प्रपातितम क ग ।
७. नृपेण पुत्र राज्य जिगिपुणा क ग ।
८. बुद्धिमान क ग
९. गवामेत ये तत्र विमुखा सुरा क ग ।
१०. पित्रे तुष्टिद्रायां क ।

वैशाख्यान्तु प्रदातव्या ज्येष्ठां ज्यैष्ठस्य सत्तम[1] ।
आषाढे द्वादशी होमं अष्टमी पूर्णिमा नभे ॥३२॥
नभस्ये रोहिणी वत्स चतुर्थ्यां स्कन्दजे दिने ।
संक्रान्तिषु च सर्व्वासु गुरुसौरि भवासु च ॥३३॥
चन्द्र-सूर्य्योपरागेषु प्रतिष्ठा[2] यज्ञ-कर्मणि ।
शक्रोच्छ्रये प्रदातव्या जन्मपुष्याभिषेचने ॥३४॥
मार्गे व्रतनिबन्धे तु शुभे वा केतुदर्शने । ग्रहकृत्योपसर्गेषु धारा देया शुभावहा ॥३५॥
एवं यो वाहयेद् धारां शास्त्र दृष्टेन कर्म्मणा । तस्य भूः सिध्यते सर्व्वा सनागा सहसागरा ॥३६॥
अश्वमेधसमं पुण्यं दिनहोमात् प्रजायते । वाजपेयशतं रात्रावग्निष्टोमशतं तथा ॥३७॥
आधयो व्याधयस्तस्य न भवन्ति कदाचन । आयुरारोग्यमैश्वर्यमिह चान्ते शिवी भवेत्[3] ॥३८॥

इति श्री देवीपुराणे वसोर्धारादानविधिर्नाम सप्तविंशोऽध्यायः[4] ।

---

१. सत्तमा क ।  २. क पुस्तके नास्ति ।
४. वाते शिवा भवेत क ।  ५. इत्याद्ये देवीपुराणे वसोर्धारा समाप्ता क ग ।



# अष्टाविंशोऽध्यायः ।

अगस्त्य उवाच ।

शूलिनो ब्रह्मणा प्राप्तमिन्द्राच्च मम आगतम् । मयापि ते यथा वृत्तं तथा राजन् प्रकाशितम् ।१।
ब्रह्म विष्णु शिवानाञ्च[1] महाभय विमोक्षदम् । मन्त्रितं शक्र-गोविन्द-वाचस्पति-पितामहैः ॥२॥
रुद्रस्तोत्रं महादेव्या विष्णवाराधन-घोरजम् । वधं महिषरूपस्य भूमौ देव्यवतारणम् ॥३॥
व्रतं व्रजोच्छ्रयं धारा मङ्गलेषु पठेत् सदा[2] । देव्यायतने देवस्य शङ्करस्य हरेरपि ॥४॥

गोष्ठे वा चत्वरे शैले गृहे वा सुमनोरमे ।
देवीं सम्पूजयित्वा तु भोजयित्वा कुमारिकाः[3] ॥५॥
तद्भक्ति भावितान् विप्रान्-सद्वृत्ताञ्छास्त्रतत्परान् ।
यथाशक्त्या च पूज्येत्[4] हेमवस्त्रविभूषणै ॥६॥
ततस्तान् स्वस्ति वाचयित्वा पूजयित्वा तु पुस्तकम् ।
सुगन्ध-गन्ध-धूपेन पुष्पमाल्यैः सुचन्दनैः ॥७॥

घण्टाचामरशोभाढ्यै दर्पणैरूपशोभिते । दुकूले वस्त्राभरणे दण्डयन्त्रे निवेशयेत् ॥८॥
वाचकं पूजयित्वा तु यथाविभवविस्तरैः । वाचयेत् ततो राजा देवी माहात्म्यमुत्तमम् ॥९॥
तदन्ते शान्ति शव्दस्तु जनस्य स नृपस्य च । [5]गो ब्राह्मण पूजानान्तु वनस्पति मुखेषु च ॥१०॥
क्षत्र-विट्-शूद्र-बालानां सर्वमेव शुभं तु वः । अनेन विधिना राजा यः पठेत् शृणुयादपि ॥११॥
चिन्तयेद् वाचयेद् वापि तस्य पुण्यफलं शृणु । अश्वमेध सहस्रस्य वाजपेयशतस्य च ॥१२॥

---

१. सुराणां च क ।
२. यथा क ग ।
३. मारिका क ।
४. दत्ते क ।
५. इत परं ग पुस्तके नास्ति ।

अग्निष्टोम महाष्टोम राजसूय महामखैः ।
यत् फलं लभ्यते तात तत् फलं शतधा भवेत् ॥१३॥
गङ्गातोया भिषेकादैस्तीर्थैर्नैमिष पुष्करैः । यत् फलं लभ्यते राजंस्तत् फलादयुताधिकम् ॥१४॥
ब्रह्महत्यादिपापानां शमनं परमं शतम् । वर्द्धनञ्चाथ-धर्म्माणां काम-मोक्ष-फल प्रदम् ॥१६॥
पुत्रदं पत्निदं तात जयदं सौख्यदं परम् ।
अनेन विधिना वत्स प्राप्नोति श्रवणान्नरः ।
इह कीर्तिं श्रियं ब्राह्मीं परत्र भवति लयम् ॥१७॥

इति श्री देवीपुराणे देव्यास्तव-पठन-माहात्म्यं नाम अष्टाविंशोऽध्यायः[1] ॥

१. इत्याद्ये देवीपुराणे देव्याः पुस्तकपठनमहात्म्यम् क ग ।



# एकोनत्रिंशोऽध्यायः ।

शक्र उवाच ।

एवं सर्व्वप्रदा देवी यथा नाथ प्रवर्णिता । तस्याहं श्रोतुमिच्छामि व्याख्याराधनपूजनम् ॥१॥

ब्रह्मोवाच ।

न परा चापरा देवी पूर्वं वा च पुरन्दरम् । तस्यास्त्वं भक्तिमापन्नः कथनादेव वासव ॥२॥
यदा सद्भावता तस्या व्याप्तिभावेन विद्यते । तदा त्वं सुरराजेन्द्र शृणुष्वेकमनोधुना[1] ॥३॥
एका एव पराशक्तिः सर्व्वगा व्यापिनी किल । स्वभावात् कर्तृरूपत्वात् भूताद्यैः पञ्चधा स्थिता ।४।
भूत तन्मात्र-बुद्धाख्य कर्म्मवर्ग मनोधिषु । अहङ्कार प्रधानेन प्रभावात् सा व्यवस्थिता ॥५॥
हेमजन्तु महद्दण्डं सहस्र किरणोज्वलम्[2] । तप्तहाटक-सङ्काशं कोट्यायुतसम[3]प्रभम् ॥६॥
शतकोटि प्रविस्तीर्णं समन्तात् परिवर्त्तनम्[4] । तश्च वर्षं सहस्रेण द्विधाभूतं पुनस्ततः[5] ॥७॥
मध्ये तस्याभवद् ब्रह्मा चन्द्र-सूर्येक्षणो विभुः । सकलं भू दिवं भूत खं दिशो मनौगोचरम् ॥८॥
स सिसृक्षु प्रजाः सर्व्वास्तदादेशेन वासव । स एव स्थितये विष्णुविनाशे रुद्रः सोभवत्[6] ॥९॥
स्थावरस्य चरस्यास्य दृश्यादृश्यस्य वासव । जरायुजान्डज स्वेदानामुद्भिदानां तथैव च ॥१०॥
नगानद समुद्राणां विशेषे तद्भवोऽभवत् । विद्यावेदन-वेदानां वाञ्जनी जननी तथा ॥११॥
माता मातृक भेदेन वर्ण भेदेन सा स्थिता । मन्त्र-तन्त्र-क्रिया-मुद्रा-विष-भूत-ज्वरादिषु ॥१२॥
अन्यापि तत् प्रभावेण शमन्ते भिषजो रुजः । न च वर्णान्तराभावा आश्रमाणां क्रियास्तथा ॥१३॥

---

१. शृणुष्व कमलामुता क ।
२. किरणोज्वलम् क ।
३. शशि क ।
४. समन्ता ये विहर्णं क ।
५. तत पुन क ।
६. स न व स्थितं यो विहतो विनाशे रुद्र सोमवत् क ।

ईक्षते मन्त्ररूपेण सूर्य्यस्य इव रश्मयः । सा च वर्ण क्रमाद्भूता द्विजाति ब्रह्मचारिणी ॥१४॥

सङ्कर[1] प्रभावाणाञ्च वर्णानां करणे स्थिता ।

आन्विक्षिकी त्रयी वार्ता दण्डाख्या सा च कीर्तिता ॥१५॥

दीप्तिः सूर्य्ये क्षमा भूमौ कान्तिश्चन्द्रे जले प्लुति[2] ।

ज्वाला वह्नौ गतिर्वायौ व्योम्नि सा व्यापिनी भवेत् ॥१६॥

यजमाने तथा दीक्षा धारणा योगिनामपि । प्रज्ञा प्रज्ञावतां सा तु वाग्मिनान्तु सरस्वती ॥१७॥

लक्ष्मी सा तु धनाढ्यानां सिद्धि सिद्धिमतामपि । दया दयावती सातु प्रीति प्रीतिमतामपि ॥१८॥

शरा खड्गे ज्याधनुषि शब्दो वाद्येषु सा स्मृता । परस्य सा परत्वेन शिवस्य शिवगामिनी[4] ॥१९॥

भक्ति मुक्ति प्रदा देवी ब्रह्मादीनान्तु सा मता ॥२०॥

इति श्री देवीपुराणे व्याप्ति प्रशंसा नाम[5] एकोनत्रिंशोऽध्यायः ।

---

१. शंकर क ।
२. जले ह्लाति क ।
३. शब्दो राज्येषु सा स्मृता क ।
४. शिवगेसिना क ।
५. इत्याद्ये देवीपुराणे व्याप्ति प्रशंसा क ।



# त्रिंशोऽध्याय :।

ब्रह्मोवाच ।

शृणु तस्या सुराध्यक्ष आराधन-विधिं पराम् । यथा सा तोषिता पूर्व्वं शङ्कराद्यैः फलेप्सुभिः ॥१॥
कर्म्म-यज्ञेन देवेश तथा त्वामपि पूजयेः । शम्भुः पूजयते देवीं मन्त्र[1]शक्तिमयां शुभाम् ॥२॥
अक्षमालाकरो नित्यं तेनासौ विभववान्नरः । अहं शैलमयीं देवीं यजामि सुरसत्तम ॥३॥
तेन ब्रह्मत्वमेवेदं मया प्राप्तं सुदुर्लभम् । इन्द्रनीलमयीं देवीं विष्णुरर्च्चयते सदा ॥४॥
विष्णुत्वं प्राप्तवांस्तेन अद्भुतैः कंसनाशनाम् । देवीं हेममयी कान्तां धनदोऽर्चयते सदा ॥५॥
तेनासौ धनदो देवो धनेशत्वमवाप्नुयात् । विश्वेदेवा महात्मानो रौप्यां देवीं मनोहराम्[2] ॥६॥
यजन्ति विधिवद्भक्त्या तेन विश्वतत्त्वमाप्नुयुः । वायुः पूजयते भक्त्या देवीं पित्तलसम्भवाम् ॥७॥
वायुत्वं तेन तत् प्राप्तमनौपम्य गुणावहम् । वसवः कामिकां देवीं पूजयन्ते विधानतः[3] ॥८॥

प्राप्नुवस्तन्महात्मानो वसुत्वं हि शुभावहम् ।
अश्विनौ पार्थिवीं देवीं पूजयेत विधानतः ॥९॥
तेन तावश्विनौ देवौ दिव्य-देह-गतावुभौ ।
स्फाटिकां शोभनां देवीं वरुणोऽर्च्चयते सदा[4] ॥१०॥
वरुणत्वं हि संप्राप्तं तेन ऋद्धया समन्वितम् ।
देवीं मन्त्रमयीं पुण्यामग्निर्यजते भावितः ॥११॥
अग्नित्वं प्राप्तवांस्तेन तेजोरूपसमन्वितम् ।
ताम्रां देवीं सदा काल भक्त्या देवो दिवाकरः ॥१२॥

---

१. सेन्द्रे क ।
२. मनोरमाम् क ।
३. वरुणोऽर्चयते सदा क ।
४. कपुस्तके नास्ति ।

अर्च्चते तत्र संप्राप्तं तेन सूर्य्यत्वमुत्तमम् । मुक्ताफलमयीं देवीं सोमः पूजयते सदा ॥१३॥
तेन सोमेन सोमत्वं[1] संप्राप्तं सततोज्ज्वलम् । प्रवालकमयीं देवीं यजन्ते गुह्यकादयः[2] ॥१४॥
तेन भोगबलोपेताः प्रयान्तीश्वर-मन्दिरम्[3] । वज्रलोह-मयीं देवीं यजन्ते मातरः सदा ॥१५॥
मातृत्वं प्राप्य ताः सर्व्वाः प्रयान्ति परमं पदम् । एवं देवाः[4] सगन्धर्व्वाः पिशाचोरगराक्षसाः[5] ।१६।
पूजयन्ति सदाकालं चर्च्चिकां सुरनायिकाम् । तथा त्वमपि देवेन्द्र यदीप्ससि[6] परां गतिम् ॥१७॥
शिवां मणिमयां पूज्य लभसे मनसेप्सितान् ।
कामान् सुरवराध्यक्ष कामिकैः पूजिता सदा । ददाति सर्व्वलोकानां चिन्तामणिर्यथा शिवा ॥१८॥

इति श्री देवीपुराणे द्रव्य-विधि-पूजा-देवीमाहात्म्यं नाम त्रिंशोऽध्यायः[7] ।

---

१. संप्राप्त सोम क । २. पतगोत्तमा क ।

३. तेन नागास्तु भोगाढ्याः प्रयांत्यंते परं पदम् ।
कृष्णायसमयीं देवी पूजयन्त्युत्तरोत्तमाः ।
राक्षसाश्च महात्मानो तेन ते सितविक्रमाः ।
प्रयुसीसमयीं देवीं पिशाचाः पूजयंति ताम् ॥
तेन ऋद्धि बलोपेताः प्रयांति परमं पदम् ।
त्रैलोहकीं सदा देवीं यजंते गुह्यकादयः ।

४. नरं देवी क । ५. पिशोचोरगरोल्लसा क । ६. कामक ।

७. इत्याद्य देवीपुराणे द्रव्य-विधि-पूजा देवी माहात्म्यम् । एष अध्यायः ग पुस्तके नास्ति ।



# एकत्रिंशोऽध्यायः ।

ब्रह्मोवाच ।

भूयस्ते[1] संप्रवक्ष्यामि देव्याराधनमुत्तमम् ।
यत् कृत्वा सर्व्वं कामाणां व्याप्तिः तृप्ति[2]र्भविष्यति ॥१॥

दन्तिदन्तमयैर्दन्डै हैंमवद्धैः[3] सुशोभनैः । विचित्र-पद्मरागाद्यैर्मणिभिरूपशोभितैः ॥२॥
रथं तैः कारयेद् देव्याः सप्तभौमं मनोहरम्[4] । दुकुल वस्त्र संच्छनंमर्द्धचन्द्रोप्यशोभितम् ॥३॥
घण्टा किङ्किणी शब्दोद्यं चामरैः कन्दुकान्वितैः[5] । पताकाध्वजशोभाढ्यं[6] दर्पणैरूपशोभितम्[7] ।४।
तं रथं पूजयेच्छक्र जाती-कुसुम-मन्दकैः[8] पारिजातसु[9]पुष्पैश्च रक्त कर्द्दम चन्दनैः ॥५॥
सुगन्धि धूपितं कृत्वा[10] देवीं तत्र निवेशयेत् । प्रतिमां शोभनां वत्स महासुर-क्षयङ्करीम्[11] ॥६॥
पूजयेद्रथविन्यस्तां सर्व्वमङ्गलमङ्गलाम् । दुर्गा कात्यायनी देवी वरदा विन्ध्यवासिनी[12] ॥७॥

निशुम्भ-शुम्भ-मथनी महिषासुरघातिनी ।
उमा क्षमावती माता शङ्करस्यार्द्ध-कायिका ॥८॥
प्रसीदतु सदा मेऽस्तु यच्च नो वाञ्छितं हृदि ।
अनेन वलि पूर्वेण[14] नमस्कार युतेन च ॥९॥

पूजायत्वा[15] तता नैषा समस्ताप्सरगीतकैः । पञ्चमी सप्तमी पूर्णा नवम्येकादशीषु च ॥१०॥

---

१. भ्वयंते क । २. व्याप्ति ख । ३. हेमवंधा क ।
४. मनोरमं क । ५. कंदुकाचितं क । ६. शोभातं क ।
७. नास्ति क पुस्तके । ८. पूजयछक्र ताती कुसुमलिप्तैः क ।
९. परिजात ख । १०. क्रला क । ११. पंकरी क ।
१२. विंध्यवासिदतु सदा नेस्क्त य घनोहृदिवांछितं क । १३. नास्ति क पुस्तके ।
१४ वल पूर्वेण क । १५. पुजयित्वा क ।

तृतीया शिव विघ्नेश दिवसे वत्सरेषु[1] च । महानदी-नद[2]-सङ्ग-पर्व्वत-स्रवणेषु च ॥११॥

तत्र[3] मन्डप विन्यासं[4] महादार्विष्ट निर्म्मितम् । शैलं वा मृन्मयं वापि कृत्वा वास्तु[5]विभावितम्[6] ।१२।

सर्व-लक्षण-सम्पूर्णं[7] सर्व्व-शोभा-समन्वितम् । पूर्व्वं च कारयेच्छक्र पश्चाद् यात्रां प्रचक्रिरे ॥१३॥

महाजनपदोपेतां महास्त्री-सङ्घ-संकुलाम्[8] । सर्व्वान्न-याव-नैवेद्यैः समस्तैरपि[9] पूजयेत् ॥१४॥

दद्याच्च दिग्वलिं शक्र सर्व्वादिक्षु समन्वितः[10] । भूत-वेताल-सङ्घस्य मन्त्रेणानेन सुव्रत ॥१५॥

जय त्वं कालि भूतेशी सर्व्व-भूत[11]-समावृते । रक्ष मां निज भूतेभ्यो वलिं गृह्ण शिवप्रिये[12] ॥१६॥

मातर्मातर्वरे दुर्गे सर्व-कामार्थ-साधिनि । अनेन बलिदानेन सर्व्वान्[13] कामान् प्रयच्छ मे[14] ।१७॥

एवं दत्त्वा वलिं शक्र ततो[15] देव्यावतारयेत् । विन्यसेद्भद्रपीठेतु मण्डलैरूपशोभितम् ॥१८॥

तत्रस्थां पूजयेद् देवीं हैम रौप्यश्च ताम्रजैः । कलसैस्तु सहस्रेण गन्धोदक-सुपूरितैः ॥१९॥

समस्त-फल-सम्पूर्णैर्याज्ञियैरथ पल्लवैः । स्नापयेदेकमेकेन रत्नगर्भैर्न्नवैर्दृढैः ॥२०॥

वेद-मङ्गल-शब्देन शङ्ख-वादित्र निस्वनैः । वेणु-वीणा-मृदङ्गैश्च घण्टा-किङ्किणीरावृतै[16] ॥२१॥

स्नापयित्वा ततो देवीं भूषयेद् दुकुलैः[17] शुभैः । गोमयादिकृतैः पद्मैर्दीपवत्यैः विरोधितैः ॥२२॥

स्वस्तिकैर्न्नन्दिकावर्तैः शङ्खैर्नीलोत्पलोत्पलैः[18] ।
यव शालाङ्कुरोद्भिन्नैर्य्यव-वास-समन्वितैः[19] ॥२३॥

प्रत्येकं तु ददेद्भूयं प्रत्येकं कलशैः स्नपेत् । तथा कर्पूरक्षोदेन चन्दनैः[20] कुङ्कुमेन च ॥२४॥

गोरोचना समेतेन देवीमालिप्य पूजयेत् । हेमजैर्जातिजैर्माल्यैः रत्नन्यासैरनेकधा ॥२५॥

वासोभिः सुमनैश्चित्रैः पुनर्धूपं समुत्क्षिपेत्[21] ।
भक्षयेत् तु[22] तथा कन्यां द्विजान् दीनान् सुदुःखितान्[23] ॥२६॥

---

१. मृत्यवेषु क । २. महानद नदी क । ३. भद्र क ।
४. विनासं क । ५. कृलवासक्त क । ६. विभागवित क।
७. सपरं क । ८. सहास्त्री संकुला क । ९. समस्तैराये क ।
१०. दद्यैव्वरि ग्वलि शक्र सर्व दिक्षि समंतता क । ११. समावृतो क ।
१२. ग्ब्रह्सदा प्रिये क । १३. सर्व क । १४. प्रयच्छमे क । १५. प्रथा क ।
१६. रावितै क । १७. मज्जे द्वंद्व कैः शुभैः क । १८. नीलोत्पलैः क ।
१९. यव साल्यं कुरोद्भिन्निमजयेत् क । २०. चन्दनं क ।
२१. समंज्ञियेत् क । २२. दक्षयेत् क । २३. दीनी तु दुःखितात् क ।

भक्त भोज्यानतपानेन तत्र सर्व्वांश्च प्रीणयेत् । भोजयित्वा[1] क्षमायेत देवी मे प्रीयतामिति ॥२७॥
तथा देव्या रथे कृत्वा पुनरेव गृहं नयेत्[2] । [3]शान्त-रेणु-पथं सर्व्वं पुष्प-दूर्व्वाक्षतैर्ज्जलैः ॥२८॥
प्रक्षिप्यमाणैः कन्याभिः स्त्रीभिः मङ्गलवादिभिः[4] ।
सलिलेन पथि[5]पांशुं कृत्वा पङ्कं प्रचक्रिरे ॥२९॥
पुरशोभां पथि[5]शोभां द्वारशोभां गृहे-गृहे । कारयीत[6] तथा शक्र सर्व्वबाधां निवारयेत्[7] ॥३०॥
अच्छेद्यास्तरवस्तस्मिन् प्राणिहिंसा विवर्जयेत् । बन्धनस्था विमोक्तव्या[8] वध्या क्रोधादि शत्रवः ।३१।
अकाल कौमुदीं शक्र रथयात्रान्ते कारयेत् । सर्व्वदा सर्व्वदेवैस्तु शङ्कराद्यैः प्रतिष्ठिता ॥३२॥
रथ यात्रा तदा शक्र सुरैः स्वर्गे सदा कृता[9] । तथा किन्नर-गन्धर्वैः भू-पाताल निवासिभिः ॥३३॥
रथ यात्रा प्रभावेण मोदन्ते दिवि देवताः । आदित्यो रथयात्राकृद्रथेन नभसः क्रमेत् ॥३४॥
देवा दिव्य-विमानस्था रथयात्रा प्रभावतः । क्रीडन्ते विविधैर्भोगैः सर्वातङ्क[10] विवर्जिताः ॥३५॥
तथा त्वमपि देवेन्द्र रथयात्रा-करोभव । शिवायाः शिवदातायाः परमेन समाधिना ॥३६॥

अगस्त्य उवाच ।

रथ-[11]यात्राश्रितं पुण्यं[12] ब्रह्मणा वासवस्य तु । पूर्व्वं यत् कथितं तात ते ते सर्व्वं मयाखिलम् ।३७।
ख्यापितं नात्र सन्देहो देवी माहात्म्यमुत्तमम् । यः पठेत् शृणुयाद्वापि भक्तिमान् नृपसत्तम ॥३८॥
स सुखं यशः सौभाग्यं पुत्र प्राप्ति यथेप्सिताम् । लभते नात्र सन्देह इत्येवं ब्रह्मणोऽब्रवीत् ॥३९॥
सुवलेन कृते राज्ये पुरा शक्रस्य कीर्तिता । धनदस्य पुरा प्रोक्ता वरुणस्य च वायुना ॥४०॥
कृते स्थाने कृतानेन तथा श्रुत्वा च निर्ऋतैः । भुञ्जीत[13] परया दृष्ट्या पुरी भगवती शुभा ।४१।

इति श्री देवीपुराणे रथयात्रा विधिमाहात्म्यं नामैकत्रिंशोऽध्यायः[14] ।

---

१. भाजयिला क । २. पुनरेव गृहश्येत क । ३. क पुस्तके नास्ति ।
४. वाहिभिः क । ५. पथे क । ६. कारयात क ।
७. शिवारयेत् क ।
८. बंधनस्त्वापि तथा मोक्तव्या क । ९. सदाहुता क ।
१०. सवतिक क । ११. क पुस्तके नास्ति १२. ब्राह्मण क ।
१३. भुंजजे क । १४. रथयात्राविधिमाहात्म्य क । १५. एष अध्याय ग पुस्तके नास्ति ।



# द्वात्रिंशोऽध्यायः[1] ।

अगस्त्य उवाच ।

रथयात्रासु माहात्म्यं ब्रह्मणा उपवर्णितम् । श्रुत्वा प्रीतिं परां जग्मु कर्म्मयोगमपृच्छत्[2] ॥१॥

शक्र उवाच ।

भगवन् देवता[3]गारमर्च्चास्थापन पूजनम् । सम्मार्ज्जनमुपलेपं दीप-वैतानजं फलम् ॥२॥

कृत्वा देव्या ह्यशेषन्तु किं लभन्ते ब्रवीहि नः ।

ब्रह्मोवाच ।

गङ्गा नर्म्मदा विन्ध्याद्रि मुज्जयिन्यामथार्व्बुदे[4] ॥३॥

हिमवान्निषधे द्रोणे सान्निध्यात् तिष्ठते शिवा । नदी तीरे तु दुर्गे च रथ्या-पितृ-वनेषु च ॥४॥

स्थापिता भवते देवी सर्व्व कार्य्यार्थ सिद्धिदा । मारणं शत्रु[5] वर्गस्य पितृ स्थाने समर्चिता[6] ॥५॥

एकलिङ्गे द्रुमे शैले गृहे गोष्ठे त्रिकण्डके । पूजिता यत्र[7] द्रव्याणां सुखदारोग्यदा भवेत् ॥६॥

तथा च सर्व्वगा[8] सर्व्वमोक्षदा पूजिता मता । गुरौ मेषगते शक्र देव्यार्चा यः प्रतिष्ठयेत् ॥७॥

इहैव स भवेद[9] धन्यो मृतो गच्छेत् परं पदम् ।

तस्मान्मेषगते[10] शक्र उत्तमा नवमी मता ॥८॥

महाद्यस्मिन् नामाऽनन्तं सामं च सर्व्वकामदम् । देवी तत्र तदा शक्र पांसुजा अपि स्थापिता ॥९॥

भवते फलदा पुंसां[11] कर्किस्थे च वृषध्वजम् । समदृष्टि गतं कृत्वा अजौ माधव कल्पसम् ॥१०॥

---

१. अध्यायोऽयं गपुस्तके नास्ति ।
२. प्रपूकच क ।
३. भगवत् देवता क
४. उज्जयन्पथ अर्बुदे क ।
५. सारणं प्राक्र क ।
६. मदार्च्चिता क ।
७. पुत्र क ।
८. ससर्व क ।
९. सर्वभवेद् क ।
१० स्थिते क ।
११. लभते फल दास्त्रंस्य क ।

स्थापयेद् देव देवेशं सर्व्वकामार्थिनो[1] यदि। विशेषः कथितश्चात्र सर्व्व कालेऽपि मङ्गला ॥११॥

येन केनचिद् द्रव्येण सर्व्व काम फलप्रदा।

तथा ये सिद्ध गन्धर्वा नृपा वा राज्यकांक्षिणः ॥१२॥

ते यजन्तु सदा देवीं स्थापयित्वा विधानतः[2]। न तिथिर्न्न च नक्षत्रं नोपवासोऽत्र कारणम् ॥१३॥

वयमस्य प्रभावं तु देव्याया भक्तिकारणम्। पूजिता विधिना शक्र नृणां भोगान् प्रयच्छति ॥१४॥

हेम भावा च मृद्वक्षी शैलचित्रायसापि वा। शक्ति शूलेऽजिता देवी सर्व्वकाम फल प्रदा ॥१५॥

यो यस्य आयुधः प्रोक्तस्तस्मिस्तं प्रतिपूजयेत्।

देवी शक्त्यार्च्चिता पुंसा राज्यायुः सुतसौख्यदा ॥१६॥

याम्ये ब्रह्मा भवेत् काये रक्त वर्णो जवोपमः। मध्ये रुद्र ऋजुः शुक्रो वामे कृष्णस्ततो हरिः ॥१७॥

देवयक्षग्रहा नागा लोकेशः सचरापराः। शूले संपूजिते वत्स सर्व्वं भवति पूजितम् ॥१८॥

वार्क्षं वा शैलजां वापि रत्नधातुमयामपि।

देव्यामेवं समं ऋक्षं वेलाकरणवासरम्[3]।

विधिना शक्र दृष्टेन दशबाहु त्रिलोचनाम् ॥१९॥

कारयेद् भक्तिमान् यस्तु देवीं शास्त्र विशारदः। सर्व्वलक्षणसम्पूर्णां सर्व्वाभरण भूषिताम् ॥२०॥

राजन्तीमुत्तमाङ्गेन कवरी[4] लम्बितेन च। अथ मुक्तानि भारेण धम्मिल्ल दंशितेन[5] ॥२१॥

व्यामिश्र सित पुष्पैर्वा अलिपङ्क्तीव संस्थिता। रुदन्ति तमवक्रेण तिरस्कृतं निशाकरम् ॥२२॥

आयतैः कर्णमर्य्यादैस्तरलालोल निर्म्मलैः। भ्रुक्षेपाक्षिधृतैः पक्षैः ऋजुः जिह्वावलोकनैः ॥२३॥

भ्रूभङ्ग चाप दण्डेन भिनत्ति[6] दृष्टि सायकैः। मध्योन्नत सगर्व्वेण अधरेण विराजते ॥२४॥

आरक्ता विद्रुमाभेन स्मितं किञ्चित् स्मिताननाः।

मयूख दन्त ज्योत्स्नेन चकासान्तीं तडिदिव ॥२५॥

---

१. कामान्वितो क। २. विधानता क। ३. वर्षमस्य क।

४. वेलाकरणं वासव क। ५. श्लोकपंचकं क पुस्तके नास्ति।

६. करवालं क। ७. भिदती क।

त्रिरेख कन्धरां शान्ति ग्रैवेयक विभूषिताम् । कठिन स्तन भारेण संशक्तौ तौ निरन्ध्रणौ ॥२६॥
महा समुन्नतौ पीनौ वक्षौ पीनौन्नतौ शुभौ[1] । तनोरतनुः मध्येन मध्ये च त्रिवली मता ॥२७॥

रोमराजी नितम्बोर्द्ध ह्यनङ्गाङ्कुर सूचिवत् ।
विस्तीर्ण जघना कार्य्या रम्भा-गर्भोरु कोमलौ ॥२८॥

गूढ़ गुल्फौ तु पद्माभौ पद्माङ्कित सुनूपुरौ । काञ्चित् किङ्किणी भावं तं ब्रह्म सूत्रेण राजते ॥२६॥
केयूर नाग बन्धेन[2] ह्याङ्गदैः रक्तकाञ्चनैः । ग्रैवेयका किरीटोर्द्धे सावशेष[3] विशेषकम् ॥३०॥
राजते च तृतीयेन लोचनेनालकेन च । राजन्ती पीतवासेन छुरितारुण रेणुना ॥३१॥
द्विभुजा या च विंशाष्ट तावद्दोर्दन्डधारिणी[4] । असि खेटक हस्ताभ्यां गदा दण्डेन चापरौ ॥३२॥
शरचापपरेताभ्यां समुद्गर चापरौ । परशु चक्र[5] धरौ चान्यौ डमरू दर्पण चामरौ ॥३३॥

शक्ति[6] कुण्डधृतौ चान्यौ हल मूषल चापरौ[7] ।

पाश तोमर चान्यौ तु ढक्कापणव चापरौ । तर्ज्जयन्तीव चान्येन कुर्वन्तीं कलकलारवैः ॥३४॥
अभयं स्वस्तिकाङ्केन अष्टाविंशभुजा शिवा । सिंह पद्मासना संस्था सिंहासन व्यवस्थिता ॥३५॥
महिषघ्नी शिरश्छेदान्तरं शस्त्रोग्रपाणिनाम् । तर्ज्जमानं हतं मूर्ध्नि[8] नागपाशेन वेष्टितम् ॥३६॥
घातमाना रिपुं देवी पूजनीया पुरन्दर । स्थापिता पूजिता शक्र स्मरता पठतापि वा ॥३७॥

प्रयच्छति शुभान् कामान् मनोऽभीष्टान् यजेन्नरः ।
पङ्केषु[9] शैल दार्व्वे वा मृन्मये वापि वासव ॥३८॥
सोपवासः शुचिः स्नात्वा कामक्रोध विवर्ज्जितः ।
सर्व्वसङ्गोज्झितः[10] प्रीतस्तन्मना भावभावितः ॥३६॥
पुष्प गन्धोपहारैश्च हविष्यान्तैरनेकशः ।
तिल सर्पिर्यवान् हुत्वा सर्व्वमङ्गल मन्त्रितान्[11] ॥४०॥

---

१. महाम्मुत् तौ पानौ वक्तो त्तौ शुभौ क ।
२. वांघन क ।
३. मधिशेष क ।
४. कल्पना क ।
५. परशुं चक्रधरौ क ।
६. शक्ति कुंत क ।
७. शरप क ।
८. स्यद्ध क ।
६. पंकेष्टे क ।
१०. सत क ।
११. स्यत्रतात् क ।

वस्त्र हेमाम्बु सम्पातैः कलसैर्देवीन्तु स्नापयेत्[१]। ततस्तच्छास्त्र वेत्तारैः प्रतिष्ठान्तु प्रकारयेत्[२] ।४१।
देवीं शास्त्रार्थ-तत्त्वज्ञैर्मातृ मण्डल वेदिकैः। भूत तन्त्र ग्रह वाल गारुड़ेषु कृत श्रमैः ॥४२॥

प्रतिष्ठान्तु[३] शिवान्तैस्तु यथा शक्त्या तु दक्षयेत् ।
पूजयेद् ब्राह्मणाञ्छक्र कन्यां बालास्तथैव च ॥४३॥
दीनादि विकलान् सर्व्वान् यथा शक्त्या क्षमापयेत् ।
तदन्ते स्वस्ति वाच्यन्तु मङ्गला प्रीयतां मम ॥४४॥
सुखं तिष्ठन्तु राजानो गौ ब्राह्मणप्रजास्तथा ।
क्षत्र विट शूद्र वालेभ्यः सर्व्वशान्ति[४] कराभवा ॥४५॥
सर्व्वान् कामान् प्रयच्छन्तु ये जनाः फल कामिनः[५] ।
तथा स्तवेन चान्येन शिवगींतेन तोषयेत्[६] ॥४६॥

इति श्री देवीपुराणे देव्यवतारे प्रतिष्ठाकर्म्मयोगोनाम द्वात्रिंशोऽध्यायः[३] ॥

---

१. वस्त्र हेमांतु संवीतै कलवर्ग वातु स्नायेत् क ।
२. प्रतिष्ठा तं न कारयेत् क ।
३. प्रतिष्ठाप्य क ।
४. शोत क ।
५. ये जन्म यानि कामिनः क ।
६. वानेन शिवगीतेन तोषितः क ।



# त्रयस्त्रिंशोऽध्यायः[1] ।

अगस्त्य उवाच ।

श्रुत्वैवं देवराजेन कर्म्मयोगं पितामहात् । प्रपच्छ च स्तवं भूयः शम्भुगीतं यथा पुरा ॥१॥

शक्र उवाच ।

स्तवं देव पुरा देव्याः शम्भुना भार्गवस्य यत् । कथितं सिद्धिकामस्य तन्मे ब्रूहि पितामह ॥२॥

ब्रह्मोवाच ।

शुक्रेण च पुरा शक्र तपस्तप्तं सुदुश्चरम्[2] । दिव्यं वर्ष सहस्रन्तु कैलासे शिखरोत्तमे ॥३॥

तथापि[3] नोऽभवत् तस्य वरदस्त्रिपुरान्तकः । पुष्पदन्तगणः स्तोत्रमुदीरयत् मधुरस्वरः ॥४॥

तं बुध्वा तद्गतं चित्तं शुक्रो वेदविदांवरः ।

स्तवेनानेन देवेशं[4] तोषयामास भार्गवः । विचित्र पद बन्धेन ललितं मधुरेण च ॥५॥

शुक्र उवाच ।

शक्रं वेद विदं कृताञ्जलि पुटं भक्त्या भवे भावितम् ।

संसाराद् भयभीत खिन्न[5]मनसां विज्ञापयेत् शंकरम् ॥

देहं पश्यत[6] नित्यरोग बहुलमायास-दुःखावृतम्[7] ।

भुक्षिभि[8] तृषितं विभीषण करं निर्लज्ज-कामातुरम् ॥६॥

दृष्ट्वा वञ्चित मोक्षमार्ग रहितं क्रोधानलोद्दीपितम् ।

शुक्रोवाच महेश्वरस्य पुरतः स्तोत्रं तवाराधनम् ॥

---

१. ग पुस्तके अध्यायोऽयं नास्ति ।

२. सुदुस्तरां क ।

३. उत्तपापि क ।

४. शम्भुः क ।

५. खिर क ।

३. देहस्थानस्य क ।

७. दूःवृतं क ।

८. भक्षोर्मि क ।

संसाराद्विविधान् महाभयकरादत्यन्त शोकान्वितान् ।
कर्म्मा वन्ध[1] सुयंन्त्रितात्[2] प्रतिसवां[3] प्राणी घटी यन्त्रवत् ॥७॥
दृष्ट्वा चञ्चल तोय बुदबुद समं प्राप्येह मानुष्यकम् ।
सर्वं सर्व्वगतेन नान्यमतसा नैवार्च्चितो मोहतः[4] ॥
ते धन्या भुवि मानवाः सुकृतिनस्ते सात्त्विकास्ते[5] क्षमाः ।
तेषां जन्म कृतार्थकं न च मृताः शोच्या भवन्तीह ते ॥८॥
देवं परमार्थतः पशुपतिं सर्व्वात्मना संश्रिताः ।
प्राप्तं किन्तु न तैः प्रधानपुरुषै हृ द् वाञ्छितं[6] तत् फलम् ।
ब्रह्मोपेन्द्र मरुन्महेन्द्र वसुभि र्विद्याधरैः सादरैः ।
लिङ्गं यस्य सदार्च्चितं[7] मुनि गणैरन्यैश्च दैत्यादिभिः ॥९॥
व्याप्तं येन चराचरं जगदिदं विश्वात्मना मूर्तिभिः ।
कस्तं कारण-कारणं पशुपतिं देवं परं नार्च्चयेत् ॥
त्रैलोक्य राज्यञ्च तथामरत्वं नागेन्द्रकन्या सुरयोषिताश्च ।
एतानि चान्यानि च ते लभन्ते येषां हरः प्रतिमना बभूव ॥११॥
ये लोकेषु विभूतिकान्ति वपुषो धर्म्मार्थ कामप्रदा ।
बिभ्राणा मणिरत्नकुण्डलरुचि प्रोदभासि गण्डस्थले ॥
कुर्व्वन्ति स्व मयूखकान्ति किरणैर्ध्वस्तान्धकारा दिश ।
तत् सर्व्वं विविधं प्रसाद्य विबुधाः प्राप्ता विभूतिं पराम् ॥१२॥
यन्नीलोत्पल[8] पत्र गन्ध सुरभि पीत्वा[9] तु रात्रौ मधु ।
कामं चारु विलासिना[10] सुललितं सत्प्रेममालिङ्गितम् ॥

---

१. वद्ध क । २. स्व क । ३. प्रतिसवात् क ।
४. साहूतः क । ५. षंलिकास्ते क । ६. कृत्वांतितं क ।
७. सदार्चिते क । ८. यशी क । ९. नीला क । १०. बिनासिनी क ।

यद् विद्याधरतां गताः सुकृतिनस्त्यक्त्वा तनूं मानुषीम् ।

तत् कामारि[1] निषेवणादपगतं तेषां फलं शाश्वतम् ॥१३॥

यन्मातङ्ग तुरङ्ग मार्गेण रथाः[2] प्रख्यात योधा रणे ।

मत्तैश्चापि गजैर्मदौद्य विसवैः प्रक्लिन्न गण्डस्थलैः ॥

सं[3] चूर्णन्ति मुदान्विता सह नृपैः श्वेतातपत्रोच्छ्रितैः ।

रुद्रेज्याभिरतस्य तत् फलमिदं सम्मुच्यते नान्यथा ॥१४॥

ऐश्वर्य्यात् प्रवरैर्गजैश्च तुरगैर्यद् गम्यते लीलया ।

लग्नैर्लग्न विशिष्ट शोभन गुणैर्यन्नाम संकीर्त्त्यते ॥

ताम्बूलं त्रिफलेन्दु पल्लव युतं विप्रेषु यद्गीयते ।

तच्चित्तं हर साध्यपादपतनाद् भक्तिस्तु मोक्षे स्थिता ॥१५॥

यन्नीलाम्बुज कोष[4] कोमल दल[5] प्रोत्फुल्लनेत्राः स्त्रियः ।

काञ्ची मेखल नुपुरोरुयुगल व्यासक्तचीनांशुकाः ॥

दास्यं यान्ति विकम्पितस्तनभर व्यावन्दिता भ्रूलताः ।

प्रीत्यर्थं रतिनाथ[6] देहदहनः संसेव्यते नान्यथा ॥१६॥

सिन्दूर बद्ध[7] मधुवासित नागवृन्दम् ।

यद् भूपते[8] कनक दण्ड सितश्च छत्रम् ॥

यच्चञ्चलं चामर चारू विधूयमानम् ।

तत्सर्व्वमीश चरणे प्रणतस्य पुंसः ॥१७॥

---

१. एकोमावि क ।

२. माक्वलस्थाः क ।

३. सं चूर्णंति सहस्त्र खङ्ग निशितैः सैन्यानि यस्यालिषां, विभ्रांजन्तिनृपाः शिवार्चन रोधन्सर्व हित चेष्टितम् । सत्तं भैमंदवारिधौतवदनै नीलालसैः पार्थिवा, कुर्वाणा वरसाजिभिः दृश दिशो रेण्वंधकाराकुलाः क ।

४. परीनांवुज क ।

५. कोमलासन दला क ।

६. रतिदयित क ।

. सिद्धभ्रक्त क ।

८. यद्गीयते क ।

वीणा-वेणु-मृदङ्ग-वाद्य पणवैः सँयोग भावान्वितैः ।
नारीभिः मद-विह्वलाभिरनिशं ये गीयमाना नृपाः ॥
शङ्खेन्दु[1] स्फटिकावदातधवले हर्म्योत्तमे[2] संस्थिता ।
ते[3] मोदन्ति दिवौकसा इव चिरं येषां प्रसन्न शिवः ॥१८॥
यत् कान्ता वदनारविन्द दशन ज्योत्सनाभिरामोज्वलम् ।
श्वासामोदचल तुरङ्ग चपलं प्रोङ्खेलना चञ्चलम्[4] ॥
विन्यस्तं मणिभाजनेषु विधिवद् बन्धूक रागं मधु ।
नीलाम्भोरुहवासितं सुर गुरौ शुश्रूषया पीयते ॥१९॥
यत् काञ्ची कल नाद पीन जघनव्यासक्त चीनांशुकाः ।
कर्णान्तायत लोचनाः सुवदना लावण्य लब्धास्पदाः ॥
यद्दासीत्वमुपागताः क्षितिभुजामाशा विधेयाः स्त्रियः ।
तत् सर्व्वं भव-भक्ति पूत मनसां राज्ञां जगत् तत्फलम् ॥२०॥
ये सुप्ता रजनीषु मन्दिरवरे पर्य्यङ्कबिम्बे शुभे ।
नारीभिर्म्मदविह्वलाभिरनिशं[5] सोत्कण्ठमालिङ्गिताः ॥
निन्द्रानाशमिहोपयान्ति मधुरैः सङ्गीत तूर्य्यस्वनैः ।
तत् सर्व्वं समुपार्जितस्य विधिवच्छम्भोः प्रणीतं फलम् ॥२१॥
नाना यन्त्र सहस्रसापि रचितं भीमावरुद्धाकुलम् ।
तं भित्वा[6] प्रविशन्ति चारु विमलं दैत्याङ्गनान्तःपुरम् ॥
सिद्धं द्रव्य रसायनं युवतयः कामाश्च कामानुगाः ।
तत् सर्व्वं सुलभं भवेत् सुधियां प्रीतेन कामारिणा ॥२२॥

---

१. हम्र्पेत्ति मे क ।
२. शंविदु क ।
३. पंक्तिरियं नास्ति क पुस्तके ।
४. पंक्ति द्वयं नास्ति क पुस्तके ।
५. साभिनाल क ।
६. तद्भित्वा क ।

ये सर्व्वे शरणागताः सुपुरुषास्त्यक्तान्यकार्य्या दशा ।
त्रैकाल्यार्च्चन जप्य होम निरताद्रोगादिभि र्वजिताः ॥
ते भोगान् विविधानुभूय सकलान् कालेन कर्म्म क्षयाद् ।
वित्तैश्वर्य्य समन्विताः क्षितितले जायन्ति ते भूमिपाः ॥२३॥
ये मूढा न श्रयन्ति वरदं संसार-दुःखच्छिदम् ।
देवं सर्व्वसुरासुर प्रणमितं शम्भुं परं कारणम्[1] ॥
ते लोके परपिंडतर्पणपरा दीनाः सदा दुःखिता ।
जायन्ते भुवि मानवाः कुवसना धर्म्मार्थ कामोज्झिताः ॥२४॥
ये लोकाधिपतिं सुरासुर गुरुं ब्रह्मेन्द्र सम्पूजितम् ।
वेदाद्यन्त षडङ्ग योग विहितं सांख्यादिभिः कल्पितम् ॥
सर्व्वज्ञं प्रभुमीश्वरं त्रिनयनं सर्व्वात्मना भाविताः ।
ते भूयो न कला कलङ्क गहनं पश्यन्ति योनिमुखम् ॥२५॥
ये त्वन्ये सुकृतैषिणः प्रतिदिनं प्रोत्थाय भावान्विताः ।
कर्पूरागुरु चन्दनैः सुरुचितैः स्रग्भिस्तथा भूषणैः ॥
क्षीरादिस्नपनैर्विधान विहितैः कुर्वन्ति[2] शर्व्वार्च्चनम् ।
भोगान् सर्व्व गतानुभूय सुधियो गच्छन्ति दिव्यं पदम् ॥२६॥
ये केचित् कुपथाश्रिता जडधियो मन्दाममज्ञाः शठाः ।
देवं शान्तमजं प्रधानपुरुषं निन्दन्ति मोहाच्छिवम् ।
मृत्योर्द्गोचरमागताः यम भटैर्नानाविधैः शासनैः ।
शाम्यन्ते नरकेषु ते प्रतिवलैश्चाक्रन्दमाणा भृशम् ॥२७॥
दानं भूतदया गुरूपदशनं क्षान्तिर्न चैवांजिता ।
सत्यं शौचमहिंस्रता शमदम त्यागोऽनुकम्पा तथा ॥

---

१. कारणान्ते क ।
२. कुर्वीति क ।

येषां नैवमिहास्ति मूढ़मनसां शर्व्वार्च्चनं क्वचित् ।
तेषां नष्ट पिशाच कागतधियां पुंसां विभूतिः कुतः ॥२८॥
द्वैष्टारस्तु[1] शिवस्य ये कुपुरुषा गच्छन्ति तेऽधोगतिम् ।
तामिस्त्रे क्रकचासि पत्र नरके कुम्भी[2] महा रौरवे ॥
योनी मार्ग सहस्त्र खिन्नगमनाः प्राप्येह मानुष्यकम् ।
रोगार्त्तो[3] जड़ वासनान्धवधिरा जायन्ति योनौ खलाः ॥२९॥
जन्म-व्याधि -जरा वियोग मरण क्लेशादिभिः सन्तताम् ।
भूतिं चञ्चल सागरोर्मिचपलं स्वप्नोपमं जीवितम् ॥
माता-पितृ-कलत्र-पुत्र सुहृदो ये केऽपि बन्धात्मका ।
ज्ञात्वैवं नरलोकमध्रुवमिमं शर्व्वं सदा संश्रयेत् ॥३०॥
यैर्दत्तं न धनं यथाविभवतः पात्रेषु दीनेषु[4] वा ।
विद्या नागमिता यशो न विततं शीलं न संरक्षितम् ॥
सत्यं नाधिगतं तपो न चरितं कीर्त्तिर्न विक्रामिता[5] ।
तेषां क्षेम शिवं न विद्यति नृणां मुक्त्वा हराराधनम् ॥३१॥
येषां न शम्भुचरणाग्रत भक्तिवादः ।
क्षुण्णां ललाट शतजर्ज्जरितं कपालम् ।
तेषां कुतो बहुल चन्दन चर्च्चितानि ॥
मुक्ता फलार्च्चित वधूस्तन-मण्डलानि ॥३२॥
ये त्वां विभो सुपरिकल्पन कल्पितेषु ।
सम्यक् चरन्ति विविधेषु शिवार्च्चनेषु ॥
ते चारू तुङ्ग घनकुङ्कुमपिञ्जरीषु ।
विद्याधरिषु निवसन्ति कुचान्तरेषु ॥३३॥

---

१. द्वैष्टारस्ता क । २. कुम्भा क । ३. रोगीतो क ।
४. दीनेषु क । ५. निष्कासिता क ।

प्रव्रज्या न कृता विधान विहिता उक्ता तु या शम्भुना ।
शैवज्ञान महार्णवस्य विधिवन्नैवश्च पारं गतम् ॥
पुष्पैश्च सुर्काणकार तिलकैः नाभ्यर्चितः शूलधृक ।
कालोऽयं पर पिण्ड तर्पण परैः काकैरिव प्रेषितः ॥३४॥
न ध्यातं पदमीश्वरस्य विधिवत् संसार विच्छित्तये ।
नैवाभि श्रुतिभि स्तुतोऽहरहः शम्भुः विभुर्भू तले ।
नैवाप्युत्कट गन्धधूप कुसुमैः पूजा कृता शङ्करे ।
धात्रा नूनमकारणं वयमिह सृष्टा जगत् पूरणे ॥३५॥
संसर्गात् कौतुकाद्वा क्षणमपि यैः जप्तं पादेषु पद्मेषु शम्भो ।
याति ब्रह्मेन्द्र विष्णु द्रविण पति पुरांस्त्रीनति क्रम्य लोकान् ॥
शान्त्या भावेन यस्तं प्रणमति सततं सर्व्व विन्यस्त सर्गो ।
संछिन्नः क्लेश पाशैः प्रविशति विरजो रुद्र तेजो निधानम् ॥३६॥
यत् किञ्चासन जप्य होम निरता रागादिभिः वर्ज्जिताः ।
शम्भोः पाद निपात घृष्ट शिरसः प्रत्यङ्मुखाः पत्निषु[3] ॥
तेषामेव निगूढ़ नूपुर वरा चञ्चच्चलन् मेखला ।
सम्भ्रान्ताग्रज[4] पङ्कजोद्यतकरा पर्य्येति लक्ष्मीः स्थिरम् ॥३७॥
यैर्नाद्याप्यन्यजन्मन्यसितकुवलयैः मिश्रिताभिः सिताभिः ।
मालाभिः मालतीनां त्रिभिरमरगुरुर्णार्च्चितो नीलकण्ठः ॥
ते विद्यावित्तहीनाः प्रचलित मनसः क्षुत्तृषाक्षामकण्ठा ।
लोकेऽस्मिन् दोषदुष्टाः परिभव विभवास्ते च नित्यं भवन्ति ॥३८॥

---

१. पंक्तिरियं नास्ति क पुस्तके ।
२. रायंति लोका क ।
३. पत्सु क ।
४. भुंतायत क ।
५. यैशेठा क ।
६. पंक्तिद्वयम् नास्ति क पुस्तके ।

ये मानवा[1] विगतराग परापरज्ञा योगेश्वरं सुरगुरुं सततं स्मरन्ति[3] ।
ध्यानेन ते प्रहत किल्विष मोहजाला मातुः पयोधर रसं न पुनः पिबन्ति ॥३९॥
तद् गात्रं प्रणिपातरेणुधवलं[6] सर्व्वस्य यत् सर्व्वदा ।
ते नेत्रे तपसार्ज्जिते सुरुचिरे ताभ्यां हरो दृश्यते ।
सा वृद्धि विमलेन्दु शङ्ख धवला या शङ्करध्यायिनी ।
सा जिह्वा मृदुभाषिणी हितकरी या स्तौति नित्यं शिवम् ॥४०॥
तच्चित्त चपलं चिनोति कुशलं यन्निश्चलं शङ्करम् ।
ते श्रोत्रे परमे शिवामृतरसं याभ्यां हरः श्रूयते ॥
ते हस्ताः शिव धर्म्म कर्म्म निरताः पूजा प्रमाणोत्सुका ।
तौ पादौ समयौ प्रदक्षिणरतौ नित्यं विभोर्भावितौ ॥४१॥
पापं पाप रतं ह्यशुद्ध मनसं निर्लज्ज भग्नव्रतम् ।
क्रूरं तस्करमीर्षकं[4] शठधियं तृष्णाधिकं निर्द्दयम् ।
काम-क्रोधवशं कृतघ्नचपलं तृष्णातुरं जिह्मलम् ।
मूर्खं हिंसन सूचकं[5] पशुपते दोषाकरं त्राहि माम् ॥४२॥
दीनं दुःखितकं कुचैलमलिनं जिह्मं शठं दुर्भगम् ।
क्षुद्रं पापमतिं स्वधर्म्म चलितं बह्वाशिनं निर्द्धनम् ।
अन्धं[6] व्याधित निष्ठुरं[7] व्यसनिनं सद्भिः सदा निन्दितम् ।
मूर्खं धर्म्म विवर्ज्जितं पशुपते दोषाकरं त्राहि माम् ॥४३॥
इमं स्तवं शक्र विनिर्म्मितं पठन् दिने-दिने क्रतुफलमाप्नुयान्नरः ।
लभत्यसौ यद्भिहितं पुरातने तल्लक्षये गच्छति शाश्वतं पदम् ॥४४॥

---

१. ते विद्या क । २. सर्वस्य यत्सर्वदा क । ३. पंक्ति नास्ति क पुस्तके ।
४. कूरं तक्र मीर्ष्य क । ५. धर्म सूचक हिंसकं क । ६. अशं क ।
७. निघुरं क ।

एवं स्तुतः पुरा शम्भुः स्तोत्रेणानेन वासव । तुतोष देव देवेशः शशाङ्काङ्कित शेखरः ॥४५॥

ईश्वर उवाच

वरं ब्रूहि ग्रहाध्यक्ष यत् ते मनसि वर्त्तते[1] । सुरासुराधिपत्यं ते ददामि भृगुनन्दनम् ॥४६॥

शक्र उवाच ।

यदि तुष्टोऽसि मे देव कृपा वा वर्त्तते तव । तदाह्याराधनं देव्याः श्रोतुमिच्छामि तत्त्वतः[2] ॥४७॥

ईश्वर उवाच ।

शृणु वत्स प्रवक्ष्यामि देव्याराधनमुत्तमम् । कर्म्मयज्ञन्तु यज्ञानां सुकरं सुमहत्फलम् ॥४८॥

सांवत्सरी यथा पूजा सुकालेन[3] समारभेत् । एवं नक्षत्रवेधादीन्[4] कुर्य्यात् कन्द फलाशिनः ॥४९॥

यव सर्पिःप्रघासी च[5] गोमूत्रं दधि गोमयम्[6] । पवित्रं विहितं तन्त्रे असवतानाञ्च भार्गव ॥५०॥

देवी व्रतं प्रवक्ष्यामि सर्व्वकाम प्रसाधकम् । श्रावणे शुक्ल पक्षे तु अष्टम्यां वायु-भोजनः ॥५१

स्नात्वा सार्द्रपटी[7] भूत्वा जितक्रोधः क्षमान्वितः । देवीं संस्नाप्य तोयेन पुनः क्षीरेण स्नापयेत् ।५२।

ततो गुग्गुल धूपञ्च सतुरुक्षं प्रदापयेत् । ततो[8] गन्धोदकस्नानं पुनस्तां येन स्नापयेत् ॥५३॥

श्री खण्डेन समालभ्य बिल्वपत्रैश्च[9] पूजयेत । पायसं दापयेद् देव्या निवेद्य तेन भोजयेत् ॥५४॥

कन्या द्विजांश्च शक्त्या तु तेषाँ दद्याच्च दक्षिणाम् ।
कात्यायनीति उच्चार्य प्रीयतां मम सर्व्वदा ॥५५॥
आत्मतः पावनं[10] तच्च कृत्वा[11] आप्नोति भार्गव ।
आश्वमेध फलश्चाग्र्यं[12] देव्या लोकञ्च, गच्छति ॥५६॥

तदागत इमां भूमिं पृथिव्यां जायते नृपः । तेन स लभते योगं शिवा प्राप्ति करं परम् ॥५७॥

मासे प्रौष्ठपदे शुक्र गोशृङ्गाग्र गृहीतया । मृदया ह्यात्मजो ह्यंगमुपलिप्य तु स्नापयेत् ॥५८॥

---

१. हृदि व्यवस्थितम् क ।
२. श्रोतुं तत्वतः क ।
३. आफलेन क ।
४. धेन्वाहि क ग ।
५. प्रसत्तीर क ।
६. गोत्सरं क ।
७. पठो क ।
८. तथा क ।
९. पत्रेण क ग ।
१०. पारणं क ।
११. कुलाह क ।
१२. मश्वं क ग ।

तदा आमलकैः स्नात्वा[1] शुचिः सङ्गविवर्ज्जितः ।
पूजयेत् यूथिका पुष्पै र्देवीं क्षीरेण स्नापिताम् ॥५९॥

चन्दनोदक मिश्रेण कुङ्कुमेन विलेपयेत् । ततः पूपक नैवेद्यं कन्दवन्याँश्च[2] दापयेत् ॥६०॥

अगुरुं धूपेन दद्यात् तिल तैलेन दीपिकान् । तेन ता भोजयेत् कन्या द्विजान् सद्वृत्तिवर्तिनः ॥६१॥

पाषन्डान् नावलोकेत नीचान् शास्त्र-बहिष्कृतान् ।
दक्षिणा शक्तितो देया स्वस्ति वाच्येत मङ्गलम् ॥६२॥

पावनञ्चात्मनस्तच्च सौत्रामणि-फलं लभेत ।
गच्छते विष्णु लोकञ्च तदा विप्रोऽभिजायते ॥६३॥

धनाढ्ये महति गोत्रे वेद वेदान्त पारगे । पुत्रवान् धनवान् भोगी सुखं प्राप्य शिवी भवेत् ॥६४॥

आश्विने अष्टमी शुक्ले नदी मृद्भिश्च[3] स्नापयेत् ।
ततो देवीं स्नापयेद् वत्स दधिना ह्युदकेन च ॥६५॥

आलभ्य रोचना मन्त्रैर्धूपो देयस्तु[4] बालकम् । संनखं सित-तामिश्रं पद्म[5] पुष्पैश्च अर्च्चयेत ॥६६॥

नैवेद्यं रोहितं[6] मांसमाजं वा शल्यकं तथा[7] । गोधूम विकृतिं भक्ष्यान्[8] घृत पक्वानि दापयेत् ॥६७॥

तेन कन्यास्तु भोजीयाद् द्विजांश्चापि क्षमापयेत् ।
शक्तितो दक्षिणा देया आत्मनस्तच्च भोजनम्[9] ॥६८॥

गो सहस्र प्रदानस्य फलं प्राप्नोति मानवः । आरोगी सुखवान् धन्यो जायते इह मानवः ॥६९॥

दुर्गा नामन्तु कीर्तयेत्[10] तस्या लोके महीयते ।
कार्त्तिके दर्भमूलाभिर्मृद्भिः स्नायात् तु भार्गव ॥७०॥

देवीं गन्धोदकैः स्नाप्य औशीरैःपूज्य लेपयेत । धूपं पञ्चरसं देयं तिल तैलेन दीपकान्[11] ॥७१॥

नैवेद्यं पायसं सर्पिः कन्या विप्रेषु चात्मनः । भोजनं स्वस्ति वाच्येत दक्षिणां प्रीयतां शिवा ॥७२॥

---

१. स्नीला क ।
२. कराश्च क ।
३. मृदासि क ।
४. चन्द्रै र्भुपंदेयं तु क ।
५. मिश्रे यज क ।
६. रौहिषं क ग ।
७. शल्पंकजंप्रिवा क ।
८. रिकृति भंक्ता क ।
९. अनस्तवृतभोजनां क ग ।
१०. कीर्त्तिया क ग ।
११. दीपयेत क ।

अनेन[1] विधिना वत्स विद्यादान फलं लभेत्[2] । वेद वेदाङ्ग[3] तत्त्वज्ञः तदन्ते शिवतां व्रजेत् ॥७३॥

मार्गशीर्षे नभे मासि ह्यष्टम्यां गिरि पृष्ठतः[4] ।

स्थाप्य देवीं ततः स्नायात् तीर्थ तोयेन भार्गव ॥७४॥

लेपयेत्[5] बालकं कुष्ठं[6] पूजा जाती गजाह्वयैः । धूपं कृष्णागुरुं दद्याद् घृत दीपान् निवेदयेत्[7] ॥७५॥

दधि भक्तन्तु नैवेद्यं कन्यास्तेनैव भोजयेत् । दक्षिणां शक्तितो दद्यादात्मनस्तच्च पारणम् ॥७६॥

इमां[8] मे प्रीयतां वाच्यं वाजपेय फलं लभेत् । इहैव धनवान्[9] भोगी देहान्ते ब्रह्मणः पदम् ॥७७॥

पौषाष्टमीषु दूर्वाग्रैः स्नात्वा शुक्ल परिच्छदः । जित क्रोधो अद्वन्द्वश्च देवी कर्पूर वारिणा ॥७८॥

स्नापयेत् लेपयेच्छक्र मांसीवालक चन्दनैः । धूपञ्च निर्दहेत् प्राज्ञः पूजा नील कुरुण्टकैः ॥७९॥

कृषरागुड नैवेद्यं कन्या भोजयेत् तेन वै । आत्मनः पावनं तच्च शक्त्या दक्षेत वाचयेत् ॥८०॥

नारायणी सदा प्रीता मम देवी प्रसीदतु । कृतेन ग्रहराजेन्द्र भूरि[10] दान फलं लभेत् ॥८१॥

शुभ गोधन सम्पन्नः परत्र शिवामाप्नुयात् ।

माघे मासि वाजगावं मृद्भिः स्नात्वा तु भार्गव ॥८२॥

देवीं तोयेन संस्नाप्य तथा क्षीर घृतेन च । स्नापयेत् पुनस्तोयेन लेपयेत कुङ्कुमेन च ॥८३॥

धूपं देवदलं दद्यात् कुन्दपुष्पैश्च पूजयेत् । घृतपूर्णञ्च नैवेद्यं कन्यां विप्रांश्च तेन वै ॥८४॥

भोजयेदात्मनस्तच्च दक्षिणां प्रीयतां जया[11] । सर्व्व याग फलं शक्र[12] लभते नात्र संशयः ॥८५॥

फाल्गुने सर्षपैः स्नात्वा देवीमाम्र-फलांबुना । तथा इक्षुरसेनैव भूयस्तेनोदकेन च ॥८६॥

रोचने लेपयेत् पूजा शत पत्रिकया[13] ग्रह । दीपो घृतेन धूपं च चन्दनं घृत शर्करा ॥८७॥

नैवेद्यं शोक वर्ज्यञ्च भोजनं कन्यकासु च । आत्मनस्तच्च कुर्व्वीत दक्षिणा स्वस्ति वाचयेत् ॥८८॥

विजया सुखदा नित्यमस्तु मे चिन्तितानि च । अनेन विधिना शक्र राजसूय फलं लभेत् ॥८९॥

---

१. अवन क ग ।
२. लभेत् क ।
३. वेदांते क ।
४. अष्टभ्यं गिडि मृद्भिः क ग ।
५. पूंजयेद क ।
६. कुंकुष्ठं क ।
७. निवीधयेत् क ।
८. तुमा क ।
९. धनत् क ।
१०. भूमि क ग ।
११. शिवा क ग ।
१२. विप्र क ।
१३. फला क ।

लभते वासना युक्तो यतो देवीमयं जगत् । चैत्राष्टमीषु स्नापयेत् मातृस्थान मृदम्बुभिः ॥९०॥

देवीं तीर्थ जलैः स्नाप्य लेप्या मदविलेपनैः ।

धूपं तुरुष्क औशीरं युक्तियुक्तेन पूजयेत् ॥९१॥

नैवेद्यं [1]शालिजं भक्तं शर्करा कन्यकास्वपि ।

आत्मनस्तच्च वाच्यन्तु शक्तितो दक्षिणां ददेत् ॥९२॥

अजिता सर्व्वकामानां पूरणाय सुखाय मे । विप्राःकन्याः समं वाच्या होमदान फलं लभेत् ॥९३॥

सहकार फलं स्नानं वैशाखेऽष्टमीषु च । आत्मनो देवतां स्नाप्य मांसीं बालक वारिभिः ॥९४॥

लेपनं मधु कर्पूरं धूपं पञ्च सुगन्धिकम् । देव्या पूजाञ्च कुर्व्वीत केतकी मदनेन च ॥९५॥

क्षीरं शर्कर नैवेद्यं कन्या विप्रेषु भोजनम् ।

आत्मनः पारणं तद्वत् दक्षिणां शक्तितो वदेत् ॥९६॥

अपराजितां भवानीं स्वस्ति नामेन[2]वाचयेत् । प्रीयतां सर्व्वकालं मे ईप्सितन्तु प्रयच्छतु[3] ॥९७॥

सर्व्वतीर्थाभिषेकन्तु अनेनाप्नोति भार्गव । सूर्य्यलोकं व्रजेदन्ते तत् तुल्यो भवते ग्रह ॥९८॥

अष्टम्याञ्चैव ज्येष्ठस्य तिलैः स्नायाद्विचक्षणः । सर्व्व सङ्ग परित्यागी देवीं जातिफलाम्बुना ॥९९॥

स्नापयेत् लेपयेत् तेन चन्दनेन सुगन्धिना । ततो विजयेन्दुः पुष्पैः पूजयेद् ग्रहसत्तमः ॥१००॥

नैवेद्यं सक्तवो देव्याः शर्कराः कन्यकास्वपि ।

दक्षिणा शक्तितो देया चर्च्चिकां प्रति वाचयेत् ॥१०१॥

लभते शुक्र यज्ञस्य सौत्रामणिसमं फलम् । अष्टमी चैव आषाढ़े निशातोयेन स्नापयेत् ॥१०२॥

ततो देवीं जलकुष्ठं वारिणा उदकेन च । स्नात्वा लेपयेत् कर्पूरं चन्दनं रोचनाम्बुभिः ॥१०३॥

धूपं चन्दन कर्पूर वालकासित शल्यकैः ।

भक्त्या शर्कर पूर्णानि शुभानि यानि कानि च ॥१०४॥

[3]दापयेत् कन्यकां विप्रान् भोजनं ह्यात्मनस्तथा ।

शक्तितो दक्षिणा देया महिषघ्नीति कीर्त्तयेत ॥१०५॥

---

१. निवेद्य क ग ।

२. नात्मानत्मन क ।

३. क पुस्तके विंशति पंक्तीं न सन्ति परं ग पुस्तके सन्ति।

दीप माला घृतेनैव सर्व्वकामान् प्रयच्छति। सर्व्वयज्ञ महीदान सर्व्व तीर्थ फलं लभेत् ॥१०६॥

एतद् व्रत वरं शुक्र मया ब्रह्मणा विष्णुना। जगतो हितमिच्छद्भिश्चीर्णं दुर्गा व्रतं महत् ॥१०७॥

भानुना ग्रह विध्वंसमनेन कृतवान् पुरा। तथा देवासुरा यक्ष-नाग-किन्नर-मानवैः ॥१०८॥

अप्सरोभिस्तथा स्त्रीभिः सौभाग्यस्य विवृद्धये।

कृतवान् ग्रह शार्द्दूल त्वमपि कुर्य्या यथाविधि ॥१०९॥

श्रवणादपि प्राप्नोति सर्व्वकाम सुखानि च। इष्टानि लभते पुंसो वन्ध्या पुत्रं प्रसूयते ॥११०॥

इति श्री देवीपुराणे देव्यवतारे दुर्गाव्रतं नाम[२] त्रयस्त्रिंशोऽध्यायः।

---

१. पंक्तः र्न सन्ति क पुस्तके।

२. इत्याद्ये देव्यवतारे दुर्गाव्रतम् - क ग।



# चतुस्त्रिंशोऽध्यायः ।

ईश्वर उवाच ।

देव्या गृहन्तु यः शुक्र कारयति[1]अतिशोभनम् । सर्व्वोपकरणै र्युक्तं नानावर्णै सुवर्णितम्[2] ॥१॥
तस्मिन् घण्टा ध्वजं छत्रं वितानं दर्पणानि च । दत्त्वा मुरजावंशादि नित्यं सङ्गीतकानि च ॥२॥
देवी शास्त्रार्थ वेत्तारं पूजकं भवने शुभम्[3] । एवं प्रवर्त्तते यस्तु तस्य पुण्य फलं शृणु ॥३॥
दश पूर्व्वा परांस्तात आत्मनश्चैक विंशति । उद्धृत्य च कुलं यायाद् ब्रह्म लोके महीयते ॥४॥
गच्छते भवती यत्र[4]परा परम पूजिता । तत्र कल्पान्तरं यावद् भोगान् भुक्त्वा मनोरमान् ॥५॥
पुनः कालादिहायातः पृथिव्यामेकराट् भवेत् । स भृत्य-वाहनोपेतः सान्तःपुरपरिच्छदः[5] ॥६॥
भवेत् चर्च्चिका-भक्तः पूर्व्वकर्म्म-प्रभावतः । पुनर्देव्या द्विजातीनां[6]तद्भक्तानां प्रियो[7]भवेत् ॥७॥
कन्या संपूजको नित्यं देवी शास्त्रार्थ पारगः । लभते परं सद्भावं तदन्ते शिवं[8] संव्रजेत्[9] ॥८॥
देव्या गृहन्तु यः शुक्र सम्मार्ज्जयति संयुते[10] । तदा गच्छेच्छिवालोकं सर्व्वकाम-फल-प्रदम् ॥९॥
देव्या गृहन्तु यः शुक्र गोमयेनानुलेपयेत् । स्त्रियो वा यदि वा पुंसः षण्मासन्तु निरन्तरम् ॥१०॥

स लभेदीप्सितान् कामान् देव्या लोकञ्च गच्छति ।
अत्रैव यत् पुरावृत्तं कथयामीति शृण्वताम् ॥११॥
असौ लुब्धो[11] निराधारः[12]कैवर्त्तो मात्स्य घातकः ।
नेपाले पतने शुक्र प्रययौ मात्स्य बन्धने[13] ॥१२॥

---

१. कार व्यात्पति क ग । २. पाठा कुलान्वितं क । ३. गिरं क ग ।
४. य क । ५. माविच्छदः क । ६. द्विजातानां क ।
७. प्रयो क ग । ८. शिवतां क ग । ९. व्रजेत क ।
१०. नित्यशः क ।
११. आसील्लवो क । १२. निराचार क ग । १३. बम्भनो क ।

स च विन्ध्याटवी[1]मध्ये देवी गेहमपश्यत् । तस्य जालं प्रभूतेन[2]शीर्णं कालेन भार्गव ॥१३॥
देव्या गृहाग्रतो वृक्षस्तस्मिंस्तमुपलम्बयेत्[3] । गतो[4]गृह स्वकं वत्स पुनस्तत्रैव कालतः ॥१४॥
आगत कर्पर: खन्डं हसमानः सन्नकृत् समः । दत्वा गतः पुनः कोलान्मृतः सोऽभूद्गणाधिपः ॥१५॥

विद्याघर पतिश्चित्रः सर्वं विद्यार्थं पारगः ।
स्वल्पे[5]नापि हि कर्म्मेण प्राप्तवान् महती श्रियम् ।
तथा त्वमपि विप्रेन्द्र देव्या भक्ति परो भव ॥१६॥

इति श्री देवीपुराणे देव्यवतारे देव्या-ध्वज-महाभाग्य फलं नाम चतुस्त्रिंशोऽध्यायः ।

---

१. सर्वविंध्यार क ।
२. प्रस्तुतेन क ग ।
३. भवं येत् क ।
४. ततो क ।
५. तथा स भवनात् देवी भक्ति पूर्व समन्वितः ।, ह्वदोध्वजात् सदा शुक्रं भ्रात किंकिणी वरकान्वितान् । तेन पूर्व कर्म्मणः स्मरेणोऽद्भुत सत्तमः । सर्व योगं समास्थायखड्गराजस्त्वसारभूत । अनिवारित शक्तिस्तु सर्व द्याधरेश्वरः ॥ क ।



# पञ्चत्रिंशोऽध्यायः ।

विद्याधर उवाच ।

यद्येवं सा महाभागा ब्रह्म-विष्णु-परात्परा । तदहं श्रोतुमिच्छामि ध्वजदानं विधानतः ॥१॥

अगस्त्य उवाच ।

यथा त्वं पृच्छसे वत्स तथा शक्रेण ब्रह्मणि । पृष्टः पूर्व्वं तथा तेन शम्भुगीतं प्रकाशितम् ॥२॥

शक्रस्य भावयुक्तस्य तदहं ते महात्मनः । कथयामि यथान्यायं ध्वजदानं महाफलम् ॥३॥

शुक्र उवाच ।

देव्या ध्वज प्रमाणन्तु विधिं दण्डस्य लाञ्छनम् । दीपते च यथा नाथ तदशेषं ब्रवीहि नः ॥४॥

ईश्वर उवाच ।

अन्डजं वान्डजं वापि ध्वजं केश विवर्ज्जितम् । नवं समञ्च श्लक्ष्णं च प्रसादाद्दन्डमर्द्धितम् ॥५॥

समं सूक्ष्ममृजं[1] शुभ्रं शैलं[2] वा धातुजं पिवा । तस्मिन् परे लिखेत्[3] सिंहं सर्व्व-लक्षण[4] लक्षितम् ॥६॥

रोचना सह चन्द्रेण हेम लेखन्या दूर्वया । प्रसादाच्चो लमानन्तु क्षितिं विस्तरतः करम् ॥७॥

ध्वजा पालन[5] कर्त्तव्या दर्शयेद्दिक्षु देवताः । सर्व्वे वाहन-लांछेन लाञ्छिताः सहजेन च ॥८॥

किङ्किणीं चामरो[6] पेतान् घण्टा दर्पण[7] शोभितान् । कृत[8] होम महा प्राज्ञः सहकार-दलान्वितान् ॥९॥

महा मङ्गल शब्देन देव्याः कुर्व्वंस्तु पूजयेत । सुगन्ध पुष्प नैवेद्यं तथा विभव विस्तरैः ॥१०॥

कन्यका ब्राह्मणान् भोज्ये दधि पायस शर्करैः । भूतानान्तु बलिं दत्वा[9] तथा तमुपरोहयेत्[10] ॥११॥

---

१. सूक्ष्म मृज्वं क । २. शिलं क ग । ३. मिथे क ।
४. भक्षण क ग । ५. वर्जपादेन क । ६. वामरो क ग ।
७. घंरा हर्य्यण क । ८. हृत क ग ।
९. दला क । १०. तद्य क ।

सर्व्वं कामानवाप्नोति विद्याधर पतिर्भवेत् । मोदते विविधान् भोगान् सर्व्वं विद्यार्थ पारगः ॥१२॥

अथवा हैमरौप्यस्था वार्क्ष पार्थिवशैलजम् । कारयेन्मृग राजन्तु महाकरि महापहम् ॥१३॥

महानखकरोत्थानं मुक्ताफलं गदाप्रभम्[1] ।

एवं विधं ततः कृत्वा नवम्यां पूजयेच्छिवाम् ॥१४॥

सोपवासः शुचिर्दक्षः सर्व्वसङ्ग-विवर्ज्जितः । कन्यकाः पूजयित्वा तु विप्रान् वेदविदस्ततः ॥१५॥

देव्या भक्ताः सदाचारास्त्रिकालहवने रता । ते यथा शक्तितस्तोष्या ध्वजारोहण कर्म्मणि ॥१६॥

कन्या दिव्या स्वयं प्रोक्ता कन्या रूपा तु शूलिनी ।

यावत्साक्षत योनिः स्यात् तावद्देव्या सुरारिहा॥१७॥

द्विजो ब्रह्मा शिवो विष्णुः स्वकीय व्रत पालकाः । पूजितैस्तैस्तदा शुक्र सर्व्वे देवास्तु पूजिताः॥१८॥

दीनान्ध[2]कृपनाथान्तु अन्नं देयन्तु[3]शक्तितः । यथा सर्व्वगता देवी तदुद्दिश्य क्षयं भवेत् ॥१९॥

नाना [4]भक्षाक्षत दधि दूर्व्वा च शर्करान्वितम् । बलिं वै सर्व्व भूतेभ्यो दश दिक्षु निवेदयेत् ॥२०॥

वज्र घोणा तथा जप्ता अष्टाविंशाक्षरापि वा[5] ।

सिंहं स्तम्भे समारोप्य सर्व्व मङ्गल शब्दिताम् ॥२१॥

वेदध्वनि महामन्त्र कालिका चर्च्चिका पदम् ।

न्यस्य सिंहं परं ध्यायेद् यादृशं पूर्व्वकल्पितम्[6] ॥२२॥

एवं तं वस्त्र संवीतं सर्व्वाभरण-भूषितम् । देव्या महाध्वजं न्यस्य शेषागामपि विन्यसेत् ॥२३॥

ब्रह्मविष्ण्वन्द्ररूद्राणां सोम सूर्य्य दिवौकसाम् । ध्वजदानं महादानं सर्व्वदानोत्तमं मतम् ॥२४

यावन्न[7]दीयते शुक्र ध्वजः प्रासादमूर्द्धनि । तावन्न तत्र भवेत्[8]वत्स प्रासादं देवलाञ्छितम् ॥२५॥

शून्य ध्वजं सदा भूता नाग गन्धर्व्व राक्षसाः । विद्रावन्ति महात्मानो नाना वाधा करन्ति च ॥२६॥

तस्माद्देव गृहद्वार पुरपत्तन पर्वतैः । उच्छ्रिताः शान्ति कामाय ध्वजाः शुक्र सदाहिताः ॥२७॥

---

१. पद प्रदम् क ग ।
२. दिवांध क ।
३. देतु क ग ।
४. ज्ञना क ।
५. अष्टागेशाक्षरी पिवा क ।
६. कल्पितः क ग ।
७. यादृशे क ।
८. मेदत्स क ग ।

न हि चान्यद् ध्वजदानादुत्तमो भवते क्वचित् । दानमिष्टञ्च पुष्टञ्च देव्या दीपस्तथैव च ॥२८॥
अनेन विधिना यस्तु ध्वजं शुक्र निवेदयेत् । सर्व्वकामानवाप्नोति स नरः शिवतां व्रजेत् ॥ २९॥
तस्य दर्शन सम्भाषादपि पापरता नरः । विमुक्ताः सर्व्वपापेभ्यो दिवं यान्ति न संशयः ॥३०॥
राज्ञा[1]चानेन विधिना देवी लाञ्छन लाञ्छितम् । शङ्ख चक्र वृषभाक्ष हंसर्वहिण वारणैः ॥३१॥
साचारो भक्तिमास्थाय ध्वज यष्टि समुच्छ्रयेत् । न तस्य सङ्गरे शुक्र व्याधयो न च वैरिणः ।
न च शस्त्र व्रण पीड़ा भवेद् ध्वज-समुच्छ्रयात् ॥३२॥

इति श्री देवी पुराणे ध्वजदानविधिर्नाम पञ्चत्रिंशोऽध्यायः ।

---

१. संज्ञा वालेन ख ।



# षट्त्रिंशोऽध्यायः ।

शुक्र उवाच ।

स्तवः पुरा यथा देव्या मया पृष्टो वृषध्वजः । तमहं[1] श्रोतुमिच्छामि त्वत् प्रसादात् च शूलिनः ।१।।

ईश्वर उवाच ।

शृणु शुक्र यथा पृष्टो देव्याः स्तोत्रं सुदुर्लभम्[2] । शमनं सर्व्वपापाणां सर्व्वं कामफलप्रदम् ॥२॥

यं श्रुत्वा भरते विद्या विद्यते च शिवात्मकम् । परापर विभागन्तु तदहं वचनैर्ध्रुवम्[3] ॥३॥

जय पवन गगन दिनकर[4] हुत वह शशि सलिल अवनि आत्मस्थे ।

स्थिति जगत् कारण हेतो मूर्त्तित्वे कल्पिते नमस्ते ॥४॥

जय सकलाध्व व्यापिनि अनादि निर्लक्ष[6] शुद्धि आत्मस्थे ।

आधाराद् वायुनामनेक[7] तत्त्वार्थ रूपिणि नमस्ते ॥५॥

जय नाद विन्दु रूपिणी ईशानात्मनि विद्यामये[8] कलिकाले ।

विद्या नियति सरागे पुरूषाव्यक्तवेशाय नमस्ते[9] ।।६।।

खग गगन[10] दहन रूपिणि जलधर[11] तनु वंध मोचनि अनाद्ये[12] ।

जय सकल-रूप-मातृरूपेऽनेकविज्ञानधारिणि नमस्ते ।।७।।

जय[13] काल देह रूपिणि विमुक्त तद्विरामान्ते । विन्दुवन्ध[14] निरूद्धं तद्भेदमोचनि नमस्ते ।८।

---

१. तदहं क ग ।
२. सुदुर्लभम् क ग ।
३. विद्याप्यज्यते च शिवांवर क ग ।
४. व्रुवत् क ।
५. दिवकर क ।
६. दुर्ल्लक्ष क ग ।
७. आधानाव्वाण क ।
८. विद्यमेये क ग ।
९. व्याक्ते पापमिति नमस्ते क ।
१०. खखग क ग।
११. जलवर क ।
१२. सुनद्यि क ।
१३. सशक्तित्वेन च बंधनि लभावार्थं मोचनि नमस्तें । जय नादांत व्यापिनि नदा नादयुक्तः । क पुस्तके ।
१४. तिंछेरंध क ग ।

जय दश-दिशत्व-रूपिणि अशुभाशुभ[1]मार्ग चोदनि[2] ।
शुद्ध-ज्ञान-सुचोदनि मन्त्रात्मके मूर्त्त्यवस्थिते नमस्ते ॥९॥
जय सकल जन्तु मोहनि मायात्मक रूपिणि[3]दुर्भेद्ये ।
जय[4] काल देह[5]रूपिणि निश्वासोच्छ्वास वायुतत्वारसे ॥१०॥
व्यक्ति पचसि च दहने पिन्डत्वात् पालयि[6] वते नमस्ते ।
जय तत्त्व भाव रूपिणि अत्यन्त सूक्ष्मादलक्ष्ये निर्जये ॥११॥
नोतृपन्ने नानुत्पादनि[7] शिवशक्ति परस्वरूपिणि नमस्ते ।
जय निष्कलार्थ[8] रूपिणि समस्तवस्त्वन्त संस्थितावस्थे ॥१२॥
परमापर सकलगते भगवति वरदे वरे नमस्ते ।
जयपृव्यंङ्घ्रिगता ते गुल्माभ्भस्तेजो जङ्घ्यो ह्यनिलः ॥१३॥
ऊरूभ्यां वियद्गुह्ये क द्याहङ्कारगते नमस्ते ।
जय नाभ्यधःस्ताद् बुद्धिर्नाभ्यां प्रकृति हृदिस्थितः पुरूषः ॥१४॥
विद्या राग कुचाभ्यां नियति परे ह्युरःस्थल गते नमस्ते[9] ।
जय कालकण्ठ गते कपालि[10]घण्टामुखे स्थिता माया ।
विद्या जिह्वां नाशेत् तत्त्वेश्वर संस्थिते[11]नमस्ते ॥१५॥
जय त्रुटि गतत्व विन्दुनाद शब्दात्मकञ्च मार्गे तु ।
शक्ति तद्विराम तत्त्वाघटित तनुं नमस्ते ॥१६॥

---

१. शुभ भव क ग । २. चोदनि अविधे क । ३. मायात्मक रुप रुपिणि क ग ।

४. कलरुप मातृ रुपि अनेक विज्ञान धारिणि नमस्ते । जयकाल क्लेद रुपिणि क्षणादि कल्पांत संस्थितावयवैः । विद्या शुद्ध ज्ञानं नैयामर्थं निस नियति रुपिणि नमस्ते । जय गगां रुपिणि पुरुषेयं वेत्ति चार्थं संवेद्योगुण पर निष्टचेष्टाय कार्यो व्यक्त रुपिणि संभततन्मात्रवंध निनमति ॥

५. जय शुशिर गगन क ।

६. पालय सिवरे नमस्ते क । ७. सोपेत्रेत्र पोदनि क ग । ८. निष्कला क ग ।

९. नियति पुर स्थागत नमस्ते क । १०. कापालि घंटा क ग।

११. संस्थिते क ।

जय सकल शत्रु मद्र्दनि[1] मृगपति गमन प्रियेन्दु दीप्ताद्ये ।

त्वं[2] देवी समरकालेऽत्यद्भुत चेष्टौ त्वं नमस्ते ॥१७॥

जय विप्र[3] दर्शन मात्रात् सहर्ष[4] वेगेण त्रुठितवलयोधम्[5] ।

अभयमिव घोषयन्तं भवतं शक्रञ्चाभयकारि नमस्ते ॥१८॥

जय सव्यादसव्ये वाणान् मुञ्चन्त्युज्ज्वलन्[?] वलयिनि ।

त्रुटयन्ति संधिमार्गाः कात्यायनि कञ्चुके नमस्ते ॥१९॥

जल शत्रुं चाभिमुखं दंष्ट्रादेवमुक्त शस्त्रहुङ्कारम् ।

रिपूभयदामभयदभक्तं मृतमूर्धातंरे नमस्ते ॥२०॥

जय रिपु निग्रह कारिणि नियमयमे दुःख शोक वैचित्र्ये ।

उद्वेग भय रूजाद्यैश्चोदयसि नेच्छन्नपि नमस्ते ॥२१॥

[6]जय ये भक्ताः शूलिनि प्रताप मानाभिमान सन्तुष्टाः ।

तेषां दृष्ट्या पुरतो लक्ष्मीःसञ्चरति च नमस्ते ॥२२॥

इति दुःख शोकिनं त्वं मुखं निर्लज्जं निकृति पिशुनम् ।

जरा रूज पीडित गात्रं नास्तिक्यं त्राहि मां देवि ॥२३॥

त्वं ज्वर रूज[?] वीचौ आवर्त्तकिल्प यौवनौल्लोलैः ।

विषमे दुःख समुद्रे मग्नं त्वं त्राहि मां देवी ॥२४॥

यन् मे किञ्चित् दुःखं तत् सर्व्वं ते निवेदितार्जन ।

यो यस्य प्रपन्नो निवेद्य दुःखं सुखी भवति ॥२५॥

अर्थे शूलिनि दुर्गे गौरी चण्डी प्रसीद मां देवी ।

अभिवाञ्छितश्च सिद्ध्यतु मम देवी तव प्रसादेन ॥२६॥

अर्च्चयित्वा तु दुर्गां यः पठति भक्तिमान् नरः ।

---

१. सकल द्रुम कुनि क ।
२. द्वंद्वे क।
३. रिपु क ।
४. मात्रा हर्ष क ।
५. तवनमोघं क ।
६. क पुस्तके नास्ति ।

करतल गति निर्विघ्ना[1] सिद्धिः स्याच्चिन्तिता तस्या ॥२६॥

एवं स्तुत्वा क्षमायेत विक्लवा गद्‌गदा गिरा । समन्युद्‌गीत उद्‌वाष्पो वरान् कामान् नृणां कुरु ।२७।
पुनः प्रपातमष्टाङ्गं कर्त्तव्यं सिद्धिभाग् भवेत् । सकामो विविधान् भोगान् निष्कामः परमं पदम् ।२८
प्राप्नुयान्नात्र सन्देहो वाच्यमेतत् स्तवं परम् । तत्त्वार्थ[2] रूपिणि देवी यस्मात् स्तोत्र प्रकाशितम् ।२९
तस्मात् प्रयत्नतः शुक्र पठितव्यस्तदर्थिभिः[3] । वेदार्थं चिन्तमानेन विष्णुना पठितः पुरा ॥३०॥
ब्रह्मणा शिव सद्‌भावं सूर्येण मनुना तथा । दक्षः प्रजापति व्यास देवलासित गौतमैः ॥३१॥
वशिष्ठ भृगु माण्डव्य पुलहादिभिः सत्तमैः । एतद्देव्याः परं तत्त्वं सर्व्वभावप्रकाशकम् ॥३२॥
पठनात् श्रवणात् शुक्र सर्व्वकाम फलप्रदम् । विद्यार्थी लभते विद्यां सुखार्थी सुखवान् भवेत्[4] ॥३३॥
बन्धनात् मुच्यते बद्धो रोगाद्‌रोगी प्रमुच्यते । सर्व्वदान तपस्तीर्थं यज्ञ-पुण्यमवाप्नुते ॥३४॥

इति श्री देवीपुराणे देवीस्तवोनाम षट्त्रिंशोऽध्यायः ।

---

१. विद्या क ग ।    २. तत्वास्व क ग ।    ३, चितिः क ।
४. सुखमुत्तमां क ग ।



# सप्तत्रिंशोऽध्यायः ।

ब्रह्मोवाच ।

सर्व्वाणि हृदयस्थानि मङ्गलानि शुभानि च । ददाति ईप्सितान् लोके तेन सा सर्व्वमङ्गला ॥१॥
शोभनानि च श्रेष्ठानि या देवी ददते[1] हरे । भक्तानामार्त्तिहरणी मङ्गल्या तेन सा स्मृता ॥२॥
शिवा मुक्तिः समाख्याता योगिनां मोक्षगामिणी । शिवाय यो जपेद् देवी शिवा लोके ततः स्मृता ३।

धर्म्मादीन् चिन्तितान् यस्मात् सर्व्वलोकेषु यच्छति ।
अतो देवी समाख्याता सा सर्व्वार्थानु[2]साधनी ॥४॥

विषाग्नि भय घोरेषु शरण्यं स्मरणाद् यतः । शरण्या तेन सा देवी पुराणे प्रतिपाद्यते ॥५॥

सोम सूर्य्यानिला[3]स्त्रीणि यस्या नेत्राणि भार्गव[4]
तेन सा त्र्यम्बिका देवी मुनिभिः परिकीर्तिता ॥६॥

योगाग्निना तु या दग्धा पुनर्ज्जाता हिमालये । पूर्ण सूर्य्येन्दु[5]वर्णाभा अतो गौरिती सा स्मृता ॥७॥
जलयाना नरा गौर्य्या समुद्र शयनाय वा[6] । नारायणी समाख्याता नरनारीः प्रकुर्व्वता ॥८॥
स्मरणादि[7]भये दुर्गे तारिता रिपु सङ्कटे । धारणाद्वत्सनाद् वापि कात्यायनी मता बुधैः ॥९॥
रौद्राणि घोरकर्म्माणि कारणाच्च रौद्री मता । विन्ध्येऽवतीर्य्यं देवार्थं हतो घोरो महाभटः ॥१०॥

अद्यापि तत्र सा वासा तेन सा विन्ध्यवासिनी ।
जयन्ती जयनाख्याता अजिता [8]न जिता क्वचित् ॥११॥

---

१. सदृशे क ग । २. समाख्याता सर्वार्थ अर्थं साधनी क ग । ३. नला क ग
४. संविका क ग । ५. शंख कुंदेदुवर्ण क । ७. स्वबलादि क ।
६. यता नरा कुर्यात मद्यत्र शयनाथवा क ग ।
८. देवाः शक्रादयो यस्मात् सादुर्गा प्रकीर्त्तिता । को ब्रह्मा कः शिवः प्रोक्त अश्मशारंचकंमते क ।
९. क पुस्तके नास्ति ।

विजित्य पद्म नामानं दैत्यराजं महाबलम् । विजया तेन सा देवी लोके चैवापराजिता ॥१२॥
सिंहमारुह्य कन्यात्वे निहतो महिषो यथा । महिषघ्नी ततो देवी कन्या वै सिंहवाहिनी ॥१३॥
काली दक्षापमानेन सर्व्व शत्रु निवर्हणी । कलना काल संख्या वा काली देवेषु गीयते ॥१४॥
कपालं ब्रह्मकं जातं करे धारयते सदा । कपाली तेन सा प्रोक्ता पालनाद्वा कपालिनी ॥१५॥
हत्वा रूरुं महादैत्यं[1] ब्रह्म-विष्णु भयङ्करम् । तस्य प्राबल्य वै चर्म्म मुन्डं वामकरे तथा ॥१६॥
गृहीत्वा निर्गता भूमौ सा चामुण्डा ततः स्मृता । नन्दते सुरलोकेषु नन्दने वसते तथा ॥१७॥
हिमाचले महापुण्ये नन्दा देवी ततः स्मृता । अल्पेनैवोपकारेण यस्माल्लोके सुखप्रदा ॥१८॥
कौशेय धारणाद् वापि सुप्रसादाथ कौशिकी । कौमंन्तु वशं कृत्वा गृहीतं तत् पुरं यथा ॥१९॥
तेन सा गीयते देवी पुराणे कैटभेश्वरी । श्वेतं शुक्लां शिवं स्थानं-स्थानं यस्मादिहागता[2] ॥२०॥
महाभार समुत्पन्नः महाश्वेता ततः स्मृता । भाग्यवृद्धिः समाख्याता सर्व्वदिक्कामृतोपमा ।२१।
महार्थ साधना देवी महाभागा ततः स्मृता । सुवाहुस्त्रिदशा देवी नन्दिनी दुन्दुभिर्मता[3] ॥२२॥
तेषाञ्च वादिनी नंदी ईशत्वात् त्रिदशेश्वरी । रुद्रो भवः समाख्यातो भवः संसारसागरः ।।२३॥
भवः कामस्तथा सृष्टि र्भवानी परिकीर्त्तिता[4] । मातराण्यग्रजा ज्येष्ठा सर्व्वसम्बन्ध कारणात्[5] ॥२४।
तमोनिश्च गामित्वात् तमोनिष्ठा विनाशिनो । ब्रह्मिष्ठा देव-मातृत्वाद् गायत्री चरणाग्रजा ॥२५॥
वेदेषु[6] चरते यस्मात्[7] तेन सा ब्रह्मचारिणी । अपर्णा सा निराहारा एकाशी[8] एकपर्णिका ॥२६॥
पाटला पाटलाहाराद् देवी लोकेषु गीयते । धात्री माता समाख्याता धारणे चोपगीयते ॥२७॥
त्रयाणाञ्चैव लोकानां नाम त्रैलोकधात्रिका । त्रिदशैरर्च्चिता देवी देवयागेषु[9] पूजिता ॥२८॥
भावे शुद्ध स्वरूपा तु सावित्रीं तेन सा स्मृता । ब्रह्म विष्णवीश देवानां नयश्च परमं गता ॥२९॥
त्रयाणां शुभदायित्वात् त्रिशूली[10] तेन शङ्करी । दक्षिणश्चोत्तरं लोकं तथा ब्रह्मायणं परम् ॥३०॥

---

१. सदादैत्यं क ग । २. स्थानं यस्माद्यदिहयागता क पुस्तके नास्ति ।
३. सुबाहु स्त्रि दशा देवानां दिनीं दुंदुभिर्म्मता क ग । ४. प्रकीत्तिता क ग ।
५. समवारायग्रज जयेष्ठा षष्टी सर्वधकारणत् क । ६. दिवेषु क ग ।
७. यत्नात् क ग । ८. देकाशी क । ९. वेद क ग ।
१०. त्रिषं शूली क ।

लयं सन्मार्ग धर्म्मस्थं दृष्टौ त्रिनयना मता। पदैस्त्रिभि र्बलिर्बद्धो रागादि त्रिपदाथ वा ॥३१॥
उत्पत्ति-स्थिति-नाशेषु रजादि त्रिगुणा मता। सर्व्वज्ञा सर्व्व वैतृत्वाच्छान्तित्वाच्छान्तिरूच्यते।३२।
अरूपा परभावत्वाद् बहुरूपा क्रियात्मिका। जाता शैलेन्द्र गेहे सा शैलराजसुता ततः ॥३३॥
साध्वी पतिव्रतत्वाच्च स्कन्दोत्पादेन मातृका[1]। तारणाद्रिपुशक्रा देस्तारा लोकेषु गीयते ॥३४॥
वामं विरुद्धरूपन्तु विपरीतन्तु गीयते। वामेन सुखदा देवी वामा तेन मता बुधैः ॥३५॥
चिति चैतन्य भावत्वाच्चेतना वा चितिः स्मृता।
महत् व्याप्य स्थिता सर्व्वं महा सा[2] प्रकृतिर्मता ॥३६॥
स्मृतिः संस्मरणाद्देवी नियता च नियामनात्। मथनं मर्द्दनं प्राहुः शुम्भादि भयमाहवे[3] ॥३७॥
निशुम्भ शुम्भ मथनी देवी देवेषु गीयते। रेवा तु नर्मदा देवी नदी वा रेवती मता ॥३८॥
अति खण्डेन रक्षा वा लोके देवी प्रकीर्त्तिता। ऋक्षी शृङ्गाट[4]काकारा कुन्डली वा समुद्भवे[5]।३९।
स्वर व्यञ्जन उत्पत्तौ वेदमाता ततः स्मृता। पूज्यते या सुरैर्द्देवैः महीश्चैव प्रमाणतः ॥४०॥
बृहदस्य शरीरं यदप्रमेयं प्रमाणतः। बृहद्विस्तीर्णमित्युक्तं ब्राह्मी देवी ततः स्मृता ॥४१॥
धातुर्महेति पूजायां[6] महादेवी ततः स्मृता। सेव्यते या सुरैः सर्व्वैस्तांश्चैव भजते यतः ॥४२॥
धातुर्भजेती सेवायां भगवत्येव सा स्मृता। तुष तुष्टौ स्मृतो धातुस्तस्य तुष्टा निपातने ॥४३॥
सृजत्येषा प्रजास्तुष्टि त्वाष्ट्रि तेन प्रकीर्त्तिता। महानिति च योगेषु प्रधाना चैव कथ्यते ॥४४॥
त्रिगुणा व्यतिरिक्ता सा पुरुषश्चेति चोच्यते[7]। हिरण्यगर्भोऽभूद् बुद्ध्या तेन बुद्धिर्मता असौ[8]।४५।
विश्वं बहुविधं ज्ञेयं सा च सर्वत्र विद्यते। तस्मात् सा बहुरूपत्वात् बहुरूपा शिवा मता ॥४६॥
एते च असते लोका न एका न च सा स्मृता।
एका च नाशतो लोका एकानंशा च सा स्मृता ॥४७॥
योगी शुक्रादयो देवा सनकाद्याः तपोधनाः[9]। तेषां स्वामी तथा[10]योगी ईश्वरी प्रभुपालना ॥४८॥

---

१. उत्पादन मातरा क ग।
२. वा क।
३. मर्दत्वाहुः शुभादि भय माहवां क।
४. वाज्वी श्रृंगीठ क।
५. ख पुस्तके नास्ति।
६. जापां क।
७. स पुरूषः ते क ग।
८. तेन बुद्धिर्म्महत्यसौ क ग।
९. सनकांत सायोवला क।
१०. ततो क।

आत्मेन्द्रिय-मनादीनां संयोगो योग उच्यते । तेषां वा योजनाद् योगी योगैश्वर्य्यावबोधना ॥४९॥

स्मृतिः[१] सिद्धिरिति ख्याता श्रिया संश्रयणांसवा ।

लक्ष्मीर्वा ललना वापि क्रमणात्[२] कान्तिरुच्यते ॥५०॥

स्वराः स्मरणशीलत्वात् ज्ञेया सप्त स्वरात्मिका[३] । अति प्रायण दाने वा तेन देवी सरस्वती ॥५१॥

गायनाद्गमनाद्वापि गायत्री त्रिदशार्च्चिता । साधनात् सिद्धिरित्युक्ता सात्त्रिका वाथ ईश्वरी ॥५२॥

स्वामित्वाद् दानसिद्धित्वात् सिद्धिश्चर्य्या प्रकीर्त्तिता ।

स्मरणाच्चिन्तनाद् वापि शोध्यते[४] महापातकात् ॥५३॥

तेन शुद्धिः समाख्याता देवी रुद्र तनौ स्थिता । महागज घटाटोप संयोगे[५] नर-वाजिनाम् ॥५४॥

स्मरणाद्वारते वाणान् तेन सा कान्डवारिणी ।

विचित्र कार्य्य करणा अचिन्तित फलप्रदा ॥५५॥

स्वप्नेन्द्र-जालवल्लोके माया तेन प्रकीर्त्तिता ।

आत्मवेदनशीलत्वादन्वीक्षण पराथवा ॥५६॥

अन्वीक्ष्य कुरुते यस्मादान्वीक्षा सा ततः स्मृता ।

ऋग् यजुः साम भागेन साङ्गवेद गतापि वा ॥५७॥

त्रयीति कथ्यते लोके दृष्टा दृष्ट प्रसाधनी । पश्वादि पालनाद् देवी कृषि कर्म्मान्त कारणात् ॥५८॥

वर्त्तनाद् वारणाद् वापि वार्त्ता सा एव गीयते । नया नय गता लोके विकल्पेन निरामया ॥५९॥

दन्डनाद्दमनाद् वापि दन्डनीतिरितिस्मृता ।

क्रिया कारण रूपत्वात् सरणाच्च सरिन्मता ॥६०॥

गाङ्गमागमनाद्गङ्गा लोके देवी विभाव्यते । यमस्य भगिनी माता यमुना तेन सा मता ॥६१॥

प्रभा प्रसादशीलत्वाज्ज्योत्सना चंद्रार्क मालिनी ।

रजनी कीर्त्तिता देवी आर्ति प्राप्तिर्मता बुधैः ॥६२॥

१. भूतिः क ग ।

२. लालन लीला वाक्तमशोत् क ।

३. सुरासुरण शीलत्वादे याख्या सप्त कीर्त्तितः क ग ।

४. कौपेच्ये क ।

५. संयुगे क ग ।

रात्रीति तेन सा लोके परिणाम सुखप्रदा । भयं नरकमाहुः स्यात् कुगति[1] प्रापणेषु च ॥६३॥

अवति रक्षणे त्राणे भगवत्येव मङ्गला ।

त्रिदेवास्त्रिगुणाः काला सुशर्म्मा शान्तिः कीर्त्यते ॥६४॥

ललये भूषणे वाथ त्रिशूली शूलपूजना । हिंसा हिंसनशीलत्वाद् वलनाच्च महाबला ॥६५॥

दया दान स्वरूपेण कृपया च कृपा मता । दिव्यानां पार्थिवानाञ्च वंशानामिह सर्व्वशः ॥६६॥

आदित्याददिति[2] ख्याता दितिर्दैत्यप्रसूयनात् । भास्वरास्तु करा यस्य सुरारिविनिवारणाः ॥६७॥

भास्[3] दीप्तौ स्मृतो धातुर्भास्वरा तेन चर्च्चिका ।

दैत्यान्तकरी[4] देवी दैत्यान्ता सा स्मृता ॥६८॥

बहूनि यस्य रूपाणि च स्थिराणि च चराणि च ।

देवमानुषतीर्थाणि बहुरूपी तत उमा ॥६९॥

श्रवणे स्यन्दनार्थे च धातुरेष निपात्यते ।

श्रवणात्तेजसां चैव सावित्री तेन सा स्मृता ॥७०॥

अवेति[5] रक्षणे धातु अधिप्राकारने तथा । अज वक्रा शिवा तेन असुरासुर वन्दिता ॥७१॥

भीषणी शत्रु सिंहस्य भीषणं स्वीकरोति च । भीषणी तेन सा नित्यं पुराणे चोपगीयते ॥७२॥

यस्माद् वारयते लोकान् वृत्तिमेषां ददाति च । दुधाज् धारणे धातुस्तस्माद् धात्री मता बुधै ॥७३॥

वराण्याशंसु देवा वरदा च वरार्थिनाम् । धातुवृञ्वरणे प्रोक्तस्तेन सा वरदा मता ॥७४॥

शंकु च कीलकमित्याहु र्वेणी पंक्ति क्रमस्तथा ।

शिरसो राजते तस्यां शंकुवेणी मता बुधैः ॥७५॥

हस्तं शरीरमित्याहुर्हस्तश्च गगनं तथा । ज्योतीषि ग्रहनक्षत्रा ज्योतिर्हस्ता ततः स्मृता ॥७६॥

ऐश्वर्य्यं परमं यस्य वशे चैव सुरासुराः । इदि परमैश्वर्य्ये च इन्द्राणी तेन सा शिवा ॥७७॥

---

१. नरक मार्गत्त्वहुति क ।

२. आदिलाददिभिः क ।

३. तास् क ग ।

४. दैत्याधयकरी क ।

५. बहू नियस्य रूपाणि चराणि च । देव मानुष तीर्थ्याणि चहु रूपि चतुत्तमा । श्रवणे स्यन्वनाये च धातु वेष निपात्यते । श्रवणी तेज सोयांच साविभि् तेनसा स्मृताः क ।

त्रुट्यादि उच्यते कालः कालश्चान्ते विनाशने ।भद्रं करोति सा धाता भद्रकाली[1] मता ततः ॥७८॥

शक्ता या जगतः कर्त्तु सर्गानुग्रह संग्रहान् ।
शकि[2] शक्तौ स्मृतो धातुः शिवा शक्तिस्ततः स्मृता ॥७९॥

वसत्यदृष्टा सर्व्वेषु भूतेष्वन्तर्हिताय च । धातुर्वस निवासेति वासना तेन सा स्मृता ॥८०॥

ब्रह्माणी ब्रह्मजननी ब्रह्मस्येयं च वा मता । रुद्रस्येयं तु रुद्राणी रौद्रं हन्ति करोति वा ॥८१॥

महादेवात्समुत्पन्ना महान्ति वीक्षते यतः । माहेश्वर्या तनूर्यस्या माहेशी तेन सा मता ॥८२॥

कुमार[3] रूपधारी च कुमार जननी तथा । कुमार रिपुहन्त्री च कौमारी तेन सा स्मृता ॥८३॥

शङ्ख-चक्र-गदाधारी विष्णुमाता तथारिहा । विष्णुरूपाथवा देवी वैष्णवी तेन गीयते ॥८४॥

वराह रूपधारी च वराहो यस उच्यते । तथा वाराह जननी वाराही वर वाहिनी ॥८५॥

इन्द्राणी इन्द्र जननी शाक्री शक्र पराक्रमा । वज्रांङ्कुशधरा देवी वज्री तेनोपगीयते ॥८६॥

चन्डं वीभत्समित्याहुर्मुण्डं ब्रह्मशिरो मतम् । स्वामी मुण्डमतश्चान्यै र्धारणी करणार्थं वा ॥८७॥

चामुण्डा कीर्तिता देवैर्मातॄणां प्रवरा तु सा । एका गुणात्मा त्रैलोक्ये तस्मादेका सा उच्यते ॥८८॥

देवी सा परमार्थेति वदन्ते भिन्नदर्शिनः । तत्र[4] बुद्धेरमोहाच्च दृष्टान्तानि ब्रुवन्ति च[5] ॥८९॥

ब्रह्माणं कारणं केचित् क्वचिदाहुर्दिवाकरम् । केचिद् रुद्रं परत्वेन आहुर्विष्णुं तथापरे ॥९०॥

कारणाच्च स्मृता ह्येते कारणार्थे[6] सुरोत्तम । एकां सा तु पृथकत्वेन शिवा सर्व्वत्र विश्रुता[7] ॥९१॥

यथा[8] तु व्यज्यते वर्णै र्विचित्रैः स्फटिको मणिः । तथा गुणवशाद्देवी नानाभावेषु वर्ण्यते ॥९२॥

एको भूत्वा यथा मेघः पृथकत्वेनावतिष्ठते । वर्णतो रूपतश्चैव तथा गुणवशाज्जया ॥९३॥

नभसः पतितं तोयं याति स्वाद्वन्तरं यथा । भूमे रस विशेषेण तथा गुणवशाच्छिवा ॥९४॥

यथा द्रव्य विशेषेण वायुरेकः पृथग् भवेत् । दुर्गन्धो वा सुगन्धो वा तथा गुणवशादुमा ॥९५॥

यथा वा गार्हपत्याग्नि रन्य सञ्ज्ञान्तरं व्रजेत् । दक्षिणा हवनीयादि ब्रह्मादिषु तथा च सा ॥९६॥

---

१. कालश्चांत्यो क ।
२. साध्यातो क ग ।
३. शवु क ग ।
४. तद्धै क ग ।
५. हृ क ग ।
६. स्मृता ह्येताना नार्थेपु क ।
७. शिवा देवी निदर्शनैः क ।
८. क पुस्तके नास्ति ।

एकत्वेन पृथकत्वेन प्रोक्ता देवी निदर्शनैः[1] । तस्माद् भक्तिः परा कार्य्या सर्व्ववर्गप्रसिद्धये ॥६७॥
देव्याया एष सिद्धान्तः परमार्थो महामते । एषा वेदाश्च यज्ञाश्च स्वर्गश्चैव[2] न संशयः ॥६८॥
देव्या व्याप्तमिदं सर्व्वं जगत् स्थावरजङ्गमम् । इत्यन्ते पूज्यते देवी अन्नपानात्मिका सदा ॥६९॥
सर्व्वत्र शङ्करी देवी तनुभिर्नामभिश्च सा[3] । वृक्षमूर्व्व्यां तथा वायौ व्योमे स्वर्गे[4] च सर्व्वशः ॥१००॥
एवं विधा त्वियं देवी सदा पूज्या विजानता[5] । रुद्राणी वेत्ति यस्त्वेव[6] स तस्यामेव लीयते ॥१०१॥
अप्येकं वेत्ति यो नाम धात्वर्थ-निगमैं नरः । स दुःखैर्वर्जितः सर्व्वैः सदा पापा[7]द्विमुच्यते ।१०२।
न हि पापकृते शक्र चित्ते भवति चर्च्चिका । तस्मात् त्वं परया भक्त्या प्रपद्य शरणं शिवाम् ।१०३।

इति श्री देवीपुराणे देव्यानामनिरुक्तिर्नाम सप्तत्रिंशोऽध्यायः ॥

---

१. क पुस्तके नास्ति ।
२. देवाश्च क ग ।
३. तथा क ।
४. व्योम्य अग्नौ क ।
५. विजानत्य क ग ।
६. वेत्तियस्थे क ।
७. ह्यः पापात् क ग ।



# अष्टत्रिंशोऽध्यायः ।

शक्र उवाच ।

केनोपायेन सा देवी वरदा भवते नृणाम् । सर्व्वेषां हितकामानां तथा[1] ब्रूहि पितामह ॥१॥

ब्रह्मोवाच ।

हिमवद् विन्ध्यानिलयैर्यथा व्याप्ता वसुन्धरा । शिवा मङ्गल नन्दार्च्चिर्लोका व्याप्ता परापरा ॥२॥

तथा दक्षिण विन्ध्याद्रर्मलयाच्च यदन्तरम् । मङ्गला सा स्थिता देवीं दुर्गां तत्र प्रपूजयेत् ॥३॥

उत्तरं विन्ध्यभागन्तु पश्चिमोदधि पूर्व्वगा । कुरूक्षेत्रान्तरालन्तु जयन्तीं शिव-अङ्गगा[4] ॥४॥

कुरूक्षेत्रोत्तरं भागं हिमवद्दक्षिणेन च । नन्दा देवी कलांशास्तु देव्यास्तत्र प्रपूजयेत् ॥५॥

कालिकाख्या तथा तारा उमा सर्व्वनगेषु च । तथा किष्किन्धिकाद्या या भैरवी चेति विश्रुता ॥६॥

रूद्राणी च कुशलाम्ने भद्रकाली जालन्धरे । महालक्ष्मीस्तु कोलाख्ये कालरात्रीं[3] च सज्यगा[4] ॥७॥

अम्बाख्या लोहिता देवीं पूज्यते गन्धमादने[5] । उज्जयिन्यान्तु उज्जेनी जम्बुमार्गे तथा स्थिता ॥८॥

महाकालीति विख्याता वैदेहे[6] भद्रकालिका । एता इन्द्रावताराख्या महादेव्यः सुरारिहाः ॥९॥

पूजिताश्चिन्तिता वत्स सर्व्वं काम फल प्रदा ॥१०॥

इति श्री देवीपुराणे देव्यवतारे स्थान-कथन-नामाष्टत्रिंशोऽध्यायः ॥

---

१. त्वंशि क ग । २. अगगा क ग । ३. कालशरात्री क ।

४. मञ्यगा क । ५. चार्तुदते तथा क । ६. वैदिशे क ग ।

७. अस्यातु कृति रूपेण वाक्षे मृन्मय शैलजाः ।
धातु रत्न कृता शक्र पूजयेत् सुखभाग्भवेत ॥
पद्मासन स्थिता कार्य्या सिंह दंडासने पिवा ।
गजाश्वखरमारूढा सर्वभावफलप्रदाः । क ग ।

# एकोनचत्वारिंशोऽध्यायः ।

शौनक उवाच ।

येषु येषु च तीर्थेषु पूजिता सुरसत्तमैः । पूर्व्वमिन्द्रादिभि देवी तीर्थांस्तान् प्रब्रवीहि नः ॥१॥

मनुरुवाच ।

ब्रह्मणा पुष्करे देवी पूजिता सिद्ध कामिना[1] । कार्त्तिक्यां सर्व्व देवैश्च तत्रैव मुनिसत्तम ॥२॥

हिमवद्गिरौ महापुण्ये नन्दा रूद्रेण पूजिता । सर्व्वकाम[2]प्रसिद्ध्यर्थं खड्ग[3]खेटक धारिणी ॥३॥

कामाख्या[4]जामदग्न्येन किष्किन्ध्ये पर्व्वते नुता । देवी महेश्वरी शक्र पूज्यते काशिकाश्रमे[5] ॥४॥

सर्व्वकाम सुसिद्ध्यर्थं रजेति वेद पर्व्वते[6] । यजेद्भौमात्मजो देवीं कामाख्ये गिरिकन्दरे[6] ॥५॥

काश्यपो यजते देवीं सरस्वत्यास्तटे शुभाम्[7] । पूर्व्वसिन्धौ यजेद्देवीं सनको नाम भावितः ॥६॥

दक्षिणे वाम नामा च कार्तिकेय समन्विताम्[8] । लङ्कायां यजते देवीं राक्षसेन्द्रो विभीषणः ॥७॥

पश्चिमे वरूणो देवो यजते भावितोऽम्भसा । उत्तरे नन्दिकालौ च कैलासे तौ प्रपूजयेत् ॥८॥

अगस्त्य शिष्या मुनयो यजन्ति भावितां शिवाम् । कण्वाश्रमे महापुण्ये धर्म्मारण्ये सदा शिवाम् ॥९॥

कण्वो नाम मुनि श्रेष्ठो यजते काश्यपात्मजः । महाकाले महादेवी कोटितीर्थे सुरोत्तमैः[9] ॥१०॥

---

१. सिद्धि कामिनि क ग ।

२. नैमिषेच तथारण्ये विष्णुना पूजिता शिवा ।
मल्लाख्ये पर्वतं देवी अम्बा सूर्येण पूजिता ॥ क ।

३. खंड क ।

४. कालाख्य क ग ।

५. कालिकाश्रमे क ग ।

६. सर्व काम प्रसिद्धयर्थ कुंजो वैवेदे पर्व्वते । पतेद्भौमार्थजो देवीं कौलाख्य गिरिकंदरे क ।

७. सरस्वत्यास्तटे शुभे क । ८. समन्वितः क ।

९. कौरि क ।

पूजिता सर्व्व कामाणि प्रयच्छत्यविचारणात्[1] । भद्राख्ये तु वरे देवी तुष्टा ह्यासीत् पुरन्दर[2] ॥११॥
मान्धाता नाम राजेन्द्रः तृतीये यः प्रशंसितः[3] । दिलीपस्य तथा देवी तुष्टा कावेरि[4]सङ्गमे ॥१२॥
गोकर्णे राजसेनस्य अजापालस्य दन्डके । धन्वन्तरः पुरा तुष्टो गन्डक्याः सङ्गमे मुने ॥१३॥
आत्रेयस्य महाशोणे नदे तुष्टा तु अम्बिका । महोदये महादेवी परशुरामेण तोषिता ॥१४॥
कोटि मुन्डेति विख्याता पीठक्षेत्र शिवोपरि[5] । महाराजेति या देवी मुन्डि[6]पीठगता मुने ॥१५॥
सार्व्व भौम शिरैस्तस्याः पीठं रामेण कल्पितम् । खन्ड मुन्डा तथा देवी अपरा तेन पूजिता ॥१६॥
गतिं दिव्यांगतौयेन सह नक्षत्र चारिभिः । मलयाद्रौ तथा देवी अघोरा नाम पूजिता ॥१७॥
जामदग्येन लङ्काद्रौ कालिकेति तथा पुरा । पूजिता विजया नाम शाकद्वीपे महोदया[7] ॥१८॥

कुशद्वीपे तथा चण्डा[8]सर्व्वदेवे-प्रपूजिता ।
क्रौञ्चेऽति योगिनी नाम शाल्मलेऽति वराङ्गना[9] ॥१९॥

मन्दरे धृतिमाख्याता[10]राम भद्रे जयावहा । पुष्करे कीर्त्यते देवी नाम्ना नारायणीति[11]च ॥२०॥
जलमध्ये गता देव्यः प्लवा हेला[12]प्रकीर्त्तिताः । पर्व्वतोर्ध्वगता देव्या धारणा धरणा मता ॥२१॥
एताः पौराणिका देव्यो जामदग्न्येन पूजिताः । महाधर्म्म विनाशार्थं ब्रह्मणामिततेजसा ॥२२॥
महादेवी पुराराध्या वदर्य्याख्ये तु आश्रमे । तपस्तप्यति गोविन्दः[13] पूजितः पद्मजन्मना ॥२३॥
एवं सर्व्वगता देवी मन्त्र विद्यागमेषु च । संस्थिता मातृ तन्त्रे च ज्येष्ठे तन्त्रे च भैरवे ॥२४॥
पूर्व्वं शुक्रेण देवेशः पृच्छितो वृषवाहनः । मन्त्राणां किं बलं देव विद्यानाञ्च महेश्वर ॥२५॥

ईश्वर उवाच ।

मन्त्राणां परमं वीर्य्यं विद्यानां परमं वलम् । श्रूयतां कथयिष्यामि संक्षेपाद् भृगुनन्दन ॥२६॥
ब्रह्मणा कथितं पूर्व्वं तच्छ्रणुष्व समाहितः । आसीद् दैत्यो वलो नाम महाबल पराक्रमः ॥२७॥

---

१. विचारण्यत् क । २. तुष्टा आसीत्पुरंदर क ग ।
३. मांधाता यमराजे इष्टतीये यः प्रशंतां क । ४. तुष्टा कारेरि हरिसंगमे ख ।
५. पीठे क्षेति शिरोपरि क ग । ६. मुण्ड क. ग ।
७. शालमलेति वरांगना क । ८. वर्णी क । ९. वरांगना कुला क ।
१०. मार्ज्जारे भृति क ग । ११. नाम नारायणेति क । १२. प्रवाहेन क ।
१३. गौविंदः क ।

देव-गन्धर्व्व-यक्षाणां चन्द्रेन्द्र-भयकारकः । येन विष्णुर्यमः सूर्य्योऽग्नि आजौ प्रपीड़ितः[1] ॥२८॥

अनिलानल रक्षाश्च[2] वरुणश्च वशीकृताः । संयम्य येन नागेन्द्रा महाभोगा महाविषाः[3] ॥२९॥

गरुडश्च कृतो भृत्यः सदाज्ञामति वर्त्तिनः[4] । येन संलिख्य शैलेन्द्रः कन्दुकाकृति कारितः ॥३०॥

क्रीडार्थं येन विप्रेन्द्र गिरयः प्रथिता भुविः ।

तेन देवाः सब्रह्माद्या दिवि[5]संस्थाश्च चालिताः ॥३१॥

दत्तं स्थानन्तु पाताल समयं शरदां शतम् । तथा ते भयमापन्ना[6]मानं त्यक्त्वा[7]गता गुरूम् ॥३२॥

पृच्छन्ति विनयात् सर्व्वे शक्रस्य हितकारिणः । केनोपायेन देवानां स्वर्गवासो भवेद्द्विज ॥३३॥

त्वमेव[8] शास्त्रवेत्ता नो हितः शक्रस्य नित्यशः । शङ्कोदधि-निमग्नानामतिपोता भव त्वर ।३४।

एवं पृष्टः स देवैस्तु गुरुर्वचनमब्रवीत् ।

बृहस्पतिरुवाच ।

यदर्थं दानवः शक्र न युद्धे भवते वशः ॥३५॥

दाता सत्त्व बलोपेतः स्वकार्यमखिलेष्वपि । अतस्तस्य प्रहेतव्यो विष्णुर्मायामहोदधि ॥३६॥

द्विजरूपधरो भूत्वा याचनाय वधाय च । गुरुणा चोदिता देवाततस्ते निधनं प्रति ॥३७॥

रणेन क्षयमायाति अजयः सङ्गरे यतः । अतः कपटमास्थाय प्रार्थनीयः क्रतुं प्रति ॥३८॥

गताः सर्व्वे ततः शान्ता यत्र देवो जनार्दनः । माधवेन ततो देवा दृष्ट्वा भय समाकुलाः ॥३९॥

क्रमाध्यासिन आलापैः सर्व्वे ते संस्तुता भृशम्[9] । पृच्छितास्ततः सर्व्वेऽपि किमायातावदन् सुराः ।४०।

देवा ऊचुः ।

वलेन बलिना देव[4]सर्व्वे वित्रासिता वयम् । मायावी त्वं वधे तस्य नान्योपायो भवेत् क्वचित् ।४१।

विष्णुरुवाच ।

करोमि भवतामिष्टं किन्त्वसौ बलसंयुतः । सात्विको नयवेत्ता च सर्व्व शास्त्रार्थ पारगः ॥४२॥

गूढ मन्त्र विचारो स्यात् धर्म्मैक कृत निश्चयः । तस्य मायां कथं कर्त्तुं शक्यते सुरसत्तमाः ॥४३॥

---

१. प्रक्रीडिता क ।
२. ब्रह्मा च क ।
३. महाधिषा क ।
४. वर्द्धनः क ग।
५. विदि क ।
६. भयमापश्य क । ७. मानत्यो क । ८. बलिदानेव क
९. श्लोकपंचकं नास्ति क पुस्तके ।

परैका भवते विद्या मम दत्ताथ शूलिना । मोहिनी नाम विख्याता मोहं सा कुरुते भृशम् ॥४४॥
अतोऽहं तस्य नाशाय स्मरामि परमेश्वरीम् । स्मरित्वा परमां विद्यां द्विजभावो जनार्दनः ॥४५॥
मध्यकायः सुवेशश्च वेदपाठी सविस्तरी । परिग्रही हुताशस्य ख्यापयन्तो व्रजन् जपेत्[1] ॥४६॥

यज्ञार्थं याचनां कस्य करोमि कथ्यतां मम ।
तं दृष्ट्वा सूर्य्य तेजाभं युक्तो विप्रैर्व्रजेत् सुरः ॥४७॥

वलस्ते यज्ञ निष्पत्तिं करोति द्विजसत्तम । हेमकूटे महाशैले तिष्ठते दानवोत्तमः ॥४८॥
[2]सर्व्वज्ञोऽपि महामायी वञ्चनाय तदा गतः । मोहिनीं जपमानस्तु विद्यां परम सिद्धिदाम् ॥४९॥
विचित्रं दनुराजस्य पुरं सर्व्व-पुरोत्तमम् । प्राविशद्वेद वादात्मा पठमानो जनार्दनः ॥५०॥
द्वारं गत्वा सुरेन्द्रस्य कुर्य्यात् प्राध्ययनं तदा । द्वारपालो वदत्येवं श्रुत्वा वेदध्वनिं शुभम् ॥५१॥
पुराणि रत्नानि शुभं ददामि याच्यं यत् तव । इष्टं दानं द्विजश्रेष्ठं दुर्लभञ्च महामते ॥५२॥
तेनोक्तं दर्शनं द्वाःस्थ दीयतां दनुसत्तम । तदा स पूर्व्वमादिष्टः प्रेषयामास तं नृपम् ॥५३॥
वलिनं बल सम्पन्नं दानवं सुरमर्दकम् । दानोद्यतकरं भद्रं दृष्टवा प्रीत्यावभाषत ॥५४॥
किमायातो भवांश्चात्र कार्य्यं विप्र तदुद्दिश । मोहिनीं जपमानस्तु वदते द्विज केशवः ॥५५॥

द्विज उवाच ।

अहं संप्रेशितो देवैर्विद्धि मां[3] काश्यपात्मजम् ।
यज्ञाः सैन्द्रैः समारब्धा ऋषिभिश्चासुराधिप ॥५६॥

तस्य निष्पादनार्थाय आगतोहं तवान्तिकम् । दानं मे दीयतां राजन् सिद्ध्यते येन तन्मखम् ॥५७॥

वल उवाच ।

येन संसिध्यते यज्ञो देवानां भो[4] द्विजोत्तम । तद् वाचय धर्म दारान् शिवमद्य ददामि ते ॥५८॥

ब्राह्मण उवाच ।

येन संसिध्यते यज्ञो देवानामसुराधिप । तद्देयं तच्च आदिष्टं सत्यमत्रावयोरपि ॥५९॥

---

१. क्षपयन्नब्रवीतिजपनख ।
२. पंक्ति नास्ति क पुस्तके ।
३. देवै क ।
४. देवाख्यो क ।

वल उवाच ।

याच्यतां येन ते कार्यं सत्यं विप्र ददामि ते । संस्मृत्य मोहिनीं विद्यां वदते द्विजसत्तम ॥६०॥

ब्राह्मण उवाच ।

न मे धनैर्न दारैर्वा न भूम्या गज वाजिभिः । रत्नैः कार्य्यं महाबाहो देवयज्ञेऽसुराधिप ॥६१॥

येन निष्पाद्यते यज्ञः सुखदश्च[1] दिवौकसाम् । तमहं याचयामि त्वां दीयतां तद्भुतं मम[2] ॥६२॥

एतत् कार्य्यं भद्र मम[3] ऋषीणाञ्च विशेषतः । देवार्थं तव कायेन सिध्यते तन्मखोत्तमम्[4] ॥६३॥

तदा दत्ता तनुस्तेन दानवेन महात्मना । विष्णुनापि स चक्रेण शिरस्यभिहतोऽसुरः[5] ॥६४॥

प्राकृतं देहमुत्सृज्य दिव्यकायस्त्वभूत्-तदा[6] । तस्यावयव सञ्जाता वज्रादयो रत्न जातयः[7] ॥६५॥

लोचनेषु[8] च तेजांसि पद्मरागिणि याभवन् ।

विशुद्ध पात्र दानेन कायोरन्तः करोऽभवत् ॥६६॥

एवं संघातितः शुक्र विद्या मन्त्र बलेन च । विद्या मोहयित्वा तु न चास्त्रेण न सङ्गरे[9] ॥६७॥

तस्माद् विद्या वलं सर्व्वं दुःसहं सिद्धिदायकम् । स्मारितं भक्तिना विप्रमनेप्सित फलप्रदम्[10] ॥६८॥

अथ दैत्ये गते स्वर्गं सुतस्तस्य[11] महाबलः । सुवलः[12] सागरोपान्तादुत्तरादं समुत्सुकः ॥६९॥

संक्रुद्धो देवराजस्य वधाय वधकांक्षया । दिव्यं रथवरं रुह्य मनोगामि सदश्वगम् ॥७०॥

पादरक्ष समोपेतं बहुशस्त्र समाकुलम् । कामगं सर्व्वशत्रूणां प्रधर्ष[13] च महाबलम् ॥७१॥

सारथिं बहुशास्त्रज्ञं युद्धशास्त्र विशारदः । जयेति दुर्जयो देवैः सारथिः सौवलोऽभवत् ॥७२॥

पादरक्षो महाबलः सुमायो मन्त्रिसत्तमः । रुक्मी दैत्याधिपो नेता दण्डाध्यक्षो महाबलः ॥७३॥

येन विष्णुः सुरेन्द्रश्च बहुधा सङ्गरे जितः । न जितः स सुरैः सैन्द्रै र्ब्रह्म-विष्णुपुरोगमैः ॥७४॥

---

१. यज्ञेषु स्वयं क ।
२. तव क ।
३. ममे भद्र क ग ।
४. तु अथोत्तमं क ग ।
५. स वक्रेण विवस्यमिहप्सरः क ।
६. दिव्य कासंमूत्रदा क ।
७. संज्ञाता वजाकरं भवेत् क ।
८. श्लोकाः न सन्ति क पुस्तके ।
९. मोहयित्त्वां विधयानवस्त्रेणातु संगरे क ।
१०. फलप्रदा क ।
११. अनस्य क ।
१२. अबलः क ग ।
१३. अप्रधार्ष्यम् महाबलम् क ग ।

अथ तदनु राजेन्द्रे पितृवैरानलोद्भवे ।
जज्वाल वह्निवद् देवान् होतृवज्ज्वलितानन:[१] ॥७५॥

यं यं पश्यति दैत्येन्द्रश्चन्द्रेन्द्रं पावकं वसुम् । तं तमभिद्रवत् क्रुद्धः पशुं रुद्र इवाज्ञया ॥७६॥
एवं ते दानवैर्देवा बहुधामर्षकाङ्क्षिभिः । दृष्ट्वा च पीडिता सर्व्वे इन्द्रस्य शरणं गताः ॥७७॥
यावत् समाजं कृत्वा ते ब्रह्म विष्णु पुरन्दराः । समागतास्तदा सैन्या सौवला वलगर्व्विताः॥७८॥
दन्डोद्यतकराः केचिद्दैत्या[२] निस्त्रिंश धारिणः । शरचापकराश्चान्ये चक्र शङ्कु धारिणः ॥७९॥
शतघ्नी शतचक्रो च सहस्रघ्नी धरा परे । वृक्षाद्रिपट्टिशवेत्रशूलिन क्रकचीपरा ॥८०॥
धारयन्तो महाबाहू गज-सिंहोष्ट्रगामिनः । दनुजास्ते सुरान् सर्व्वान् अयोध्यन्त तदाहवे ॥८१॥
अथ भग्नांस्तदा दृष्ट्वा देवान् दैवपतिम्महान् । उदयाद्रिसमं रुद्रं गजराज-बुभूषितम् ॥८२॥
सिन्दूरारूण रागाढ्यं घण्टा चामर मन्डितम् । चतुर्दन्तं सुरूपाढ्यं महावेगं महाबलम् ॥८३॥
गजो दनुज सैन्यस्य काल सर्प इवाभवत् । अथ तत्र स्थितञ्चेन्द्रं दृष्ट्वा ज्वालो महाबलः ॥८४॥
छागराजं समारूह्य दीप्ता शक्तिं व्यधारयत् । तं दृष्ट्वा महिषं धर्म्मो दन्डपाणिर्महावल ॥८५॥
आरूढ़श्चित्रगुप्तश्च कालकेतुसमन्वितः । कृतान्तो निष्ठुरमिव वज्रदन्डो महाबलः ॥८६॥
एवन्तु निऋति निर्मेषे पुरूषे च तदानुजः[२] । खड्ग पाणिः सुरक्ताक्षः क्रुद्धकृष्णाञ्जनप्रभः ॥८७॥
[३]बहुसैन्यात् समादाय इन्द्रसैन्यं समागतः । वरूणो वारूणैर्योधैर्झषगः पाशधारकः ॥८८॥
कृष्णसारं समादाय अङ्कुशेन समीरणः । विमाने कामगे यक्षो गदाधारी महाबलः ॥८९॥
[३]कुबेरो यक्ष कोटिभिर्वृतस्तत्र समागतः । रूद्राश्चेशानपूर्व्वाश्च वृषगाः शूलपाणिनः ॥९०॥

आदित्या रथगाः सर्व्वे विश्वेदेवाः सुवाहनाः ।
आश्विनौ चाश्वगौ[८] भद्र नागा यक्षा ग्रहेश्वराः ॥९१॥

नक्षत्रा बहुरूपाश्च सिद्ध विद्याधरादयः । ब्रह्मा विष्णुस्तदा तस्थौ सैन्यगोप्तौ सुरोत्तमौ ॥९२॥

---

१. हौत क । २. होजीवज्वलनानलो क ग । ३. केचिकृनि् क ।
४. बहुशंकु कुठारिणः क ग । ५. दृट्वा ज्वालां महोज्वलाम् क ग ।
६. नैकृति क ग । ७. पुरूषेषु तदात्मजः क । ८. पंक्ती नं सन्ति ।
९. वाश्चगौ क ।

महार्णव इव तस्थुर्मर्य्यादां न मुमोच सः । सेना भू स्वर्ग पाताल आपूरित-दिगानना ॥९३॥
कोट्यार्व्वुदायुत संख्या पद्म पद्म प्रमाणिता । असंख्याता महाबाहो सेना तत्र सुरोत्तमम्[1] ॥९४॥
दृष्ट्वा तु सुबलो वामै शरैरवर्षत मेघवत् । समन्ताच्छादयित्वा[2] तु प्रावृण्मेघ इवाम्बुभिः ॥९५॥
ननाद धनुरावेण वाद्ययानस्वनेन च । अथ नादं तदा श्रुत्वा चासुरं भयकारकम् ॥९६॥
शक्ति दीप्तां समुद्गम्य दानवान् मर्दयन् शिखी । रुक्मी नाम महादैत्यो नेताऽसौ सौबले बले ॥९७॥
ज्वलनस्य रथश्चोद्य दीप्तशूलो महाबलः । नानायुध महासंघ ज्वलितार्क मितानलः ॥९८॥
शूलं हुताशने प्रेष्य सुर सैन्य भयप्रदान्[3] । तैः शूलैः पावकी सेनां बहुधा भय त्रासिताम् ॥९९॥
दृष्ट्वा शक्ति सुदीप्तान्तु सञ्चिक्षेपाऽसुरोत्तमः । तां सुतेजां महावेगां[4] सुर्य्यायुतसमप्रभाम् ॥१००॥
विविध्य निशितैर्बाणैः ददाह च तृणाग्निवत्[5] । शरैः सातोद्य-नापि न न्यवर्त्तयत यदासुरैः ॥१०१॥
तदा शिला-विनाशाय शक्ति चिक्षेप[6] दानवः । अथ शिला[7]हतां शक्ति दृष्ट्वा देवोऽसुरोत्तमः ॥१०२॥
शिलां मुद्गरघातेन हत्वा दैत्यं न्यपातयत्[8] । शक्ति कोट्याहतं दैत्यं विगतासुं[9] रथोपरि ॥१०३॥

रुक्मीं दृष्ट्वा हतं शंखो मन्युना अभ्यधावत ।

शङ्ख उवाच ।

हुताशन महाबाहो यागादै भव चाहुतिः ॥१०५॥
अन्यथा रुक्मि मोहेन[10] संग्रामे तव का स्थितिः ।
या शक्तिः शूलिना दत्ता दहतः सौबलं वलम् ॥१०६॥
सा ते हृदये सुवलाद् गृह्य पास्यति प्राण आसवम्[11] ।
पण्य स्त्रीव यथा लोभात् कामुकानां वरायते[12] ॥१०७॥
एवं ते शोणिते शक्तिहृदि संस्कार मिष्यते[13] ।

---

१. समंताच्छादइलातु क ।
२. नर्दयत् बिभी क ।
३. प्रदां ख ।
४. महावलां क ग ।
५. चतुण गूपत् क ।
६. शक्ते:संक्षिप्य क ।
७. आथशैल क ।
८. निपात्यन: क ।
९. स्वं क ।
१०. लोभनोक ।
११. मातेि आद्यवला ह्य ह्यनं तव प्राणा सं वंप्रति क ।
१२. च वासते क ।
१३. शक्तिः हृदि संस्कार मिष्यति क ग ।

अथ जल्पं तदा काले शङ्ख-वाक्यानिलेरितः ॥१०८॥
दुन्दुभिः दानवेन्द्राणां सैन्यमध्यात् समुत्थितः ।
किं वाक्यैः शिशुभिस्तुल्यैः प्रमदा इव भाषते[1] ॥१०९॥
वैर[2] निर्य्यातना शङ्ख वरं[3] रुक्मि भवान्[4] भवेत् ।
भवे हतेऽथ गोविन्दे शक्रे वा सगुहे हते[5] ॥११०॥
अन्यथा विफलं जन्म उन्मत्त-शिशु-चेष्टितम् ।
आमंत्र्य दुन्दुभिः शङ्खं गजञ्च[6] समरुह्य सः ॥१११॥
इन्द्रायाभिमुखोऽधावत[7] ज्वलितं गृह्य चायुधम् ।
शूलं शूलि समाकारं[8] सर्व्वायुध निवारणम् ॥११२॥
मुमोच स तु इन्द्राय इन्द्रोऽपि ज्वलिताशनिम्[9] ।
शूलाय धारणं क्षेप्य सर्व्वायुध[10] भयङ्करम् ॥११३॥
तं वज्र ज्वलितमिन्द्रं शूलं भिन्नं द्विधाकृतम् ।
भूमौ पपात विफलं भ्रमराणां चेष्टितं कृतम्[11] ॥११४॥
वज्रे हते तथा चैव बृहस्पतिं महामतिम् ।
गोपेन्द्रं शरणं जग्मुर्गृहीत्वा सुरराट् तदा ॥११५॥
वलो हतस्त्वया च स्यात् सुबलस्ते चतुर्गुणः ।
स शङ्खो दुन्दुभिर्नाथ केनोपायेन शाम्यताम् ॥११६॥
पश्य[12] वज्रं न वज्राय दण्डं दण्डाय न प्रभो ।
विह्वलं देव सैन्यंतु सायुधं गजवाहनम् ॥११७॥
तस्योपायं कथं संख्ये बधायाथ शमाय च । कथयस्व सुरश्रेष्ठ शरणागत वत्सलः ॥११८॥
देवाः सवासवाः सर्व्वे रक्षणीया महाहवे । सुबलं बलसम्पन्नं नयोपाय समन्वितम् ॥११९॥

---

१. भाषते क ।
२. विरि क ।
३. वलं क ।
४. भवान्तरं क ग ।
५. शक्रेवास गुहे हते क ।
६. स्वरथं क ।
७. मुखोधर क ग ।
८. शूलि समाकरं क ।
९. अशनिः क ग ।
१०. सर्वासुर क ग ।
११. विकलं श्रमल्ली वेश्मिवद्धनं क ।
१२. तस्य क ।

दुःसहं सुरसंघस्य वासवस्य विशेषतः। एवमुक्त्वा तथा मन्त्री विरराम पितामहः ॥१२०॥
उवाच सौष्ठवां वाणी माधवो रिपुनाशनः।

विष्णु उवाच।

या सा आद्या[1] परा शक्तिः शङ्करी मन्त्रसम्भवा ॥१२१॥
पदवर्ण विभागेन सा ते क्षेमाय वासव। भविष्यति न सन्देहो महातत्वा महास्वरा[2] ॥१२२॥
शकरं तोषयित्वा तु सा मया पदमालिनी। विद्याष्टक समायुक्ता क्षेमा क्षेमाय मानघा[3] ॥१२३॥
दानवो वल संयुक्तो विद्या मन्त्र बलेन च। यदि याति वशं कर्त्तुमन्यथा अजयो भवेत्[4] ॥१२४॥
तदा विष्णुः सुरेन्द्रश्च बृहस्पति मरुद्गणैः। गत्वा शम्भुं समाराध्य असुराणां वधैषिणः ॥१२५॥
जय त्वं जयतां श्रेष्ठ पंच मन्त्र तनू मय[5]। गुणहीन गुणत्वाच्च जगतः पालने स्थितः ॥१२६॥
उत्पत्ति स्थापने नाशे रजः सत्वं तमो मयः। अरुपं बहुरूपं रत्वं वचसामप्यगोचरः ॥१२७॥
सर्व्वगः सर्व्वरूपेषु सर्व्वभावव्यवस्थितः। त्राहि मां दानवानीक-महार्णव गतं हरिम् ॥१२८॥
ससुरं गणमादित्यं वसुं चास्मिन् विलोकयन्[6]। शान्तिं विधाय जगतः क्षेमं कुरु त्रिशूलिनः ॥१२९॥
एवं गद्गदया वाचा विज्ञाप्य मधुसूदनः। तुतोष च तदा चासौ सोमः सोमार्द्ध-शेखरः ॥१३०॥
वरं वरय गोविन्द[7] यत् ते हृदि व्यवस्थितम्।
यथा च माधवो हृष्टः सुवलं दुन्दुभिं वध ॥१३१॥
[8]एवन्तु याचिते रुद्रे प्रतिज्ञाते वरे हरे। चिन्तिता परमा शक्ति विद्याष्टक समन्विता ॥१३२॥
तदा गता शिवा चाग्रे मूर्त्तिर्भूता ब्रवीति सा। यत् कार्य्यं देवदेवेश तदादिशय मे प्रभो ॥१३३॥
तदा देवेन तुष्टेन उक्ता सा सुवलं वध।
तावत् सञ्चिन्तितं देव्या पूर्व्वं शाप[9] हतो मया ॥१३४॥
विरुपेण[10] च हन्तव्यो नायुधेनासुराधमः। एवं सा यौवनं रूप त्यक्त्वा वृद्धाभवत् तदा[11] ॥१३५॥

---

१. या आद्या क।
२. महातला क।
३. यचालय क ग।
४. सौजयो भवेत् क
५. तनुम्प्रय क।
६. वसु चाग्निना थलोकयत् क ग। ७. गोपेन्द्र क ग।
८. पंक्तिर्नास्ति क पुस्तके।
९. मोह ख ग।
१०. विद्यारूपेण क ग।
११. यसा क।

शिरा जालेन सन्नद्धा[1]निर्म्मांसा कोटरेक्षणा । प्रविवेशैव देव्योष्ठ विकाशे नागबन्धना[2] ॥१३६॥
अर्द्धालंकृत[3] कर्णौ च[4]वामोरूकर संस्थिता । पीठसंस्थेन याम्येन विषादे परमे स्थिता ॥१३७॥
विवृतास्या[5]सङ्कम्पन्ती शतायुत च समा यमा । विद्याभिरष्टभिर्माया गुप्ता गुप्ताभिः संस्थिता ।१३८।
पथि[6]पर्व्वत राजस्य द्रोणस्य सुमहात्मना । क्रौञ्चद्वीपे महाद्वीपे मध्ये सा मध्य संस्थिता ॥१३९॥
विद्याष्टकं ततस्तस्या दिशेश्च विदिशैः स्थितम्[7] । वृषसिंह गजर्बहि हंस सर्पविषा परा ॥१४०॥
सवले ऋक्षराजे[8] च सन्निविष्टा महाबला । कृष्णसारे गतिसारे वसुराजे स्थिता परा ॥१४१॥
ता[9] विद्याः शतधा भूत्वा कुल वामसदक्षिणाः । परित्राणाय देवानां मर्त्यलोके नृपादिषु ॥१४२॥
अन्तः स्त्रिषु विशेषेण पुलिन्दशवरादिषु । लोकान्तरेण मार्गेण वामाचारेण सिद्धिदा ॥१४३॥
वेश्यासु गोपवालासु उद्रकूपपरेषु[10] च । पीठे हिमवतश्चंपा जालन्धरेसर्वदिशे ॥१४४॥
महोदये वरेन्द्रे च राढायां कोशले पुरे । भोट[11]देशे सकामाख्ये किष्किन्ध्ये च नगोत्तमे ॥१४५॥
मलये कोलनामे च काञ्च्याञ्च हस्तिनापुरे । उज्जयिन्याञ्च ता विद्या विशेषेण व्यवस्थिताः ।१४६।

प्रति[12] स्थाने स्थिताः शुक्र शिवाद्या ऊर्ध्वकेशिकाः ।
दृष्टाः क्रीडन्ति ता वालै र्वालतन्त्रेतु जम्भकोः ॥१४७॥
अष्टधा ग्रहराजस्य सखायत्वे व्यवस्थिता ।
[1]एवं ता व्यापयित्वा तु विद्या लोकानशेषतः[13] ॥१४८॥

सुवलस्य वधार्थाय स्थितो आवृत्य ताः पथः । सुवलोऽपि तदा चक्रे शरभञ्चाग्र तोरणम्[14] ।१४९।
द्रोणाद्रिं वासवं हन्तुं त्वरया वलवाहनम् । महारथौघ-नादेन वाद्यरावेण चाम्वरम् ॥१५०॥

ध्वजैश्चिह्नातपत्रैश्च नादितं छादितं तथा ।
अथ तस्मिन् नगे दृष्ट्वा[15]एतां परिणतां वलाम् ॥१५१॥

---

१. सजाला इत्वा क । २. नागबन्धन ख । ३. मुद्रा क ग । ४. वा क । ५. विवितास्या क ग । ६. पथे क । ७. स्थितौ क । ८. गरले त्राक्ष क । ९. ते क । १०. ओट्टरणथसेसु क । ११. चोत्त क ग । १२. पंक्तिर्नास्ति क पुस्तके । १३. शेषस: क । १४. शरभं अग्रतो बलात् क ग । १५. पथे स्थिता क ।

आवृत्य संस्थितां मार्गं दिङ्मुखानीव भास्करम् । तदा दानव नेता यो वदते त्यजतां पथम्[1] ॥१५२॥

अन्यथा रथनागैस्त्वं वृद्धे क्षेमं न स्यास्यसि ।

अथ वृद्धा वचः श्रुत्वा दानवेन प्रभाषितम्[2] ॥१५३॥

वदते अन्यथा कृत्वा दानवेन तु कामितम्[3] । आपूरय प्रयत्नेन अन्यथा न शुभं तव ॥१५४॥

अक्षेमं भवते तेषां यो मां वृद्धां न मन्यते । तदा दानव नेता यो गृहीत्वा तां करे किल ॥१५५॥

उत्थापयेद् गतासुः स पपात धरणी तले । नेतारं निहतं[4] दृष्ट्वा शङ्खो नामासुरोत्तमः ॥१५६॥

अभ्यधावत् तदा[5] देव्या धरण्यां स निपातितः[6] । तदा तु सुबलो[7] क्रुद्धो गत्वा देवीं करे किल ।१५७।

गृह्णाति[8] तावत् पतित स क्षितौ विगतासवः ।

एवं तान् दानवान् सर्व्वान् विनाहव[9] निपातितान् ॥१५८॥

पश्यन्ति महतो दृष्टास्त्यक्तशङ्काः पितामहा ।

भूतयोनिस्थिताः देव्या शूलासि शर शक्ति भृत् ॥१५९॥

घण्टा डमरु वेणूनि रवकाणि च वादयत् । शरभ शङ्खौ हतौ दृष्ट्वा दुन्दुभि र्बलदर्पितः ॥१६०॥

माधवस्य वधार्थाय विरथेन वजेत् किल । यावद् देवी महालक्ष्मी[10] महाविद्या सुरारिहा ॥१६१॥

निहत्य दारुणमाजौ दुन्दुभि संनिपात्य सा । कपाले रुधिरं कृत्वा श्येनकाद्यान् महाग्रहान् ॥१६२॥

शिवाद्यां तर्पयेद्[11] देवीमिप्सितार्थ फलप्रदाम् ।

एवं तान् दानवान् हत्वा महाबलपराक्रमान् ॥१६३॥

अवध्यान् सर्व्वदेवानां वासवे क्षेमदा भवत् । क्षेमं देवेषु सा देवी कृत्वा दैत्यपतेः क्षयम् ॥१६४॥

क्षेमङ्करी शिवेनोक्ता पूज्या लोके भविष्यसि । अनेनैव तु रूपेण विद्याष्टक समन्विता ॥१६५॥

---

१. रोवदत्ये त्यज्यत्थां यर्था क ।
२. प्रज्ञामासितं क ।
३. तु कामितम् क ।
४. अपीडयत् क ।
५. ततो क ग ।
६. सगितातितः क ।
७. सुबलः क ग ।
८. गृहाति क ।
९. निपातने ख ।
१०. महालज्जा ख ।
११. तर्पयां क ग

एका वा नगरान्तस्था पूजिता स्थापिता शुभा ।
प्रासादे पाठकुड्ये वां पुस्तके जल वह्निगा ॥१६६॥
निस्त्रिंशे पूजयेत् क्षेमां सर्व्वकाम फलप्रदाम् । दमनी पदमाला च श्री घोष[1]वज्र शासना ॥१६७॥
अस्त्रं प्रत्यङ्गिरा देव्याः पूजयेत् समुदाहृता ।
एताभिः स्थापनं कार्य्य शिवासन शवान्तगम् ॥१६८॥
कन्या संस्थे द्विजः सूर्ये भवते सर्व्वकामदम् । यतो देवी भवेद् वृद्धा पितरो वृद्ध रूपिणः ॥१६९॥
पितृगेह वशे तस्मात् स्थापितव्या शुभार्थिभिः ।
हेमादिमणि रत्नानि देवीञ्चोद्दिश्य स्थापने ॥१७०॥
पात्राणि च वस्त्राणि च कुर्य्यान्नाना गृहादिषु । शतेन कारयेद् देवं सहस्रं सन्निवेशने ॥१७१॥
आत्मानं दार सर्व्वस्वं दद्यात् तत् स्थापके शुभे[2] ।
यतः संसारादुद्धरणे नान्यः शक्तो गुरुं विना ॥१७२॥
अतो देवी च द्रष्टव्या गुरुर्मन्त्रप्रदायकः । स्थापको भैरवादीनां यो भवेद् द्विजसत्तमः ॥१७३॥
स गुरुर्म्मन्त्र सिद्धान्तदाता[3] सर्व्वं जगद्धितः । ग्रह नागे च श्लोकानां देवानां स्थापने हितः ॥१७४॥
विशेष वलि पूजादि वेत्ता देवी निवेशकः[4] । धातूत्तमेन वर्णेन[5]मत्स्यमांस सुरादिभिः ॥१७५॥
देवीभ्यः स्थापनं शस्तं भयदं भवतेऽन्यथा । विहिता[6]देवता विप्र तर्पणीया तु राजसी[7] ॥१७६॥
तामसी तमसा पूज्या सुहृष्टा न तु सात्विकी[8] ।
मन्त्राः पदमालयाख्यानां क्षेमायाः स्थापने परे ॥१७७॥
पूजने वा क्वचिच्छस्ता[9]नैष्ठिका न कदाचन । कुल मार्गं तथा वाम मातृ दक्षिण वेदिका[3] ॥१७८॥
देवी पूजाविधें शस्ता[10] न मन्दा न च नैष्ठिकाः ।
न सिद्धान्तैक भावस्था न च देवैक[11] भाविता ॥१७९॥

---

१. श्रीघोगा क । २. आत्मानंदारसर्वस्वं सर्वदा उपस्थापके क।
३. सिद्धान्तेत्तास क । ४. निदेशकः क ग । ५. वर्णेणा क ।
६. विद्येता क । ७. पुर्प्पनाया तु राजसा क ।
८. सालिका क ग । ९. क्वचिस्थाने क ग । १०. गुरु क ग ।
११. वेदकाः क

स्त्री प्रधाना यतो देवी विद्या यत्नैवतो यजेत् ।

एवं यः पूजयेद्देवीं[1] स्थापेयद् वा द्विजोत्तमः ॥१८०॥

स्थापयन्तु तथा तेन पूजापयति मानवः[2] । स लभते हितान् कामानिह लोके द्विजोत्तमः ॥१८१॥

लिखित्वा धारयेद्भक्त्या वाहौ कण्ठे करे वरे ।

राज्यायुः सुत सौभाग्यं प्राप्नुयाद[3]विचारणात् ॥१८२॥

परत्र भैरवं स्थानं ब्रह्म विष्णु नमस्कृतम् । लभते नात्र सन्देहो सत्येदं देवी पूजनात् ॥१८३॥

स्मरणात् पठनाद्विप्र धारणाद् वा सुभावितः । विद्यानान्तु प्रभावेण लभते मनसेप्सितम् ॥१८४॥

चतुः षष्टिषु विद्यासु यथा वीर्य्यं महाफलम् ।

विजयादिषु विख्यातं सर्व्वाभ्युदयदायकम्[4] ॥१८५॥

इति श्री देवीपुराणे विद्या-मन्त्र-भाव-क्षेमकरी प्रादुर्भावो नाम एकोनचत्वारिंशोऽध्यायः[5] ।

---

१. देवः क ।

२. वा नरः क ।

३. आप्तयाद क ।

४. द्वायकम् क ।

५. इत्यादे देवीपुराणे विद्यामंत्रप्रभाव क्षेमंकरी प्रादुर्भावः ।



# चत्वारिंशोऽध्याय :।

वाच ।

महाधर्म्मासुरो ब्रह्मन् केनोपायेन ब्रह्मणा[1] । निर्जितो युद्ध शौण्डस्तु सर्व्वदेव भयङ्करः ॥१॥
एतत् कौतुहलं देव श्रोतुमिच्छामि तत्त्वतः ।

मनुरुवाच ।

कौञ्चारेः स्थानमिन्द्रस्य तपो विघ्न समुत्थितम्[2] ॥२॥
होमावसानिकं घोरमसुरं कृष्ण धर्म्मिणम् । तं दृष्ट्वा महतीं पूजां कृत्वा चामुण्डाभैरवैः ॥३॥
धातुर्महेति पूजायां महाधर्म्मा ततः स्मृतः । पूर्व्वं देवासुरे युद्धे तारकेण महात्मना ॥४॥
आराध्य भगवद्विष्णुं द्वादशाख्यै र्महाव्रतैः । क्रतु भागवतैर्नाम[3]मार्गाद्यै रुर्ज्ज पश्चिमैः ॥५॥
तोषितो वासुदेवस्तु सर्व्वदेववधैषिणा । ततस्तस्य वरो दत्तस्तेन धर्म्ममहासुरः ॥६॥
साहाय्यं संगरे तात करिष्यति ममाज्ञया । स तदा विष्णोरादेशात् वरलब्धो महासुरः[4] ॥७॥
समादिशति[4] धर्म्माख्यं स ब्रह्मेन्द्रो व्यमोहयत् । एवं तस्य समादेशान्महाधर्म्मा सुहृष्टवान् ॥८॥
स चक्राङ्गमादाय द्रुहिणस्य विनाशने । गतवान् यत्र सेन्द्रस्तु ब्रह्मा तिष्ठति सोऽसुरः ॥९॥
रुद्राराधन युक्तात्मा कृष्णाष्टम्यां फलार्थिनः । ततस्तस्य महायुद्धमभवच्छरदां शतम्[5] ॥१०॥
सन्नद्धानां तदा तस्मिन् सुरासुर जिघांसया । तावत् स्यन्दनमारुढमुग्रसेनं महासुरम् ॥११॥
दृष्ट्वा वलं तदा तेषां देवी ब्रह्मणे चिन्तिता[6] । भारं परं समास्थाय सर्व्वदेव नमस्कृता ॥१२॥
आगता क्षण मात्रेण उग्रसेन वधैषिणी । विनियुक्ता तु संपूज्य वधाय दनुसत्तमे ॥१३॥

---

१. व्रणा क ।
२. क्रौचा वेत्रारमित्राद पतयो विघ्न समुत्थितं क ।
३. शर्मै क ।
४. लब्ध दंडो महासुरा क ग ।
५. दश क ग ।
६. दृष्ट्वा महावलं तात क ग ।

मुण्डं संपीडयेद्देवी[1] उग्रसेनस्य नायकम् । ततस्तं पीडितं दृष्ट्वा उग्रसेनश्च दानवः[2] ॥१४॥
इन्द्राय प्रेषयत् शक्ति यमदण्डसमप्रभाम् । इन्द्रोऽपि वज्रनाराचैर्बहुधोग्रमताडयत् ॥१५॥
उग्रसेनस्तदा क्रुद्ध इन्द्रं खड्गेन ताडयेत् । खड्गाहतस्तदा चेन्द्रो गजोपरि निषण्णवान् ॥१६॥

देवी दृष्ट्वा तदा चन्द्रं मूर्च्छितं व्रणविह्वलम् ।
उग्रसेनस्य संक्रुद्धा आग्नेयास्त्रं प्रयुक्तवान् ॥१७॥

तेनाहतस्तदा उग्रो दह्यमानः सस्यन्दनः । वारुणं प्रेषयामास शमाय ज्वलनापहम्[3] ॥१८॥
वायव्यं प्रक्षिपद्देवी तदा वारुण शान्तये । विक्षिप्तमेघसंघातं भग्नपादपभूधरम् ॥१९॥
मृगारुढं तदा देवं पाशाङ्कुश करोद्यतम् । वेष्टयित्वा तु तं चोग्रं महाबल पराक्रमम् ॥२०॥
उग्रसेन बलं हत्वा स च पाशेन पाशितः । अस्य शरासनं छित्वा हत्वा चोग्रो निपातितः ॥२१॥

इति श्री देवीपुराणे त्रैलोक्याम्युदये उग्रसेनवधो नाम चत्वारिंशोऽध्यायः[4] ।

---

१. संपीडय कग ।
२. श्लोकद्वयं नास्ति ग पुस्तके
३. माजंज्व सुनापहं क ।
४. इत्याद्ये त्रैलोक्याम्युदये उग्रसेनवधः क ग ।



# एकचत्वारिंशोऽध्यायः।

शौनक उवाच।

उग्रसेने हते तात किं कुर्य्यात् स महासुरः। कृष्णधर्म्मा महाबाहो तन्मे ब्रूहि महामुने ॥१॥

मनुरुवाच।

हते चोग्रे तदा क्रुद्धः कृष्णधर्म्मा महासुरः। वाले महाहवं चक्रु ब्रह्मेन्द्रं परि रक्षसे[1] ॥२॥
एवं स तर्ज्जयित्वा तु देवीं चक्रेणाताडयत्। सिंहं पंचेषुभिर्भित्त्वा पुनर्देवीं व्यताडयत्।
देवी क्रुद्धा तदा वत्स कृष्णं वज्रेणऽताडयत् ॥३॥
वज्राहतं तदा कृत्वा रथोपस्थगतं तथा। तदा द्रुतं समाधावद् देव्या दण्डकरोद्यतः ४॥॥
आयान्तं तं शरैर्देवी पञ्चभिर्यमसादनम्। प्रेषयामास संक्रुद्धा तदा कृष्णस्य सारथिम् ॥५॥
हते कृष्ण रथाधारे कृष्णधर्म्मा महाबलः। पादस्थश्चक्रमादाय देव्याः स संमुखौ ययौ ॥६॥
आयान्तं तं महाबाहुं शरैः सन्नत पर्व्वभिः। विध्यहृदि शिरस्तस्य चक्रघातेनापातयत् ॥७॥
एवं तु कृष्णधर्म्माणं महाबल पराक्रमम्। सङ्गरे[2] निहतं वत्स ब्रह्मेन्द्र परिरक्षितम् ॥८॥

इति श्री देवीपुराणे देव्यवतारे कृष्णधर्म्मवधो नामैक चत्वारिंशोऽध्यायः[3] ॥

---

१. यदि ग।
२. संग्रामे क ग।
३. कृष्णधर्मं वधः क ग।



# द्विचत्वारिंशोऽध्यायः ।

वशिष्ठ उवाच ।

चन्द्रेशे चोग्रकृष्णे च हते तस्मिन् महाबले ।
देवास्तुष्टास्तदा देवीं पूजया वाग्भिः सान्त्वयन्[1] ॥१॥

त्वं देवी परि[2]रक्षा नो ब्रह्मादीनां भयार्णवे । यथा कृष्ण महाघोरः क्रीडया विनिपातितः ॥२॥
त्वं बुद्धिः शुद्धिर्मेधाश्च कान्तिर्दीप्तिर्मतिर्यशः । रक्षा च परमा देवी विष्ण्विन्द्र द्रुहिणादिषु ॥३॥
रक्षणाय नृपाणाञ्च मर्त्ये त्वं देवी पूजिता । जालन्धरे महादेवी पीठस्थान गता शिवा ॥४॥
त्वदंशगा स्त्रियो देवी भविष्यन्ति वरप्रदाः । भक्तानामभयदाः सर्व्वकाम फलप्रदा ॥५॥
युगानुरूपधर्म्मेण धर्म्मिनां कामदायिकाः[3] । स्थाने स्थाने भविष्यन्ति[4]दृष्टादृष्ट प्रसाधिकाः ॥६॥
मलये सह्यविन्ध्ये च हिमवत्यर्वुदादिषु । चित्रे गोपे नरे काले[5]नीचाख्ये[6]पर्व्वते तथा ॥७॥

लङ्कायाञ्चोड्रदेशे[7]च स्त्रीराज्ये काशिकावने[8] ।
कामरूपे तथा काञ्च्यां चम्पायाञ्चाथ वैदिशे
वरेन्द्रे चोद्रियाणे च मलाख्ये शिखरे तथा ॥८॥

सिंहले वेणुदन्डे च कर्णकुब्जे च वैदिशे ॥९॥
नवदुर्गा स्थले[9] जले चोले हैरण्ये कनकाकरे । देव्याः सर्व्वार्थ दातारः सर्व्वकाम फलप्रदाः ॥१०॥
नवदुर्गास्थले कृत्वा त्रिमुण्डास्तत्र क्रीर्त्तिता ।

---

१. चाभिः सांत्वयत् क ।
२. द्वेद्वेरिपव क ।
३. कामदात्मिका क।
४. चरिष्यति क ग ।
५. लवेकाले क ग ।
६. नायाख्ये क ।
७. लंपाकेयोष्ट्रदेशे क ।
८. चले क ग ।
९. कुश क ग ।

वैदिशे मध्यगा देवी सिंहयाने व्यवस्थिता । उर्ध्वं जयावहा देवी महाकालीति विश्रुता ॥११॥
परा जम्बुकनाथस्य[१] वह्निभागगता मुने । भद्रकालीति विख्याता महालक्ष्मी गिरौ स्मृता ॥१२॥
यत्र सा साधिता विद्या पदमाला विराजिता[२] ।
मृत्युञ्जयात् तथा चान्या नन्दिकेशो यथाप्तवान् ॥१३॥
रात्रौ जप्ता महाबाहो सा विद्या शशिनः क्षये । विनाशयेन् महामृत्युमपमृत्युं न संशयः ॥१४॥
कलां कलां यदा चन्द्रो गच्छते रवि मण्डलम् । तदा विद्यां जपेद्रात्रौ दिवाचन्द्रे विवर्द्धिते ॥१५॥
जरामृत्यु भयं घोरं ब्रह्म हत्यादि पातकम्[३] । शमते सा नासन्देहो विद्या जप्ता महामुने ॥१६॥

इति श्री देवीपुराणे स्थान प्रशंसा नाम द्विचत्वारिंशोऽध्यायः[४] ।

---

१. पराजद्युकनापस्य क ग।  २. पराजिता क ग।  ३. पातके क।

४ इत्यादे देव्यवतारे स्थान प्रशंसा–ग



# त्रिचत्वारिंशोऽध्यायः ।

शौनक उवाच ।

कथं विद्या तु सा प्राप्ता[1] नन्दिना वृषवाहनात् । कथं तां लभते तात सोमो नन्दि सकाशतः ॥१॥

एवं[2] सर्व्वं यथान्यायं कथयस्व महामुने ।

मनुरुवाच ।

महादेवी त्विदं[3] घोरं हत्वा देवेन विष्णुना ॥२॥

दत्तापराजिता चन्द्रे तेन चन्द्रे बुधे पुनः । क्रमात पुरुवेभ्यः प्राप्तां यावत् पाण्डुसुतादयः ॥३॥

तथा सा कीर्त्तिता लोके सर्व्वकाम प्रसाधिका । पदमाला महावाहो घोर युद्धे प्रकाशिता ॥४॥

पुष्पाख्या मृत्युनाशाय नन्दिने मृत्युहा मुने । दत्ता विद्या महावाहो तेन रामस्य कीर्त्तिता ॥५॥

अमयं नाशनार्थाय तेन जप्ता महात्मना[4] । येन पूर्वा जिता देवा ब्रह्माद्या बहुधा युधि ॥६॥

शशाप कालिका क्रुद्धा बिप्रेशस्य वधैषिणम् । महासुर सुरत्रास यथा त्वं विध्न[5] वाहिनीम् ॥७॥

वाधसे विध्नकोपेन तदा त्वं पर्शुना हतः । शम कोप समुद्भूते वह्नौ दाहं गमिष्यसि ॥८॥

एवं पूर्व्वं स शापेन अमयः शापितोऽसुरः । जय्याख्यं[6] पर्व्वतं गत्वा चचार दुश्चरं तपः ॥९॥

फलमूल कणाहारः पर्णाशः अथवाभ्युदः । जपहोम क्रियासक्तः केशवाराधने रतः ॥१०॥

रौहिण्य व्रत भूयिष्ठः समचित्तः समाधिगः । चचाल तपसा देवान् प्रभुताढ्यं मरुद्गणान्[7] ॥११॥

क्षात्रं व्रतं समाधाय तावत् तुष्टो[8] जनार्दनः । अजयस्तवं महावाहु देवासुर भयङ्करः ॥१२॥

भविष्यसि न सन्देहो नाशं व्यूहे व्रजिष्यसि । पञ्चत्रिंशत् क्रमाद वाहं भित्त्वा गत्वासुराधिप ॥१३॥

न योद्धव्यं मया वत्स षट् त्रिंशस्तु भवान्तकः[9] ।

एवं पूर्व्वं महाबाहो तपसा स सुरासुरान् ॥१४॥

---

१. तु सा माशप्राप्ता क ।
२. एतत् क ग ।
३. महादेवष्टदं क ।
४. महामुने क ।
५. लंघिघू क ग ।
६. जठराक्षं क ।
७. ससर्गकान् क ग ।
८. भवेद्रुष्टो क ।
९. षड्रिंशङ्गतरांतकः क ग ।

विजित्य क्रीडते तात[1] पृथिवीं वन काननान्[2] ।

द्विजान् देवान् पितॄन् जित्वा ऋषीन्[3] मुख्यानभिद्रवत् ॥१५॥

परिभ्रमद् यथाकामं त्रिदशैरपि वारितः । दन्डकं वनमासाद्य यत्र देवो गजाननः ॥१६॥

वामसित्रः सुहृष्टात्मा व्यूह तत्त्व[4] विशारदः । अस्त्रग्राम प्रणेता च निसर्गाह्लाद पूर्व्वकः ॥१७॥

तत्र गत्वा महाबाहो सुमतिं प्रत्ययाश्रमः । अगस्त्य[5] दुहितरं देवीं गजवक्त्रप्रियां सदा ॥१८॥

तदा क्रुद्धा परशु घृं नू लाघवेन बलेन च । विनिर्ययौ सुतम्बन्धो गज ववत्र सुहृन्मुने ॥१९॥

राम उवाच ।

स्थीयतां सुरश्रेष्ठ सङ्गराय शमाय च । अन्यथा अद्य ते वक्षे पर्शुः पिवति शोणितम् ॥२०॥

रामवाक्य शरैः विद्धो अमयो मन्युना तदा । मुमोच सहसा बाणान् प्रावृषीव घनो जलम्[6] ॥२१॥

तस्य बाण घनाविद्ध[7] ककुभोन्तं न लभ्यते । नीहार शत सञ्छन्ने निशान्ते शशिनाः क्षये ॥२२॥

ततस्तं बाण तमसाच्छन्नं दृष्ट्वा गजाननः । सुमतिं पृष्ठतो दत्त्वा क्रमाद व्यूहान् विनिर्म्ममे ॥२३॥

काकपक्षो उरयश्च दन्डाभोगः समन्डलः । सङ्ख्याताः प्राकृता व्यूहाः सप्त प्रोक्ताः क्रमादिषे ॥२४॥

प्रदघो दृढ़कोशाद्यः सो नाचोरः सकुक्षिकः । [8]प्रतिष्ठः सुप्रतिष्ठश्च सञ्जयो विजयस्तथा ॥२५॥

स्थूणाकर्णो विशालश्च वीजाभः स च सुमुखः । ऋष सूची कुवलयो दुर्ज्जयश्च तथा परे ॥२६॥

भोगो गोमूत्र शकटो मकरोऽथ पतङ्गकः । मङ्गलः सर्व्वतोभद्रो दुर्धरश्च सुसंयतः[9] ॥२७॥

वज्रगोधा[10] समुद्रालः काकपक्षस्तथापरः । अर्द्ध चन्द्रो महाव्यूहः कङ्कटः शृङ्ग एव च ॥२८॥

अरिष्टश्चाचलश्चापि तथा प्रतिहतो मतः । प्राकृतैरहितान् व्यूहान् षट्त्रिंशतं महामुने ॥२९॥

भूभृत सुतात्मजस्तात शपयामास आहवे । आकारैर्नामरुपैश्चाश्वनागाश्च पत्तिभिः ॥३०॥

कुर्य्यात्[11] क्रमानुरुपेण शतशोऽथ च सहस्रशः। विषमे च समे[12] भूमौ तिर्य्यञ्चः नृपजाङ्गले[13] ॥३१।

---

१. तातृष्टं क ग । २. सरलकानां क । ३. मरवीन क ।
४. तत्व क ग । ५. अगस्त्य क ।
६. जनो जले क । ७. विलं क ग । ८. क पुस्तके न सन्ति ।
९. असंयतः क । १०. क पुस्तके नास्ति ।
११. क पुस्तके नास्ति । १२. समेप चिप क ग । १३. गातमपजांगले क ।

अवायः प्रत्यवायश्च कार्यश्चैवावलम्बने[1] । तस्मिन् गजाननस्तात सपताकान् सतोरणान् ॥३२॥

तूर्य्य-शङ्खरवोपेतान् कृत्वा युद्धं समुन्महत्[2] ।

अमयोऽपि तदा क्रुद्धः क्रमाद् व्यूहान् व्ययोधसः ॥३३॥

प्रतिव्यूहैर्यथा योगं यावत् त्रिंशत् समाधिका ।

पञ्चभिस्तावतो व्यूहान् स निघ्नन् अरिमर्दनः ॥३४॥

षट्त्रिंशे च तथा व्यूहे[3] भिद्यमाने सुरारिणा । रामः शरासनं सज्यमिषुभिः सन्निवारयेत् ॥३५॥

तदामयः सुसंक्रुद्धो शरान् प्रति शरैर्हनेत् । छित्त्वा शरासनं मेध्यं पशुं विव्याध पञ्चभिः ॥३६॥

शरैरुल्का समाकारैर्दशभिः ताडयेच्छिरे । तदा शराहतं रामं दृष्ट्वा पार्व्वतिनन्दनः ॥३७॥

महामेघ निनादेन मुमोच दारुणं शरम् । विद्युत-पूर्व्व-महारावं मन्त्रोदधि समाकुलम्[4] ॥३८॥

अलिवृन्द वरारावि[5] शिखिदर्दुर सङ्कुलम् । केकिभिश्च[6] सदा वृष्टं चातकेच्छा प्रवर्त्तकम्[7] ॥३९॥

नील[8] लोहित-मध्यान्तं गरलेभ[9] सम प्रभम् ।

छादयन्तो दिशः सर्व्वाः पूरयन्तो नवाम्बुभिः ॥४०॥

पाशोद्यतकरं घोरं समयोपरि पपात सः । रथनागाश्वपादातं हन्यमानं सहस्रधा ॥४१॥

न संख्या विद्यते तात घात्यमानस्य दानवात् । तदामयः सुसंक्रुद्धो वायव्यास्त्रं व्यचिन्तयत् ॥४२॥

सारङ्ग[10] रथमारुढं स पताका ध्वजाकुलम् । नागाद्रि शिखरोत्खात[11] भग्न प्रासाद तोरणम् ॥४३॥

वारुणं नाशयामास जलास्त्रं पावनस्तदा । [12]तदा रामेण क्रुद्धेन आग्नेयं चिन्तितं शरम्[3] ॥४४॥

पिङ्गाक्ष छागमारुढं सप्तजिह्वं भयानकम् । शक्ति हस्तं महा उग्रं कालाग्नि सम तेजसम् ॥४५॥

दहन्तं दानवी सेनां भस्मीकुर्वञ्चराचरम् । तदा दानवनाथेन मुक्तं नारायणं शरम् ॥४६॥

शङ्ख चक्र गदाहस्तं खग पृष्ठ व्यवस्थितम् । तदा शङ्कां सुरा जग्मुस्तेन रामो निपातितः ॥४७॥

विमुक्तोऽप्रमोघात्मा सुराच्चनैव संकृतिः । अकृत्वा संक्षयं याति अरिसैन्यं कदाचन ॥४८॥

---

१. वत्वावले क ।
२. पेतान् कुलार्योद वत्समुत्सहे क ।
३. क पुस्तके न सन्ति ।
४. नाकुलम् क ग ।    ५. रवाविशि क ।
६. केकिकंठ क ग ।
७. छास्त्र वर्त्तकं क ।
८. लीलां क ग ।
९. नवाल क ग ।
१०. शारदं क शारंगं ग ।
११. शिखरोत्थात क ग ।  १२. क पुस्तके न सन्ति ।

दिव्या न संहतिश्चास्य रामप्राणैरसंकृतैः । तदा रामेण क्रुद्धेन ब्रह्मास्त्रं प्रतिवारणे ॥४९॥
नारायण विघातार्थं चिन्तितं चतुराननम् । मुञ्ज मेखल दण्डाक्षं स्रुवदर्भकृताजिनम् ॥५०॥
हूङ्कार राव बहुलमागत्य पुरतः स्थितम् । तदाभयं महंश्चासीद् दैत्येषु च सुरेषु च[1] ॥५१॥
अमोघे दिव्यवपुषे असंहार्य्ये महाबले । दिव्यास्त्रे ब्रह्म विष्णुजे कथं मोघान्निरर्थके ॥५२॥
अकृत्वा नायकानान्तु स्वं स्वं स्थानं व्रजन्ति ते । एवं ते युद्ध संरब्धे दृष्ट्वा ते ब्रह्म विष्णुजे ।५३॥
गजाननोऽपि सञ्चिन्त्य यत्तत् पाशुपतं शरम् । महारूपं महामायं युगान्ताग्नि समप्रभम् ॥५४॥
पञ्च वक्त्रं महाघोरं दशबाहुं त्रिलोचनम् । सौम्यं घोरं सुघोरस्य ऊर्द्धकेशं भयोत्कटम्[2] ॥५५॥
जटा भारेन्दु गङ्गाहि धारमाणं शिवात्मकम्[3] । वेणु वीणा शङ्ख घण्टा डमरु शव सङ्कुलम् ॥५६॥
उल्का[4] दन्डोज्वलं जालं गोनागकृत भूषणम् । ललन् मेखला नागेन्द्रं गज चर्म्मार्द्र वाससम् ॥५७॥
केकरं तर्ज्जमानन्तु शूल खट्वांग धारिणम् । ग्रसमानं समस्तेदं त्रैलोक्यं सचराचरम् ॥५८॥
पुरतो विघ्ननाथस्य लेलिहानं व्यवस्थितम् । वद तात भयं किं ते येनाहं स्मारितस्त्वया ॥५९॥
केन वाक्यस्य नाशाय त्वरया मे उदीरय । एवं तं पूजयित्वा तु अमयोपरि मोचितम् ॥६०॥

तदा स तद्दर्मानस्तु भित्त्वा दानव वाहिनीम् ।
विदार्य्य ब्रह्म विष्णवस्त्रं मध्ये गत्वा विचार्य्य[5] च ॥६१॥

दानवान्तं तदा चक्रुः कोटिधा बहुधा महत् । कृत्वान्तं दानवानान्तु अस्त्राणां भेदनं तथा ॥६२॥
अमयं घातयित्वा तु आगतस्तं सकारणम् । तेन शूल प्रहारेण विगतासुर्महाबलः ॥६३॥

प्राकृतं देहमुत्सृज्य गणलोकं समाययौ ।
ते च अस्त्राणि सम्[6]पूज्य स्वं स्वं स्थानं विसर्ज्जिरे ॥६४॥

हते तस्मिन् महामात्ये सर्व्वदेवारिकण्टके । दण्डके पूजिता देवी रुद्राणीति तदा मता[7] ॥६५॥

---

१. दैत्यस्य च सुरस्य च क ग ।
२. सैन्य घोरं अघोरास्यः मूर्द्धके शंभयोत्कण्ठं क ।
३. शिवात्मजं क ग ।
४. शिवाराव भयोत्रासगृध्र वायसवेष्टितं क ग ।
५. निवार्य्यंवा क ग ।
६. क पुस्तके न सन्ति ।
७. रुद्राणी ति ततोः गणाः क ।

नवम्यां[1] कुजवारेण कुम्भ संस्थे तु भास्करे। कृष्णपक्षे तु यामार्द्धे ऽमयो विनिपातितः ॥६६॥

गणाः सम्पूजिता देवै र्देवी च विधिना ततः।
सर्व्वबाधा विनिर्मुक्ता देवा याता नृपास्तथा।
पूजा स्नानं तथा दानं कृतमेतेषु कामिकम् ॥६७॥

इति श्री देवीपुराणे देव्यवतारे त्रैलोक्याभ्युदयेऽमयवधो नाम त्रिचत्वारिंशोऽध्यायः[2]।

---

१. क पुस्तके न सन्ति। २. इत्याद्ये त्रैलोक्याभ्युदये ऽमयवधः ग।



# चतुश्चत्वारिंशोऽध्यायः ।

मनुरुवाच ।

गजाननोऽपि स्वस्थानं गतो मालव्य भूधरम । रामोऽपि पृथिवीं जित्वा द्विजदेवेषु विन्यसेत् ॥१॥
न्यस्त राज्यस्तदा तात देवीनां कारयेत् पुरम्[1] । सागरान्ते महापुण्यं यशोदण्डमहार्णवे ॥२॥
तत्रस्थामानयेद् देवीं[2] कालिका कालनाशिनीम् । अयोध्यायां महादेवी तेन सा सन्निवेशिता[3] ॥३॥
तदंशा पूर्व्वमाख्याता या दुर्गा नव कीर्त्तिताः । महोदये महाबाहो ये चान्ये वैदिशे स्थिता[4] ॥४॥
मृत्युञ्जयं महापुण्यं यत्र सन्निहितः शिवः । भृगुणा[5] पूजिता देवी सा वै कालिका मता ॥५॥
रामेण जामदग्न्येन सर्व्वकाम समृद्धये । तथान्येऽपि ये च वात्र देवी भक्ता यजन्ति च ॥६॥
ते विद्यायुर्यशोऽर्थादि सुखं प्राप्नोत्यनुत्तमम् । कामिकं[6] कामिका देवी ददयाद् वै मलयालये ॥७॥
मन्दाक्षे दापयेद्देवी सर्व्वकामास्तु अम्बिका । तारा मन्दार शिखरे[7] कामिकं ददते फलम् ॥८॥
वैरोचनेन दनुना कन्याद्धँ चन्द्र[8] पर्व्वते । पञ्चमूर्तिगता देवी पूजिता सर्व्वकामदा ॥९॥

मेधा गौरी यथा[9] यक्षी[10] ज्वालास्या विन्ध्यवासिनी ।
पूजिता संस्तुता ब्रह्मन् सर्व्वकाम फलप्रदा ॥१०॥

किष्किन्ध्ये भैरवी देवी सर्व्वकामान् प्रयच्छति । विन्ध्ये विन्ध्यावटी नाम पूजिता तल सम्वरे ।११।
पञ्चास्था[11] पूजिता देवी अपमृत्युं व्यपोहति । एवं संस्थान रूपेण पूजिता तारितात्मभिः ॥१२॥
सर्व्व कामप्रदा तात भवेत् सर्व्व सुखावहा[12] ॥१३॥

इति श्री देवीपुराणे देव्यवतारे त्रैलोक्याभ्युदये देव्या महाभाग्यं नाम चतुश्चत्वारिंशोऽध्यायः ॥

---

१. पुनः ख ।
२. भद्रस्था क ।
३. सासत्तिवेता कग ।
४. वैदिको स्थितो क ।
५. विगुणा क ।
६. कामितं क ग ।
७. क पुस्तके न सन्ति ।गन्धार शिखरे ग ।
८. कल्पसेश्री क ग ।
९. यतथा क ।
१०. पक्षी क ।
११. पंकास् क ग ।
१२. तवेत् स सुखावहा क ग ।

# पञ्चचत्वारिंशोऽध्यायः ।

शक्र उवाच ।

स्वल्पैनैव तु द्रव्येन महापुण्यं यथा भवेत् । तदहं श्रोतुमिच्छामि ग्रहयागं सुरेश्वर ॥१॥

ब्रह्मोवाच ।

श्रृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि । अल्पक्लेशं महापुण्यं ग्रहार्कतिथि यौगिकम् ॥२॥

भृगु पूर्णाष्टमी योगं शिव योगेषु[1] चोत्तमम् । मृदु वर्गञ्च भाग्यञ्च उमाया[2] भृगुवासरे ॥३॥

दैवयोगाद् यदा षष्ठि पुष्यर्क्षं रविवासरम् । स्कन्द यागस्तदा कार्य्यः सर्व्वकाम प्रसाधकः ॥४॥

वारेण वायदा सूर्य्यः सप्तमी विजया मता । तदा तु भरते भानोर्योगः सर्व्वगुणावहः ॥५॥

शशि रिक्तान्यसंयोगे आर्द्रर्क्षे मातरासु च । नवम्यां मङ्गलायोगो भानु मूलदिनं यदा ॥६॥

अष्टम्य वथां चन्द्राहे श्रावणेन सुखावहन् । अहि बध्ने कुजाहे तु गणेशे तस्य चाहनि ॥७॥

पुनर्व्वसौ गुरुवारे द्वादश्यां श्रवणेन वा । सोमग्रस्तं[3] तदा योगं विष्णोः सर्व्वार्थ साधकम् ॥८॥

द्वितीयायां यदा सौम्ये कृत्तिकार्क्षं भवेत् क्वचित् । ग्रहयागस्तदा कार्य्यः सर्व्वशान्ति-प्रदायकः ॥९॥

स्वाती शनि चतुर्थी च उमायागे वरा स्मृता । उत्तरासु च सर्व्वासु भानु पौर्णाष्टमीषु च ॥१०॥

यान्त्यभीषेक यागेषु सर्व्वकामा वहाष्टमी[4] । गुरोरेकादशी पुष्ये[5] रोहिण्यां वा यदा शनि ॥११॥

सुत सौभाग्यकामाय यागं रुद्रविनायके । पूर्णिमासु च सर्व्वासु अष्टमी द्वादशीषु च ॥१२॥

चतुर्दश्यां तृतीयासु ग्रहर्क्षेषु शुभेषु च । सर्व्वेषां भवते यागो भक्ति पूर्व्वो महामुने ॥१३॥

योग ज्ञानं[6] यशः सिद्धि महादेवादवाप्नुयात्[7] ।

आरोग्यं सप्रतापत्वं भास्करात् प्राप्यते ध्रुवम् ॥१४॥

---

१. शिवयाषु क ।
२. तमया क ग ।
३. सोमशस्तं क ग ।
४. वसुष्टमी क ।
५. पुष्ये क ।
६. मंत्रसांधन हव्याय रुद्रयागादवाप्ते । श्री मेधाज्ञा वात्सतय अमायागान्महामुने क ।
७. महादेवाह्यग्रात् क ।

गतिमिष्टां यथाकामं प्रयच्छति त्रिविक्रमः। विघ्नो न भवते तस्य यस्तु पश्येद्विना[1]यकम् ॥१५॥

विगतराविर्भवेत् षष्ठ्यां[2]स्कन्दं दृष्ट्वा मखे क्षणात्।

मातृ यागान्महा सिद्धि सर्व्वेषामपि जायते ॥१६॥

भवते धनवान् पुंसः प्रथमाहे हुताशनात्। स्वर्गापवर्ग-संसिद्धि र्दुर्गा-यागात् प्रजायते ॥१७॥

माघाद्यै मङ्गलां सौख्यां[3]ज्यैष्ठाद्यै र्ब्रह्मजं यजेत्।

ईषाद्यैः कालिकाद्यास्तु यष्टव्या विधिना मुने ॥१८॥

इति श्रीदेवीपुराणे त्रैलोक्याभ्युदये उदयतिथ्यृक्ष योग माहात्म्य कीर्त्तनं नाम पञ्चचत्वारिंशोऽध्यायः।

---

१. पश्येरि क।

२. षष्ठ्यां दृष्ट्वा स्कन्दं मख क्षणात् क।

३. गोथाजैष्ठाक ग।



# षट्चत्वारिंशोऽध्यायः ।

ब्रह्मोवाच ।

देवी[1] गुण त्रयाविष्टं मण्डपं कोटिविस्तरम् । ब्रह्मादि स्तम्बपर्य्यन्तमुत्पन्नं सचराचरम् ॥१॥
अण्डे हिरण्यगर्भस्थं यत् तत्वं गर्भसंश्रितम् । तत्रोत्पन्नमिदं व्योम रूपाणि द्यौ[2] मही भवेत् ॥२॥
अर्धोर्द्धं[3] काञ्चन मयश्चतुरस्रोच्छ्रितो महान् । उत्पन्नः स चतुःशृङ्गो मेरुर्दैवत संश्रयः ॥३॥
पृथिवी पद्मं दिशः पत्रं[4] मेरुस्तस्य तु कर्णिका । युगाक्ष कोटि विन्यस्तं तत्र कृत्वा रथं रविः ॥४॥
देवीञ्च संवृतो देवैर्याति तस्य प्रदक्षिणम् ।
तस्मिन् मेरौ त्रयस्त्रिंशत् वसन्ते याज्ञिकाः सुराः ॥५॥
रुद्रा एकादश ज्ञेया आदित्या द्वादशैव तु । तथैव वसवो[5] ह्यष्टौ अश्विनौ द्वौ च याज्ञिकौ ॥६॥
वसून् वदन्ति तु पितॄन् रुद्रांश्चैव[6] पिता महान् । प्रपिता[7] महानादित्यानश्विनौ चात्मनस्तनुम् ॥७॥
पितॄन् भूयः प्रवक्षिष्ये ऋतुं[7] संवत्सरार्त्तवान् । अतो यज्ञभुजामेषां पृथक् नामानि मे शृणु ॥८॥
आजैकपाद हि ब्रह्मन् अष्टौ रुद्रश्च वीर्य्यवान् ।
हरश्चैवाथ सर्व्वश्त्र्यम्बकश्चापराजिताम्[8] ॥९॥
वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा । ईश्वरोपि भुवनश्चैते रुद्रा एकादश स्मृताः ॥१०॥
आदित्यानान्तु नामानि विष्णुः शक्रश्च वीर्य्यवान् । अर्यमा[8] चैव धाता च मित्रोऽथ वरुणस्तथा ।११।
विवस्वान् सविता चैव पूषा त्वष्टा तथैव च । अंशो भगश्चाति तेजा[10] आदित्या द्वादशा स्मृताः ।१२॥

---

१. पंक्ति द्वयं नास्ति क पुस्तके । २. व्योमकपाले घौ क । ३. अथो क ।
४. दिव्यजं क ग । ५. चसवो क ।
६. रुद्रांश्चापि क ग । ७. सेतु क ग ।
८. अर्य्यमा क । ९. स्तोता क ग । १०. पटाजितः क ।

ध्रुवो धवश्च[1] सोमश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रमाणश्च वसवोऽष्टौ प्रकीर्तिता ॥१३॥
ना सत्यश्चैव दस्रश्च स्मृतौ[2] द्वावश्विनौ अपि[3] ।
विश्वेदेवान् प्रवक्ष्यामि नामतस्तान् निबोध मे[4] ॥१४॥
क्रतुर्दक्षः सुरः[5] सत्यः कामः कालो धृतिः[6] कुरुः । मनुमान् रोचमानस्तु विश्वेदेवा दशस्मृता ॥१५॥
वर्त्तमाना इमे देवाः शृणु मन्वन्तरो[7] भवान् ।
यामाश्च तुषिताश्चैव तथैव वशवर्त्तिनः ॥१६॥
सत्या अद्भुत[8] रजसः साध्याश्च तदनन्तरम् । षट्सु[9] मन्वन्तरेष्वेते देवा द्वादश द्वादश ॥१७॥
याम्या गतास्तथा त्वन्ये सत्यैः[10] सतुषितैः सह ।
[11] एते यज्ञभुजो[12] देवा नित्यं यज्ञे प्रतिष्ठिताः ॥१८॥
अतीतान् वर्त्तमानांश्च[13] पुनश्चापि निबोध मे । आदित्या मरुतो रुद्राः कश्यपस्यात्मजाः स्मृताः ॥१९॥
विश्वेऽथ वसवः[14] साध्या विज्ञेया धर्म्मसूनवः[15] ।
एवं धर्म्मसुतः सोमस्तृतीयो वसुरुच्यते[16] ॥२०॥
धर्म्मोऽपि ब्रह्मणः पुत्रः पुराणे निश्चयो मतः । अथ इन्द्रान् मनुश्चैव नामभिस्तु निबोध मे ॥२१॥
स्वायम्भुवो मनुः पूर्व्वं ततः स्वारोचिषः[17] स्मृतः । औत्तमस्तामसश्चैव रैवत[18] श्चाक्षुषस्तथा ॥२२॥
इत्येते षडतिक्रान्ता सप्तमः साम्प्रतो[19] मनुः । वैवस्वत इति ज्ञेयो भविष्याः सप्त चापरे ॥२३॥

---

१. धरो ध्रुवश्च क ग ।
२. स्कृतौ क । ३. द्वावश्विनावपि क ग । ४. विश्वेदेवान् प्रवक्ष्यान्निबोधमे क ग ।
५. स्रवः क । ६. कालोष्टतिः क ।
७. शृण मचंतरे क । ८. अभूत क ।
९. पट्सु क ग । १०. सत्याः क ग ।
११. साध्यान्देवान् प्रवक्ष्यामि नामतस्तथा निबोधये चित्तिर्त्त रोहरश्चैव हंसो धर्म्मश्च वीर्य्यवान् । विभुश्चापि प्रभुश्चैव साध्या द्वादश कीर्त्तिताः क ग । १२. यज्ञ भुजो क ग ।
१३. अतीता वर्त्त क ग । १४. विश्वे सवः क ग । १५. सूत्रवः ख ।
१६. रुच्याते क ।
१७. स्वारोचिषः क । १८. श्वेत ख । १९. विश्वचेत् कग । सप्तमंसाः सांप्रतं मनुः क ।

तेषामाद्योऽर्क[1]सावर्णिः धर्म्मसावर्णिरेव[2] च । तस्माच्च भवसावर्णिः[3]ब्रह्म सावर्णि रित्यतः[4] ॥२४।

पञ्चमो दक्षसावर्णिः सावर्णाः पञ्च कीर्तिता । रौच्यो भौत्यश्च[5]द्वावन्यौ इत्येते मनवो मताः ।२५॥

इन्द्रश्च विश्वभुक ज्ञेयो विपश्चित् तदनन्तरम्[6] । विभुः प्रभुः शिखि चैव तथैव च मनोजवः ॥२६॥

ओजस्वी साम्प्रतस्त्विन्द्रो बलिर्भाव्यस्त्वनन्तरम् ।

अद्भुतस्त्रिदिवा चैव[7]दशमस्त्विन्द्र उच्यते ॥२७॥

सुशान्तिश्च सुकीर्तिश्च ऋतधामा दिवस्पतिः[8] । इति भूता भविष्याश्च इन्द्रा ज्ञेयाश्चतुर्दश ॥२८॥

काश्यपोऽत्रि वशिष्ठश्च भरद्वाजोऽथ गौतमः । विश्वामित्रो जमदग्निश्च सप्तैते ऋषयः स्मृताः ।२९।

अतः परं प्रवक्ष्यामि मरुतोऽग्नीन् पितृन् ग्रहान् । प्रवहो निवहश्चैव उद्भव संभवस्तथा ॥३०॥

प्रवाहो विवहश्चैव[9]परिवाहस्तथैव च । अन्तरीक्षे चरा ह्येते पृथङ्मार्गं विचारणाः ॥३१॥

महेन्द्रप्रविभक्ताङ्ग मरुतः सप्त कीर्त्तिताः ।

सूर्य्याग्निश्च शुचिर्नाम्ना वैद्युतः पावकः स्मृता ॥३२॥

निर्म्मथ्यः पवमानोऽग्निस्त्रयः[10]प्रोक्ता इमेऽग्नयः। अग्नीनां पुत्र पौत्राश्च चत्वारिंशत् तथैव तु ॥३३॥

मरुतामपि सर्व्वेषां विज्ञेयाः सप्त सप्तकाः । एवं संवत्सरो ह्यग्निर्ऋतवस्तस्य जज्ञिरे[11] । ॥३४॥

ऋतुपुत्रार्त्तवाः[12]पञ्च इति सर्गः[13] सनातनः । संवत्सरश्च प्रथमो द्वितीयः परिवत्सर ।

सांवत्सरस्तृतीयस्तु[14] चतुर्थस्त्वनु वत्सरः ॥३५॥

पञ्चमो वत्सरस्तेषां तदेभिः पञ्चभिर्युगम् । तेषु संवत्सरो ह्यग्निः सूर्य्यस्तु परिवत्सरः ॥३६॥

सोम इद्वत्सरस्तेषां वायुश्चैवानु वत्सरः ।

रुद्रस्तु वत्सरो ज्ञेयः पञ्चाब्दा ये युगात्मकाः ।

द्वादशं पञ्चधा भिन्नाः षष्टिभेदा गुरोर्गमात्[15] ॥३७॥

---

१. तेषामात्मोर्क क ग ।
२. ब्रह्म क ग ।
३. तस्माच सावर्णि क ग ।
४. विद्यतः क
५. ताभ्यश्च क
६. विपश्चित्यादनंतरं क ग ।
७. दिवाचैव क ग ।
८. द्विजपति ख ।
९. विभदः संभवश्चैव क ग ।
१०. परमग्नि स्त्रयः क ।
११. यज्ञिरे क ।
१२. आर्त्तावा क ।
१३. सङ्घः क ग ।
१४. इद्वत्सर क ग ।
१५. गुरोर्गमाः क ।

विष्णुः सुरेज्यः शक्रश्च अग्निस्त्वष्टा तथैव च । अहि व्रध्नः-पितृ-विश्वः-सोम-इन्द्रोग्नि-अश्विनः ३८

भगो द्वादशमस्तेषां युगानां द्वादशो मतः । प्रभवो विभवः शुक्लः[1] प्रमोदोऽथ प्रजापतिः ॥३९॥

अङ्गिरा[2]श्रीमुखो भावो युवा धाता[3]तथैव च । ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ॥४०॥

चित्रभानुः सुभानुश्च तारणः पार्थिवोऽव्ययः । सर्व्वजित् सर्व्वधारी च विरोधी विकृतः खरः[4] ।४१।

नन्दनो विजयश्चैव जयो[5]मन्मथ दुर्मुखः । हेमलम्बो विलम्बश्च विकारी शर्व्वरी प्लवः ॥४२॥

शोभकृच्छुभकृत् क्रोधी विश्वावसुः पराभवः । प्लवङ्ग कीलकः सौम्यः साधारण विरोधकृत् ॥४३॥

परिवादी प्रमाथी च आनन्दो राक्षसोऽनलः । पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्म्मतिः ॥४४॥

दुन्दुभी रुधिरोद्गारी[6]रक्ताक्षः क्रोधन क्षयः । षष्टि संवत्सरादन्ते[7]युगै द्वादशभिः स्थिता[8] ॥४५॥

गुरोर्द्वादश मासान्ते वत्सरमुदयास्तयोः[9] । नाम्ना ऋक्ष[10]विभेदेन पञ्चधा परिवर्त्तनम्[11] ॥४६॥

अनु गच्छति कालोऽयं ब्रह्मादिकलनोऽथ वा[12] । सूक्ष्म स्थूलविभेदेन कलते सचराचरम् ॥४७॥

कार्तिकं शोभनं राष्ट्रं[13]सौम्यन्तु मध्यमं मतम् । पुष्यमाघौ शुभौ वर्षौ मध्यमौ फल्गुमाधवौ[14]।४८।

वैशाखः प्रवरस्तेषां मध्यमः शुचि संज्ञितः । आषाढो ह्यधमः प्रोक्त उत्कृष्टः श्रावणो मतः[15]।४९।

भाद्रपदो मध्यफलः श्रेष्ठफलोऽश्विनो वर्षः । कृतिका रोहिणी कायमाषाढेनाभि संज्ञितम् ॥५०॥

आश्लेषां हृदयं विद्धि मघा पूषन्तु वत्सरम्[16] । एतैः शुद्धैः[17]शुभं क्रूरहस्तैश्चाशुभं भवेत् ॥५१॥

मध्यमं प्रभवं वर्षमीतयः[18]सन्ति नो भयम् । चत्वारो विभवाद्याश्च शोभना वियुता ग्रहैः ॥५२॥

अङ्गिराद्याः शुभा स्त्रीणि मध्यमावपरौ मतौ । ईश्वरो बहुधान्यश्च शुभौ पापौ प्रमाथिनौ ॥५३॥

आद्यं तु मध्यमे वर्षे युगेऽस्मिस्तु तृतीयके । श्रेष्ठमाद्यं चतुर्थस्य मध्यं प्रोक्तं द्वितीयकम् ॥५४॥

---

१. शुक्र क ग।
२. अग्रीराश्री क ।
३. अथाधीता क ग ।
४. सर्वजित् सर्व सर्वधरीव विरोधीकृतः खरः क ।
५. वयो क ग ।
६. रुचिरौ क ग ।
७. संवत्सरा ह्येते क ।
८. स्मृताः क ग ।
९. वत्सरंत्रदयो क ।
१०. नाम विद्य क ।
११. परिवर्त्तना क ग ।
१२. कमलाधर क ।
१३. शर्द्धं क ।
१४. फाल्गुनाघैरौ क ।
१५. आषाठो ह्यवमः प्रद्धो उत्तमः श्रावणो मतः क ।
१६. ऋक्षेष हृदयं विद्धैः माघपुष्पं च वत्सरं क ।
१७. शुभं क ग ।
१८. प्रवरं वत्सर्पः क ग ।

त्रीणि चान्यानि श्रेष्ठानि सर्व्वकाम फलानि च । पञ्चमे प्रवरस्यैकं सर्व्वधारीति सन्मतम्[1] ॥५५॥
एषाः कष्टफलाः सर्व्वे सर्व्वदोष भयावहाः । चत्वारः शोभना षष्ठे युगे अन्त्यमे शोभनम् ॥५६॥
आधारस्तु सप्तमे वर्षे चत्वारो भयदा स्मृताः । शोभनमन्तिमं वर्षं सर्व्वकाम फल प्रदम् ॥५७॥
अष्टमे द्वौ शुभौ चान्यौ अशुभं मध्यमं मतम् । मध्ये द्वे चान्तिमे वर्षे गुरु[2]चारवशान्नृप ॥५८॥
आद्यमन्तौ च न शुभौ नवमे द्वे परे शुभे । दशमे मध्यमं श्रेष्ठमाद्यौ अन्तौ च निन्दितौ[3] ॥५९॥
तद्वदेकादशे विद्यादाद्यमध्यन्तु शोभनम् । युगे गुरुवासाद् वत्स शुभाशुभफलं नृणाम् ॥६०॥
जन्मर्क्षं कृत कर्म्मेषु अष्टधानु[4]गतेषु च । परिवर्त्ताः सदा कष्टाः शेषाः सर्व्वे शुभावहाः ॥६१॥
कूर्म्मकाल विभागेन यथाचार गमेन तु । शुभाशुभन्तु देशानां प्रयच्छन्ति महाग्रहाः ॥६२॥
आग्नेयादि विभागेन त्रिकर्ण[5]नवधाकृतम् । कूर्म्माङ्ग भवते लोको यत्रेयं पृथिवी स्थिता ॥६४॥
केचित् कालं वदन्त्यन्ये स्वभावमागमेऽपरे[6] । ग्रहभाग गतं सर्व्वं[7] दृश्यतेऽस्मिन् शुभाशुभम् ॥६५॥
जम्बुद्वीपे तु वे[8]देशे व्यवहारो भवेन्नृणाम् । तदहं सम्प्रवक्ष्यामि संक्षेपात् मुनिपुङ्गव ॥६६॥

मिथिला मेखला काश्या अहिच्छत्रा पुरञ्जकाः ।
सूर्य्यावर्त्ता नाम पुरी कौशाम्बी याश्च शोभनाः[9] ॥६७॥

पाटलिपुत्रं भिरहुतो[10] गङ्गापरं यमुनान्तरम् । आनर्त्तपुरं पृथ्वीमध्यान्तं न दृश्यते क्रूरैः ॥६८॥
मागधा अङ्गवङ्गाश्च कलिङ्गाः पूर्व्वसागरम् । माहेन्द्री विषयं गङ्गा मिलिता यत्र सागरे ॥६९॥
समतटं वर्द्धमानश्च शिरोपेतं विनश्यति[11] । कामरुपं विदेहाश्च नेपालं रेवतो गिरिः ॥७०॥
समतटं वर्द्धमानश्च... 

काश्मीरमम्बरश्चैव[12]उत्तरपादे विनश्यति । कैकय अच्छोदवनं चित्रं कैलाशमेरुश्च ॥७१॥
कनक मुत्तर देशाः कुक्ष्योऽपहते[13]विनश्यन्ति । वाहिका मथुरा वीथी पुरुषपुरा काकोली ॥७२॥

---

१. यन्मतम् क ग । २. पुरु क ग । ३. अंत्यौव नंदितौ क ।
४. धर्म्मेषु अष्टाधान क ग । ५. अग्नि पादिते भागेन त्रिकतु क ।
६. स्वभाव मपरे बुधाः क ग । ७. ग्रहवमतं ख । ८. जंबुद्वीपे तु येद क ।
९. सूर्य्यं वर्त्ता नाम पुरा कौशांवी पंच विषयाश्च क । १०. तिरहुती क ग ।
११. विनश्यंते क ।
१२. काश्मीराँ दुंवरंचैव क ग। १३. क्षोवोहते क ।

पार्श्वे या च मही पश्चिमपादे विनश्यन्ति ।
वैदिशश्च सौवीर[1]सिन्धु बाला महाराष्ट्राणि[2] ॥७३॥
सौराष्ट्रपुराधिगता देशाः पुच्छे विनश्यन्ति ।
अवन्तिका विदर्भाश्च काँची पुरिकाः सिंहला ॥७४॥

वलं मलयवासी च लङ्कापुरी तथैव च । चक्राक्षं दक्षिणे पादे हते नश्यन्ति पीडिताः ॥७५॥
नर्म्मदाया मही मध्यं वैजयन्ती च कोङ्कणम् । पुरुषपुरनामा च सह्याख्यश्च[3]महागिरिः ॥७६॥
अरण्यं गोपुरं भीमं कुक्षौ दक्षिण संयुतम्[4] । वेशं कोशल कान्तार हर कूट महाध्वनाः[5] ॥७७॥

वेण्या तटं समस्तञ्च गताः पूर्व्वाङ्ग्घ्रिसङ्गता[6] ।
विनश्यन्ति हताः क्रूरैर्ग्रहैरुत्पात सूचिताः[7] ॥७८॥
सूर्य्यस्योदयमरुतादि संक्रातौ क्रम पीडिताः ।
तिर्य्यग् गतश्च मध्याह्ने अस्तमिते अधोमुखो रविश्चरते[8]॥७९॥

अर्द्ध निशायां शयितः क्रमते उर्द्ध्व प्रभाते तु । विनिविष्टस्तु वकारादौ शयितो गरतै तिले ॥८०।
कोलेव चोच्छ्रितो[9]राशि रविः[10]संक्रमते सदा । धनुः सिंह वृषकुंभैरुपसंस्थैः सदा वरैः क्षेमम् ।८१।
अनुपचयस्थैः क्रूरैस्तैर्द्दृष्टो लोकनाशाय । अ इ त ए कृत्तिका ओ व वि वु[11]रोहिणी ॥८२॥
वे वो क कि मृग शिराः[12]कु घ ड़ छ आर्द्रा[13]। के को ह हि पुनर्व्वसुः[14]हु हे हो ड पुष्या[15]।८३।

डि डु डे डो[16]आश्लेषा म मि मु मे मघा[17] ।
मो ट टि टु पूर्व्वाफाल्गुनी[18] टे टो प पि उत्तर फाल्गुनी ॥८४॥

---

१. वैदेश सौरीवा क ।
२. महाराज्यानि क ग ।
३. पुरुष पुरन्वी सा च काय्यीख्वश्च क ।
४. संहता क ग ।
५. हर क्रोडा महाधनाः क । ६. पूर्वा हने माहताः क ।
७. क्रूरैः अरुपेते सूचिता क ।
८. तिर्य्यगातो मध्योह्ने अस्त महेधोमुवि रविश्चरते क ।
९. चोत्थितो, क ग ।
१०. शिखि क ।
११. चाविधु, क ।
१२. रे वो का की स्या शिवा क ।
१३. कु प ठा श्चाद्री, क ।
१४. को को ही पुनर्वसु, क ।
१५. कु हे हो डा पुष्या, क
१६. डि मि डे डे, क ।
१७. सोमिस्व मे मघा, क ।
१८. मोठा होटु पूर्वाषाढ़ा, क ।

पु[1] ष ण ढ हस्ता[2] पे पो र रि चित्रा[3] । रु रे रो त स्वाती[4] ति तु ते तो विशाखा[5] ॥८५॥

ना नि नु ने अनुराधा नो य यि यु ज्येष्ठा[6] । ये यो भ भि मूला[7] भु ध फ ढ़ पूर्व्वाषाढ़ा[8] ॥८६॥

भे भो ज जि उत्तराषाढ़ा[9] जु जे जो ख[10] अभिजित् ।
खि खु खे खो[11] श्रवणा ग गि गु गे[12] धनिष्ठा ॥८७॥

गो श शि शु[13] शतभिषा शे शो द दि[14] पूर्व्व भाद्रपदा ।
दु थ झ ज[15] उत्तरभाद्रपदा दे दो च चि[16] रेवती ॥८८॥

चु चे चो ला अश्विनी लि लु ले लो भरणी । एतैर्वर्णाक्षरैः सर्व्वं त्रैलोक्यं सचराचरम्[17] ॥८९॥

आद्याक्षरस्य नामेन बुध्या कथय शुभाशुभम् । विशाखादि स्थिते सूर्य्ये उत्पात मृत्यु कारकि[18] ।९०।

सिद्धि योगाश्च जायन्ते आद्यन्ताः[19] स्वाति पश्चिमाः ।
विश षोडश संख्याताः[20] पञ्चदश च चतुर्दश ॥९१॥

विश्वे सूर्य्याश्च ग्रहाश्च सूर्य्याद्याः शनिपश्चिमाः ।
छाया सर्व्वेषु कार्य्येषु साधनाय प्रकीर्त्तिता ॥९२॥

विवाह मङ्गलादीनां संप्रतिष्ठाद्यभिषेचनम् । यात्रा पुष्याभिषेके च छाया संसाधनी शुभा ।९३।

इति श्री देवी पुराणेऽभ्युदयपादे कालव्यवस्थानाम षट्चत्वारिंशोऽध्यायः ।

---

१. ठिठोषायि उत्तरा क ।
२. पुराणे ठ हस्ता, क ।
३. ये यो वा विचित्रा, क ।
४. रु रे वो भास्वोती, क ।
५. तु ते तो विशाखा क ।
६. लोपापि पूज्येष्टा, क ।
७. भे भे मो भा भी मूला क ।
८. भ ध फ ठ पूर्वा, क ।
९. भे भो याजी उत्तरा, क ।
१०. जु जो था, क ।
११. खि लु खे खो, क ।
१२. गा गिगू गे, क
१३. शी सा सि सू क ।
१४. सो सा दा दी क ।
१५. ल थ ज उत्तर, क
१६. चा ची क ।
१७. सर्वं दृश्यादृश्यचरां क ।
१८. कारकाः क ।
१९. आव्यतां, क ग ।
२०. विशेषोऽ संखात् क ग ।



# सप्तचत्वारिंशोऽध्यायः ।

वर्गाः क च ठ त पादयाः[1] । लोहित भृगु सौम्य-[2]सौराणाम् ॥१॥

सूर्य्यस्य अकाराद्याः शशिनो वर्णा[3]यकाराद्याः ।

मेषादिषु नवभागार्थे सस्वरवर्गाः क्रमेण समभिगताः[4] ॥२॥

वर्गे च परिसमाप्ते पूर्व्ववदारभ्यते भूयः । स्वर व्यञ्जन संयोगो भूतत्व लता[5]यथा योगम् ।३।

ज्ञात्वा सर्व्वमेशेष धर्म्मादिकमारभेन्नित्यम् । त्रुट्यनुपक्षमास क्रमायन समादिषु ॥४॥

पितरः सर्व्वदेवानां ग्रहादीनां निबोधत । आर्त्तवा पितरो ज्ञेया ये जाता ऋतुसूनवः ॥५॥

प्रपितामहा ऋतवः[6]पञ्चाशत् ब्रह्मणः सुताः । सौम्या वर्हिषदश्चैव अग्निस्वार्त्ताश्च ते त्रिधा ॥६॥

आदित्यश्चैव सोमश्च लोहिताङ्गो वुधस्तथा । बृहस्पतिश्च शुक्रश्च तथा चैव शनैश्चरः ॥७॥

राहुश्च धूमकेतुश्च एते नवग्रहा स्मृताः । त्रैलोक्यस्य मे नित्यं भावा भाव विवेचकाः[7] ॥८॥

आदित्यश्चैव सोमश्च द्वावेतौ मण्डलौ ग्रहौ । राहुश्छाया ग्रहस्तेषां शेषास्तारा ग्रहाः स्मृताः ॥९॥

नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः । पच्येते चाग्निरादित्यो उदकं चन्द्रमाः स्मृतः ॥१०॥

आदित्यंः पठ्यते[8]शम्भुरुमां विद्यान् निशाकरम्[1] ।

पितामहस्तु विज्ञेय तृतीयोऽङ्गारको ग्रहः ॥११॥

काश्यपस्य सुतः सूर्य्यः सोमो धर्म्मसुतः स्मृतः । देवासुर गुरू द्वौ च भानुमन्तौ महाग्रहौ ॥१२॥

प्रजापति सुतावेतावुभौ शुक्रवृहस्पती । वुधः सोमात्मजः श्रीमान् सूर्य्य पुत्रः शनैश्चरः ॥१३॥

सैंहिकेयः स्मृतो राहूः केतुश्च ब्रह्मणः सुतः । सर्व्वेषान्तु ग्रहाणां वै अधस्ताच्चरते रविः ॥१४॥

रवेरुर्ध्वं स्थितः सोमः सोमात् नक्षत्रमण्डलम् । नक्षत्रेभ्यो वुधस्तूर्ध्वं वुधादूर्ध्वन्तु भार्गवः ॥१५॥

---

१. पालोहित क ग । २. सौम्य जीव, क ग । ३. शशिनांना, क ।

४. मिपादिपु नव मागात् सस्वरवर्गाः क्रमेग समभिगताः, क । ५. भृगु तन्य नता, क ।

६. मातरः, क ग । ७. विवेकदाः क ।

तस्मादङ्गारकः चोर्द्ध्वं तस्य चोर्ध्वं वृहस्पतिः ।
तस्माच्छनैश्चरः चोर्ध्वं तस्योर्ध्वमृषि मण्डलम् ॥१६॥

ऋषिभ्यश्च ध्रुवश्चोर्ध्व मायान्ते त्रिदिवं ध्रुवे । आदित्य निलयो राहुः कदाचित् सोममार्गगः ।१७।
सूर्य्य मण्डल संस्थस्तु नित्यं केतुः प्रसर्पति । नव योजन सहस्राणि विस्तारो भास्करस्य तु ॥१८॥
विस्तारो त्रिगुणञ्चास्य परिणाहे तु मण्डलम् । द्विगुणः सूर्य्य विस्ताराद् विस्तरः शशिनः स्मृत ।१६।
द्विगुणं मण्डलञ्चास्य यथैव सवितुस्तथा । चन्द्रतः षोडशो भागो भार्गवस्य विधीयते ॥२०॥
भार्गवात् पादहीनस्तु विज्ञेयो वै वृहस्पति । वृहस्पतेः पादहीनौ वक्र[1]सौरावुदाहृतौ ॥२१॥
विस्तार मण्डलाभ्यान्तु पादहीनास्तयोर्बुधः । बुधस्य तुल्यानि ऋक्षाणि सर्व्वहृस्वानि यानि तु ।२२॥
योजनार्द्ध प्रमाणानि[2] तेभ्यो हृस्वं न विद्यते । राहुः सूर्य्य प्रमाणस्तु कदाचित सोम संश्रितः ॥
तस्माद् ग्रह प्रमाणस्तु केतुस्त्वनियतः स्मृतः ॥२३॥

भू र्लोकं भुवः स्वर्लोकं त्रैलोक्यमिदमुच्यते । महर्ज्जनस्तपः सत्यं सप्त लोकाः प्रकीर्त्तिताः ॥२४॥

भूर्लोकः पार्थिवो लोकात् अन्तरीक्षं भुवः स्मृतः ।
भाव्यो लोको दिवि ह्येताच्छेषा[3]ऊर्ध्वं यथाक्रमम् ॥२५॥

भूतस्याधिपति ह्यग्निस्ततो भूतपतिस्तु सः । वायु र्नभसोऽधिपतिस्तेन वायुनभस्पतिः ॥२६॥
भाव्यस्य सूर्य्यो ऽधिपतिस्तेन सूर्य्यो दिवस्पतिः । गन्धर्व्वाप्सरसश्चैव गुह्यकाः सह राक्षसैः ॥२७॥
भूर्ल्लोकवासिनः सर्व्वे अन्तरीक्षचरान् शृणु । मरुतः सप्तभिः[4] स्कन्धैः रुद्रास्तथैव चाश्विनौ ॥२८॥
आदित्या वसवः सर्व्वे तथैव च गवां गणाः । चतुर्थे तु महर्लोके तिष्ठन्ते कल्पवासिनः ॥२६॥

प्रजानां पतिगिः सर्वैं सेव्यते पञ्चमो महान्[5] ।
मनुः[6]सनत्कुमाराद्या वैराजाश्च सुताशयः[7] ॥३०॥

षष्ठे तु संस्थिता ह्येते देवा देव विबोधकाः । सत्यन्तु सप्तमो लोको ह्यपुनर्भव वासिनाम् ॥३१॥
ब्रह्मलोकः समाख्यातो ह्यप्रतिघात लक्षणः । महीतलात् सहस्राणां शतादूर्ध्वं दिवाकरः ॥३२॥

---

१. वज्र क । २. क पुस्तके नास्ति । ३. छाया क ।
४. समभिः क ग । ५. आदित्यावसवः स्वर्गे तथैव च गवांगनाः क ।
६. चतुर्थेतिमहर्ल्लोके तिष्टंते कल्प वासिनः । प्रजानां पतिभिः सर्वैः सेव्यते पंचमो क ।
७. तपाश्चयः क ।

दश तानि ध्रुवे यावद् द्विगुणे द्विगुणान्तरे । दश योजन कोट्यस्तु भूमेरूर्ध्वं ध्रुवः स्मृतः ॥३३॥
त्रयोविंशति लक्षाणि[1] त्रैलोक्यात् मेघ उच्यते[2] । द्विगुणेषु सहस्रेषु योजनानां शतेषु च ॥३४॥
लोकान्तरमथैकैकं ध्रुवादूर्ध्वं[3] विधीयते । देव दानव गन्धर्व्व यक्ष राक्षस पन्नगाः ॥३५॥
भूता विद्याधराश्चैव अष्टौ ते देवयोनयः । ते ब्रह्माण्डस्य मध्यस्थाः[4] परतस्तमसावृतम्[5] ॥३६॥
ततोऽग्निर्वायुराकाशं ततो भूतादिरूच्यते । ततो महान् प्रधानश्च प्रकृतिः पुरुषस्ततः ॥३७॥
पुरूषादीश्वरो ज्ञेयो यस्य शक्त्यावृतं जगत् । शिवोमा भानुदेवानां परात्परतरा मता ॥३८॥

इति श्री देवीपुराणे त्रैलोक्याभ्युदये ग्रहगतिर्नाम सप्तचत्वारिंशोऽध्यायः ॥

---

१. नक्षत्राणि क ग । २. त्रैलोक्तसक उच्यते क ग । ३. क्रताछर्द्धं क ।
४. गध्यास्था क । ५. समावृतम् क ग ।



# अष्टचत्वारिंशोऽध्यायः ।

ब्रह्मोवाच ।

राका चानुमती चैव द्विविधा पूर्णिमा तथा[1] । सिनोऽवाली कुहुश्चैव अमावस्या द्विधैव तु ॥१॥

अमा नाम रवे रश्मिश्चन्द्रलोके प्रतिष्ठिता ।

यस्मात् सोमो वसत्यस्मात् अमावासी ततः स्मृताः ॥२॥

पूर्व्वोदिते कलाभिन्ने पौर्णमास्यां[2] निशाकरे । पूर्णिमानुमती ज्ञेया यश्चास्तमित भास्करे ॥३॥

यस्मात् तामनु मन्यन्ते देवता पितृभिः सह । तस्मादनुमती नाम पूर्णिमा च तदा[3] स्मृता ॥४॥

यदा चास्तमिते[4] सूर्य्ये पूर्णचन्द्रस्य चोद्गमः । युगपत् सोत्तरा राका तदानुमति-पूर्व्विका[5] ॥५॥

राका तामनुमन्येते देवताः पितृभिः सह । रञ्जना चैव चन्द्रस्य राकेति कवयोऽब्रुवन्[6] ॥६॥

सिनी वाली प्रमाणन्तु क्षीण शेषो निशाकरः । अमावस्यां विशेत्यर्कं सिनीवाली ततः स्मृताः ॥७॥

कुह्वति[7] कोकिलेनोक्ते यः कालस्तु[8] समाप्यते । तत्तत्काल संज्ञा त्वेषा वै अमावस्या कुहुः स्मृता ।८।

अनुमत्या सराकाया सिनी वाल्या कुहुं विना । एतासां द्वि-नवः कालः कुमात्रेति कुहुः स्मृताः ॥९।

कलाः षोडश सोमस्य शुक्ले वर्द्धयते रविः । अनू तेनामृतं कृष्ण पीयन्ते दैवतैः क्रमात् ॥१०॥

प्रथमां पिवते वह्निः द्वितीयां तपनः कलाम् । विश्वे देवास्तृतीयान्तु चतुर्थीन्तु प्रजापतिः ॥११॥

पञ्चमी वरुणश्चापि षष्ठिं पिवति वासवः । सप्तमीमृषयो दिव्या वसवोष्टौ तथाष्टमीम् ॥१२॥

नवमीं कृष्णपक्षस्य पिवतीन्द्रः कला[9] मपि । दशमीं मरुतश्चापि रुद्रा एकादशीं कलाम् ॥१३॥

---

१. स्मृता क ।
२. पूर्णमांस्यां क ग ।
३. प्रथमा क ।
४. यदास्तमते क ।
५. पूर्णिमाः क ग ।
६. करयोब्रुवत् क ।
७. कुहेति क ।
८. पल्क्कालस्तु क ।
९. पिवतीचन्द्रः कलामपि क ।

द्वादशीन्तु कलां विष्णुर्धनदश्च त्रयोदशीम् । चतुर्दशीं पशुपतिः कलां पिबन्ति नित्यशः ॥१४॥
तत पञ्चदशीञ्चैव पिबन्ति पितर कलाम् । कलावशिष्टो निष्पीतः प्रविष्टः सूर्य्यमण्डलम् ॥१५॥
अमायां विशति[1] रश्मौ अमावासी ततः स्मृता ।
पूर्वाह्ने प्रविशत्यर्कं मध्याह्ने तु वनस्पति । अपराह्ने विशत्यप्सु स्वयोनिं वारि सम्भवः[2] ॥१६॥
आपः[3] प्रविष्ट सोमस्तु शेषया कलयैकया । तृण गुल्म लता वृक्षान् निष्पादयति चौषधीः ॥१७॥
तमोषधिः स्थितं गावश्चरत्योऽपः पिबन्ति च । तदङ्गानुगतं गोभ्यः क्षीरत्वमुपगच्छति ॥१८॥
तत्[4] क्षीरसमवृतं भूत्वा मन्त्रपूतं द्विजातयः । स्वाहाकारवषटकारैः जुह्वत्या[5] हुतयः क्रमात् ॥१९॥
हुतमग्निषु देवाय पुनः सोमं विवर्द्धयेत् । एवं संक्षीयते सोमः क्षीणश्चाप्यायते पुनः ।
तस्मात् सूर्य्यः शशाङ्कस्य क्षयवृद्धि[6] विधेद्विभुः ॥२०॥

इति श्री देवीपुराणे चन्द्रक्षयवृद्धिर्नाम अष्टचत्वारिंशोऽध्यायः[7] ॥

---

१. विशते क ग ।
२. पूर्वाहे प्ररि शत्यंर्क मध्याहे तु वनस्यति क । ३. अपरान्हे क ।
४. जुहयाद्या क ।
५. अगिनश्चः ६. क पुस्तके पंक्ती नं सन्ति ।
७. इत्याद्ये देव्यवतारे चन्द्रक्षयवृद्धिः क ग ।



# एकोनपञ्चाशोऽध्यायः ।

ब्रह्मोवाच ।

यदयं[1] वदते लोको बालिशत्वान् महामते । तदहं[1] संप्रवक्ष्यामि चन्द्र सूर्य्योपराणिकम् ॥१॥

यदि सत्यमयं ग्रस्तस्तेजोराशि र्दिवाकरः । तत् कथन्नूदरस्थेन[2] राहुणा[3] भस्मसात् कृतः ॥२॥

अथवा राहुणाक्रम्य शत्रुवक्त्रं प्रवेशितः । तत् कथं दशनैस्तीक्ष्णैः शतधा च[4] विखण्डितः ॥३॥

विमुक्तश्च पुनर्दृष्टस्तथैवाखण्डमण्डलः । न चास्यापहृतं तेजो न स्थानादपसारितः ॥४॥

यदि वाप्येष निष्पीतः कथं दीप्ततरोऽभवत् । तस्मान्न तेजसां राशी राहोर्वक्त्रं गमिष्यति ॥

भक्ष्यार्थं सर्व्वं देवानां सोमः सृष्टः स्वयम्भुवा[5] ॥५॥

तत्रस्थममृतञ्चापि सम्भवं सूर्यतेजसा । पिबन्ति यस्तूभयं देवाः पितरश्च स्वधा मृतम्[6] ॥६॥

त्रयश्च त्रिशतं चैव त्रयस्त्रिंशत् तथैव च । त्रयश्च त्रिसहस्राश्च देवाः सोमं पिबन्ति च[7] ॥७॥

राहोरप्यमृतं भागं पुरा सृष्टं स्वयम्भुवा । तस्मात् तद्रा[8]हुरागत्य पातु मिच्छति पर्व्वसु ॥८॥

उद्धृत्य पार्थिवीं छायां मन्दकामं[9] तमोमयः । पातुमिच्छन् ततश्चेन्दुमाच्छादयति छायया ॥९॥

शुक्ले च चन्द्रमभ्येति कृष्णे पर्व्वणि भास्करम् ।

सूर्य[10]मण्डल संस्थस्तु चन्द्रमेव[11] जिघांसति ॥१०॥

तस्मात् पिबति तं राहुस्तनुमस्य विनाशयन् । अविहिंसन् यथा पद्मं पिबति भ्रमरो मधु ॥११॥

चन्द्रस्य अमृतं तद्वद् भेदाद्राहुरश्नुते । चन्द्रकांतो मणिर्यद्वत् तुहिनं क्षरते क्षणात् ॥१२॥

---

१. पंक्ती नं सन्ति क पुस्तके ।
२. कथंनोदरः क ग ।
३. राहुर्न क ग ।
४. गतवान् क ।
५. स्वायंभुव ख ।
६. पिवत्यं त्रुमयं देवाः पितरः क ।
७. ये क ।
८. तत्राद्राहु क ।
९. मभ्राकारां क ।
१०. चन्द्रे ख ।
११. संस्थातु क ।

क्षरन्नपि न हीयेत तेजसा नैव मुच्यते ।
यथा सूर्य्यमणिश्चापि सूर्य्यादुत्पाद्य पावकम् ॥१३॥
न भवत्यङ्ग हीनोऽपि तेजसा नैव मुच्यते ।
एवं चन्द्रश्च सूर्य्यश्च छादितावपि राहुणा ॥१४॥
स्वतेजसा न मुच्येते नाङ्गहीनौ बभूवतुः ।
पर्व्वस्वथ च चन्द्रस्य माणिक्य कलसाकृतिः ॥१५॥

सोमो दैवत[1]संयोगाच्छाया योगाच्च पार्थिवे[2] । राहोश्च वरलब्धाद्वै प्रक्षरेदमृतं शशी[3] ॥१६॥
स्वदोह काले संप्राप्ते वत्सं दृष्ट्वा यथा च गौः। स्वाङ्गादेव क्षरेत् क्षीरं तथेन्दुः क्षरतेऽमृतम् ॥१७॥
पितेव सूर्य्यो देवानां सोमो मातेव लक्ष्यते । यथा मातुः स्तनं पीत्वा जीवन्ति सर्व्वजन्तवः ॥१८॥
पीत्वामृतं तथा सोमात् तृप्यन्ते सर्व्व देवताः । संभूतं पर्व्व योगेषु तथायं क्षरते शशी ॥१९॥
तं क्षरन्तं यथाभागमुपजीवन्ति देवताः । तस्मिन् काले समभ्येति राहुरप्यवकर्षति ॥२०॥
सर्व्वमर्द्धं त्रिभागं वा पादं पादार्द्धमेव वा । आक्रम्य पार्थिवीं छायां यावंती चन्द्र मण्डलम्[4] ।२१॥
स्मृतः स भागो राहोस्तु देव भागास्तु शेषकाः[5] । तृप्ति[6]विधाय देवानां राहोः पर्व्वगतस्य च २२।
चन्द्रो न क्षयमायाति तेजसा नैव मुच्यते । तिथि भागाश्च यावन्तः पुनस्त्वर्कं प्रमाणतः ॥२३॥

पर्व्वच्छायास्थितः कालस्तावानेवं प्रकीर्त्तितः ।
अधो[7]राहुपुरः सोमः सोमादूर्ध्वं दिवाकरः ॥२४॥

पर्व्वकाले स्थिति स्त्वेवं विपरीतः पुनः पुनः । अतश्छादयते राहुरभवच्छशि भास्करौ ॥२५॥
राहुरभ्रकसंस्थानः सोममाच्छाद्य[8]तिष्ठति । उद्धृत्य पार्थिवी छायां धूममेघ इवोत्थितः ॥२६॥
चन्द्रस्य यद्दृष्टव्यं राहुणा भास्करस्य वा । नाम्ना च खंडितं तस्य केवलं श्यामली[9]कृतम् ॥२७॥

---

१. सोमौ देवत क ग ।
२. योगाध पार्थिवात क ।
३. मृतापि क ।
४. पंक्ती नैं सन्ति क पुस्तके ।
५. शेषगा क ग ।
६. दृष्टि क ग ।
७. अतो ख ।
८. सोममाध क ।
९. ध्यामनी क ।

कर्दमेन यथा वस्त्रं शुक्लमभ्युपहन्यते । एकोद्देशे तु सर्व्वं वा राहुणा चन्द्रमास्तथा ॥२८॥

प्रक्षालितं तदेवास्तु[1] पुनः शुक्लतरं भवेत् ।

राहु मुक्तं भवेत् तद्वन्निर्म्मलं चन्द्रमण्डलम् ॥२९॥

राहुणाच्छादितौ वापि दृष्ट्वा चन्द्र दिवाकरौ । विप्राः शांति परा भूत्वा पुनराप्याय यन्त्रितम्[2] ।३०।

एवं न गृह्यते सूर्य्यश्चन्द्रमास्तत्र गृह्यते । अबुधास्तं न पश्यन्ति मानुषा मांस चक्षुषा ।

जगत् सम्मोहनं चैव ग्रहणं चन्द्र सूर्ययोः ॥ ३१॥

इति श्री देवीपुराणे ग्रहणविकल्पो नामैकोनपञ्चाशोऽध्यायः[3] ॥

१. तदेवेह क ग । २. पंतितम् क ग । ३. इत्याद्ये देव्यवतारे ग्रहणविकल्पः क ग ।



# पञ्चाशोऽध्यायः ।

शौनक उवाच ।

एते क्षणा मुहूर्ताश्च लवाः काष्ठाः कलाः पुषा ।
यामाहः पक्ष मासाश्च ऋत्वयनसमा युगाः ॥१॥

षष्ठ्यब्द काल संख्याता ग्रह योग बलोद्भवाः[1] । शुभावहा यथा तात तथा नो वक्तुमर्हसि ॥२॥

मनुरुवाच ।

संवत्सर प्रमाणेन देव्याः कृत[2] पुरोहिताः । यष्टव्या विधिना तात सर्व्वकाम प्रसिद्धिदा ॥३॥
महाभय विनाशाय महारिपु वधाय च । महाभ्युदयकामाय महा सिद्धि फलाय च ॥४॥
पूजयेद् याजयेद् देवीं[3] षष्टिधा परमेश्वरीम् । ऋतुनाग कृता पीडा यक्षरक्षो ग्रहोद्भवा ॥५॥
संवत्सर महादोष जन्मर्क्षमुपमर्दकाः[4] । केतूल्का शशि राहुभ्यां[5] भौमार्कि सित भानुजाः ॥६॥
शमयेद् यजमानस्य[6] देवी होमरतस्य च । मण्डलादि विभेदेन[7] महास्नानाभिषेचनैः ॥७॥
चन्द्र सम्पूर्ण पुष्यर्क्ष फल रत्नाभि पूजनैः । मङ्गला मङ्गलं धत्ते विधिना पूजिता मुने ॥८॥
उत्पात क्षोभ निर्घात विकृतीनां[8] शमाय च । कथयामि महाप्राज्ञ श्रृणुष्वैकमनाधुना ॥९॥

मङ्गला विजया भद्रा शिवा शान्तिर्धृति क्षमा ।
ऋद्धि वृद्धिरुन्नतिः सिद्धिस्तुष्टिः पुष्टिः श्रिया उमा ॥१०॥
दीप्तिः कान्तिर्यशाः लक्ष्मीरीश्वरीति प्रकीर्त्तिताः ।
विंशति[1] श्चोत्तमा देव्यः सत्त्वभाव व्यवस्थिताः॥११॥

---

१. फलोद्भवा क ग ।
२. कृत्वा क ग ।
३. वयजे देवी क ।
४. मर्दना क ग ।
५. केतूत्था शनि रात्था क ।
६. समये अजमानस्य क ।
७. पिधाने नभ क ।
८. विकृतां क ।

प्रथमा संस्थिता वत्स सर्व्वं सिद्धि प्रदायिका । ब्राह्मी जयावती शक्तिरजिता चापराजिता[२] ॥१२॥

जयन्ती मानसी माया दितिः श्वेता विमोहिनी ।

शरण्या कौशिकी गौरी विमला रति लालसा ॥१३॥

अरुन्धती क्रिया दुर्गा राजसा इति चापराः । मध्यभागे स्थिता देव्यो युगानामशुभापहाः[३] ॥१४॥

काली रौद्री कपाली[४] च घण्टाकर्णा मयूरिका । बहुरूपा सुरूपा च त्रिनेत्रा रिपुहाम्बिका ॥१५॥

माहेश्वरी कुमारी च वैष्णवी सुरपूजिता । वैवस्वती तथा घोरा कराली विकटादितिः[५] ॥१६॥

चर्च्चिका चेति चान्तस्था देव्यस्त्रैलोक्य विश्रुताः ।

पूजितव्या मुनिश्रेष्ठ सर्व्वकाम प्रसाधिकाः ॥१७॥

त्रि दशा सुर गन्धर्व्व यक्षरक्षोरगैर्न्नताः । भावकालाश्रया कार्य्या द्रव्यरूप फलप्रदाः[६] ॥१८॥

प्रत्येकशः समस्ता वा कर्त्तव्या मुनिसत्तम । अथवा युगभेदेन पञ्च पञ्च प्रपूजिताः[७] ॥१९॥

रत्न हेम कृता देव्यो दृष्टादृष्ट प्रदायिकाः । नव सप्तक भेदेन रुद्रेश हर तुम्बरैः ॥२०॥

ब्रह्मा पितामहो विष्णुः जनार्दन प्रभुःस्थित । मातरो भेद भावेन षट् स्वराः शिवयोजिताः[८] ।२१॥

दैव[९]देव्योपकाराय मन्त्रा ह्येते प्रकीर्त्तिताः । ग्रहभेदेन ता देव्यो नवसंख्याः प्रपूजिताः ॥२२॥

खखोल्क संवृत्य गा[१०]आशव इति कीर्त्तिताः। मन्त्रा गृहे जले वत्स सर्व्वे ओङ्कार पूर्व्वकाः ॥२३॥

नमस्कारांत संयुक्ताः पूजायां होमे च स्वाहा । लोकपालाः प्रकर्त्तव्या दशधा तास्तु देवताः[११] ।२४।

नागास्तारन्त भेदेन अनन्ताद्या विजातिकाः[१२] ।

सूर्य्या द्वादश भेदस्था रुद्रा एकादश स्मृताः[१३] ॥२५॥

एवं सर्व्वगता देव्यः पञ्चभूत तनुस्थिताः । पञ्चधा ताः समाख्याता द्वादशा त्रिगुणा शिवा ॥२६॥

---

१. विशैता क ।
२. अजिता व क ।
३. शुभावह क ।
४. कराली क ।
५. दिभिः क ग ।
६. फलाश्रयाः क ग ।
७. युगभेदेन पच प्रपूजिताः क ।
८. षट् सुरास्तेवियोजिताः ख ।
९. दिव क ।
१०. ससोत्कस ब्रवृडा क ।
११. नवभेदिका रसमोदिका क ग ।
१२. विजेतिका क ।
१३. रुद्रा प्र कूलभास्कराः क ग ।

एतांस्तानैकभेदेन सर्वमंगल अंगगा । प्रभवादि प्रभेदेन कथयामि शृणुष्व तत् ।
सिंहासनस्थिता देवी जटा मुकुट मण्डिता ॥२७॥

शूलाक्षसूत्रधारा[1]च वरदाभय चापधृक । दर्पणं शरखेटञ्च खड्गमुद्गरधरा शिवा[2] ॥२८॥

सुरूपा[3]लक्षणोपेता सुस्तनी चारुभाषिता । सर्व्वाभरण भूषाङ्गी सर्व्वशोभा समन्विता[4] ॥२९॥

नेत्रत्रयकृतद्योता सूर्य्यं सोमहुताशनाः[5] । एवं विधा महादेवी गृहे सप्ताङ्गुला वरा[6] ॥३०॥

नव द्वादश माना वा द्वादशार्द्धं न[7]पूजयेत् । प्रासादे करमाना सा यावत् पञ्च दशा करा ॥३१॥

कन्यासां मध्यमां विद्धि द्विगुणा त्रिगुणा वरा । हैमा राजत ताम्रा वा महार्घमणि चर्च्चिता ॥३२॥

हेमोत्था सा सदा कार्य्या सर्व्वकाम प्रसाधिका । राजता आयुरारोग्यं ताम्रा सौभाग्यवर्द्धनी[8] ॥३३॥

चित्रसूत्र[9]चिता देवी गण गन्धर्व पूजिता । समस्त रत्नखचिता सर्व्व शोभा समुज्ज्वला ॥३४॥

भाव कार्य्यानुरुपेण प्रभवे स्थापयेत् सदा । एवं कृत्वा शुभां देवीं प्रतिष्ठां कारयेत् ततः ॥३५॥

मण्डपञ्चार्द्र शाखाभिः क्षीरि वृक्ष समुद्भवैः । दश द्वादश आरभ्य यावद्हस्तशतं[10]भवेत् ॥३६॥

अष्टोत्कृष्टं मुनिश्रेष्ठ वेदी हस्त चतुष्टयम् ।
तस्य मध्यगता कार्य्या सप्तहस्ता अथापरा[11] ॥३७॥

ईशान पूर्व्वे चाग्नेये दिग्भागे मन तुष्टिदे[12] । देवी गेहं प्रकर्त्तव्यं सर्व्व लक्षण लक्षितम् ॥३८॥

एकादश करं कार्य्यं यावद्धस्तशतंपि वा । विवृद्ध्या क्रमशो वत्स अष्टोत्कृष्टं विधीयते ॥३९॥

कराणां धनुषाणां वा शैलं पक्वेष्ट काष्ठजम् ।
सर्व्वतो भद्र विन्यास सावष्टंभ मथापि वा[13] ॥४०॥

विजयाख्यं जयं वापि सगवाक्ष विभूषितम्[14] । वेद्या शोभकव्यालाढ्यं मत्तवारण शोभितम् ।४१॥

अनेक चित्र पत्राढ्यं पद्म स्वस्तिक मण्डितम् । शङ्खोत्पल कृतापीडं हंसबर्हिण चर्च्चितम् ॥४२॥

---

१. शालाक्षी सूत्रेधरी क ।
२. खड्गचन्ड कराशि वा ग ।
३. स्वरुपा क ग ।
४. विभूषिता क ग ।
५. सोम सूर्य्यं हुताशना क ग ।
६. धरा क ग ।
७. षडम्पर्द्धं पूजयेत् क ग ।
८. शैलजापुत्राः कामेन वार्क्षजे प्रियवादिनी ग ।
९. मृदु क ग ।
१०. यावद्धस्त गतं क ग ।
११. अथापिवा क ग ।
१२. ईशान पूर्वे चाग्रें पेठिग मागे मल तुष्टि दे क ।
१३. यावत्वंष्ट क ।
१४. सगराक्षक भूषितम् क ।

एवं विधं महासौधं देव्यार्थे कारयेद् बुधः ।
तस्मिन् प्रतिष्ठयेद्देवीं वेदीं स्तम्भैः समैः कृताम्[1] ॥४३॥

पञ्चोच्छ्रयकरा कार्य्या सपादं क्षितिगं परम्[2]। पादोना[3]चेष्टकोच्छ्रायां पूर्व्वद्वारा समेऽपि वा ।४४।

निष्पादिता यदा वेदी स्तम्भ तोरण भूषिता । तदा मण्डप विन्यासे तोरणं परिकल्पयेत् ॥४५॥

सर्व्व काम समृद्धयर्थमिषो[4]मासः प्रकीर्त्तितः । चालनं स्थापनं वापि पुनः संस्कारमेव वा ॥४६॥

तस्मिन् देव्याः प्रकर्त्तव्यं महान्तं फलकांक्षिभिः ।
स्वल्प वीजान् महालाभं वप्ता काले अवाप्नुयात् ॥४७॥

अथातः संप्रवक्ष्यामि देवी तोरण लक्षणम्[5] । सर्व्वासां येन देवीनां यजनाय भविष्यति ॥४८॥

स ज्वर व्रणनिह्र्यतै र्वेदी स्तम्भैःसमैः[6]शुभैः । कर्त्तव्यं तद्वद्देवीनां[7]तोरणं विस्तरोच्छ्रयम् ॥४९॥

हस्तभूमि गतं कार्य्य द्दश्यं हस्त चतुष्टयम् ।
न्यग्रोधोदुम्बरोऽश्वत्थं प्लक्षैः पूर्व्वा दिशा क्रमात् ॥५०॥

सर्व्वेषां शिवपट्टस्थं त्रिशूलं लाञ्छनं शुभम् । दर्भचीवर वस्त्राद्यं स्रङ्माला गन्ध चर्च्चितम् ।५१॥

विजयेति पदोच्चारात् तोरणं सन्निवेशयेत् ।
हरिचन्दन समाकारान् सुरवज्रोज्ज्वलान् सितान्[8] ।।५२॥
धूम्र शुक्ल शिरीषाभान् पुष्पापीड[9] विचित्रितान् ।
बहुरूपान् स्वरुपाभान्[10]देवाङ्कानुच्छ्रयेद् ध्वजान् ॥५३॥

इन्द्रादि लोकपालानां मध्ये छत्रं सुशोभनम् । सुवृत्तं प्रवरं[11]श्वेतं वृषस्वस्तिकलाञ्छितम् ॥५४॥

चर्तुहस्त प्रमाणान्ता[12]:पताका हस्तविस्तराः । ऋज्वैरव्रणवंशैश्च उच्छ्रयेद्विजयेति च ॥५५॥

पदं देव्याः समुच्चार्य्य यत्तद्वै सर्व्वकामिकम् । गर्जासिह कृतैः सर्व्वैः कलसै र्बहिसंस्थितैः ॥५६॥

---

१. कृताः क ग ।
२. करं क ।
३. पाद्नाचेष्ट क ।
४. प्रसिद्धयर्थ क ग ।
५. लक्षणाम् क ग ।
६. शनैः क ।
७. कर्त्तव्या च दुर्गे वीणां क ।
८. स्व वक्रान ज्वलने स्थिता क ।
९. पुष्पपीत क ग ।
१०. सुपुष्पाभान् क ग ।
११. पुरं क ।
१२. प्रमाणस्था क ।

पञ्च वक्त्रैः समाच्छन्नैः पञ्चवक्त्रैः शरावकैः । सञ्छन्नैर्वारकै[1]शुभ्रै श्वित्रबर्हिण शुकादिभि ॥५७॥
वस्त्र रत्न[2]विशेषैश्च भूषयेद्देवि वेदिकाम् । तीर्थ तोयसमुत्थाभि सिकताभिश्चिता यदा ॥५८॥
तदा शाल्यादि चूर्णोत्थै मौक्तिकादि रजैर्लिखेत् । पद्मं याग विधानार्थं[3]मण्डले यादृशं मतम् ।५९।
अनेकानि च शोभानि दर्शयेद् देविमण्डले । ऐन्द्रादि कुण्डं स्रुवादि[4]पात्रमर्घ्यादि याज्ञिकम् ॥६०॥
फलानि गन्धपुष्पाणि[5]पात्राणि[6]समिधानि च । मृद्वल्कलानि रत्नानि उदकानि समाहरेत् ॥६१॥

अविवासानि[7]पूर्व्वन्तु होमं कृत्वा दिशां वलिम् ।
दत्त्वा स्नानं पुरा कृत्वा प्रतिष्ठा विधि होमिते ॥६२॥
गोत्र क्रमेण या देव्या संस्थिता नृपसत्तम ।
ताःपूज्या मूलमन्त्रेण[8]स्व नाम पद पूर्व्विकाः ॥६३॥

प्रतिष्ठा तासु[9]कर्त्तव्या प्रमाणेन कदाचन । एकाङ्गुलात् समारभ्य यावद्द्वादश-अङ्गुलाः ॥६४॥
गृहे तु शोभना अर्चा धर्म्मकामार्थ मोक्षदा । सर्व्व मङ्गल मन्त्रैश्च आद्यानां[10]स्थापनं भवेत् ॥६५॥
पदमालेति मध्यानामन्त्यानां चर्च्चिका पदैः । दानं गोभूहिरण्यादि येन वा प्रीयते शिवा ॥६६॥
आचार्याय प्रदातव्यं द्विजादेः कन्यकासु च । तत्र देयं सदा वत्स नृप बन्धु जनस्य च ॥६७॥
प्रभवं वत्सरं कार्य्यं पीत वर्णं सुशोभनम् । चन्दनेन पटे लेख्यं मधुसूदन रूपिणम् ॥६८॥
तस्य पूजा प्रकर्त्तव्या यथा विभवविस्तरैः । रुद्रादित्य वसून् देवा देव्यः[11]पितर मातरः ॥६९॥

नागा यक्षा मनुष्याश्च ग्रहाश्च त्रिविधाः क्षणाः ।
मुहूर्ताः ऋतवो[12]योज्या अयनानि फलानि च[13] ॥७०॥

एवं कृत्वा महायोगं प्रतिष्ठां पूर्व्वचोदिताम् । देव पीठगता वत्स पूजनीया दिने दिने ॥७१॥
प्रातर्मध्याह्ण सन्ध्यासु महापूजां सुमङ्गलाम्[14]। मन्त्रजापः क्रिया होमः कर्त्तव्यः सर्व्वसिद्धये ।७२॥

---

१. मल्लाल्पोधारकैः क ग ।
२. रत्न क । ३. विधार्थं क । ४. सुत्यादि क ।
५. पुष्पादि क ग । ६. पात्राणि क । ७. अधिवासन क ग ।
८. प्रतिष्ठातासुर्त्तव्या विद्या मंथैस्त्र षष्ठिभिः क । ९. पूर्वादि काल क ग ।
१०. आया क । ११. दिव्यः क । १२. रितवो क ।
१३. कलानि च क । १. प्रातर्मध्यासु महापूजा सुमंगला क ।

एकभवतेन नवतेन अयाचित[1] उपोषणैः । क्षीराहारैर्यताहारैः कन्दमूलफलाशिनैः[2] ॥७३॥
यवषष्टिक गोधूमैर्हविष्य कृत भोजनैः । कर्त्तव्यं यजनं देव्याः सर्व्वकालं जितेन्द्रियैः ॥७४॥
अनेनैव विधानेन सर्व्वपापक्षयो भवेत् । महापातकनाशाय इन्द्रेण कृतवान् पुरा ॥७५॥
द्विजं वृत्रासुरं हत्वा पितॄन हत्वा सुमालिना । सुतञ्च व्रतं मनुना गुरुं गौतम काश्यपैः[3] ॥७६॥
एवं शुद्धिगता वत्स शक्र देवाः प्रजापते । राज्यार्थं वसुना कृत्वा[4] ब्रह्मणा हरिणा यथा ॥७७॥
रुद्रेण त्रिपुरं दग्धं विष्णुना शरभो हतः । अनेनैव विधानेन वेदान् शम्भुः गृहीतवान् ॥७८॥
नष्टां कूर्म्मतनुं कृत्वा प्राप्तवान् मधुसूदनः । अधृष्टो कृतवानासीत् क्रतु दशरथेन च ॥७९॥
अन्यैश्च मुनि शार्दूल प्रजायुःराज्यकाङ्क्षिभिः । कृतवान् सुरगन्धर्व्वै र्यक्ष रक्षो सदा नृपैः ॥८०॥

ये पुनर्भक्तिमास्थाय सर्व्वकालं यजन्ति च[6] ।
तेषामायुः श्रिया ब्राह्मी स्वर्गं[7] स्थानञ्च शाश्वतम् ॥८१॥

यावद्भुश्चन्द्रमादित्यौ तावत् क्रीडन्ति ते सुखम् । स्वर्गे विष्णु पुरे रम्ये चन्द्रार्क ग्रह भूषिते ॥८२॥
आगत्य इह जायन्ते नृपा वेदार्थ पारगाः । देवी भक्ताः सदाचाराः सुखिनो विगतारयः ॥८३॥
देहान्ते[8] शिवसायुज्यं प्राप्नुवन्ति परां गतिम् । त्रैलोक्याभ्युदये पादे प्रभवे मङ्गलादिभिः[9] ॥८४॥
विभवे विजयां देवीं शूलपद्माक्षधारिणीम्[10] । वरदोद्यत सिंहस्थां सर्व्वकाम प्रसाधनीम् ॥८५॥
कृत्वा होमादिलाभेन पूजयेद्यस्तु भार्गव[11] । सर्व्वदा सर्व्वकामान् स पूर्वोक्तांल्लभते[12] मुने ॥८६॥

भद्रां शुक्ले समे[13] कुर्य्याद् भद्रासन व्यवस्थिताम् ।
नीलोत्पल कल हस्तां शूल सूत्राक्ष धारिणीम् ॥८७॥

पुष्पराग कृता शोभां पूर्वोवत विधिना नुताम् । क्षीराशी पूजयेद् यस्तु षडंगेन सुभावितः ॥८८॥
सर्व्वपीठोपहारेण सुगन्ध कुसुमादिभिः । होमं क्षीरघृतैः कुर्य्याल्लक्षैकन्तु महामुने ॥८९॥
सर्व्वकामानवाप्नोति मुच्यते ब्रह्म हत्यया । राष्ट्रस्यास्य[14] नृपाणाञ्च जायते वृद्धिरुत्तमा ॥९०॥

---

१. भक्तेन आयाचितः क ।
२. फलाशनैः क ।
३. रुतं प्रद्रत्वां ब्राह्मणासंन् क ।
४. नष्टां कूर्मतनुं वृत्त्वां प्राप्तवानां शरतर तोहतः क ।
५. पंक्ति नास्ति क पुस्तके ।
६. ह क ।
७. स्वलपे क ।
८. क पुस्तके पंक्ती न सन्ति ।
९. मंगला विधानं क ।
१०. पद्माख्या भारिणीं क ।
११. यस्क भावितः क ।
१२. पूर्वोक्ताक्षभत क ।
१३. शुक्ले शमां क ।
१४. राष्ट्रमस्य क ।

शिवा वृषासना कार्य्या त्रिनेत्रा वरशालिनी । डमरूरगधारी च सशूला वत्सरान्विता ॥६१॥
जटामुकुट चार्धेन्दु वासुकी कृतकङ्कणा । स्थापिता पूर्व्वविधिना शिवांगैः पूजिता मुने ॥६२॥
पद्म विल्व दधि सर्पिस्तिलहोमा वर प्रदा । भवते यजमानस्य देशस्य च नृपस्य च ॥६३॥
शान्तिः प्रजापतौ कार्य्या पद्मासन व्यवस्थिता । अक्षसूत्र करा देवी वरदोद्यत पाणिनी ॥६४॥
पूजिता सितगन्धादि क्षीराहाररतैर्मुनेः । आशु कामप्रदा[1] देवी भवते नृपशान्तिदा ॥६५॥
धृतिरङ्गिरसे कार्य्या दण्डासन व्यवस्थिता । पद्म दर्पण धारी च सर्व्वाभरण भूषिता ॥६६॥
स्थापिता पूर्व्वविधिना वामदेवादि पूजिता[2] । मधुक्षीरादि होमाच्च सर्व्वकाम प्रसाधिका ॥६७॥
क्षमा तु श्री मुखे कार्य्या योगपट्टोत्तरियका[3] । पद्मासन कृताधारा वरदोद्यत पाणिनी ॥६८॥
शूल मेखल संयुक्ता प्रशान्ता योग संस्थिता । सित पुष्पोपहारेण सित होमेन सिद्धिदा ॥६९॥
भाराख्ये[4] कारयेद्दीप्तिं पर्य्यङ्कासन संस्थिताम् । दर्पणालोक सुमनां तिलकालक भूषिताम् ॥१००॥
मालाचामरशोभाढ्यां वेणुवीणा सदाप्रियाम् । सर्व्वरक्तोपहारेण सर्वकाम फलप्रदा[5] ॥१०१॥
वृद्धि मुधाह्वये[6] कुर्य्यात् यद्वोपरि व्यवस्थिताम् । रत्नमालाधरां देवी वीजं पूरवर प्रदाम् ॥१०२॥
महाविभव सारेण गन्ध पुष्पपवित्रकै[7] । पूजिता संस्तुता वत्स फलहोमा वरप्रदा ॥१०३॥
धाताख्ये उन्नतिं कुर्य्यात् सर्व्वलक्षण लक्षिताम् । वीणावादन शीलाञ्च सर्व्वाभरण भूषिताम् ॥४॥
कुङ्कुमागुरु कर्पूर गन्ध पुष्प सुपूजिताम्[8] । सित चन्दन गन्धाद्यां सित पङ्कज[9] भूषिताम् ॥१०५॥
दण्डासनस्थिता[10] देवी प्रतिहार्य्योपशोभिता । घृत श्री फलहोमेन आयुरारोग्य राज्यदा[11] ॥१०६॥
बहुधान्ये सदा[12] तुष्टिः कलसोपरि संस्थिता । पाशाङ्कुशकरा[13] देवी पद्म स्वस्तिक धारिणी ।१०७।
मदिरौदन[14] गन्धाढ्वा महार्धमणि भूषिता । सर्व्व पीतोपहारेण घृतहोमेन सिद्धिदा ॥१०८॥
प्रमाथिनी[15] समे पुष्टिर्नव यौवनगर्व्विता । खड्गहस्ता महारूपा चर्म्मंमुद्गरधारिणी ॥१०९॥

१. आशु काम परा देवी क । २. काम देवांग पूजित् क । ३. यगा क ।
४. भावरुपे ग । ५. फलंप्रदं क । ६. पुवाहये क ।
७. क पुस्तके पंक्ती न सन्ति । ८. सुपूजिता क ग ।
९. सित कुंकुम होमा च आयुरारोग्य वृद्धि दा । सिद्धिश्वधी प्रकर्त्तव्या सिद्धार्थक वर प्रदा क ग ।
१०. कुंडासन क । ११. सिद्धिदा क । १२. समे क ।
१३. धरा क ग । १४. मदिरोदान क । १५. प्रमाथिने क ग ।

अश्वारूढा महादेवी काश्मीरागुरु चर्च्चिता। वनमाल्योपहारेण मधु होमेन सिद्धिदा[1] ॥११०॥

विक्रमे तु श्रिया कार्य्या पद्मासन व्यवस्थिता। पद्म श्री फलधारी च करिणः कलसान्विते[2] ।१११।

स्नाप्यमाना महादेवी सर्व्वाभरण भूषिता। कुङ्कुमा गुरु होमेन सर्व्व[3]भोगवर-प्रदा ॥११२॥

वृषे उमा प्रकर्त्तव्या पद्मोपरि व्यवस्थिता[4]। योगपट्टोत्तरा सङ्गमृग सिंह[5] परीवृता ॥११३॥

ध्यानधारणं[6] सन्तान निरुद्ध नियमे स्थिता। कमण्डलुश्च सूत्राक्ष वरदोद्यत पाणिनी ॥११४॥

ग्रहमाला विराजन्ती जयाद्यैः परिवारिता। पद्म[7] कुण्डलधारीं च शिवार्च्चन रता सदा ॥११५

गन्धमाल्योपहारेण चन्दनागुरु धूपिता। कर्पूरा गुरुहोमेन सर्व्वकाम फलप्रदा ॥११६॥

चित्र भानौ समे दीप्तिश्चन्द्रासन[8] व्यवस्थिता। किरणोज्ज्वलधारी च सिंहासनव्यवस्थिता[9]।

रक्त गन्धोपहारेण सर्व्वदा भावपूजिता ॥११७॥

रक्त चन्दन होमेन घृतमिश्रेण सिद्धिदा। सुभानौ कारयेत् कान्ति नीलोत्पल व्यवस्थिताम् ॥११८॥

सर्व्वाभरण भूषाङ्गी कपालोत्पल[10]धारिणीम्। जाती पुष्प मालाधरीं महा कर्पूरर्चाचिताम् ।११६॥

पूजितां भाव योगेन जाती होमा वर[11] प्रदाम्। यशो तारणनामे तु शङ्खपुस्तकधारिणी ॥१२०॥

पर्य्यङ्कोदर संस्था तु पीतवर्णा सुचर्च्चिता[12]। परिजातक पुष्पाद्या यज्ञ गन्धानुलेपना ॥१२१॥

नाग केशर होमेन यथेष्ट फल दायिका। पार्थिवे कारये लक्ष्मीं पद्म[13]गर्भ व्यवस्थिताम् ॥१२२॥

पद्म पूरक हस्ताञ्च महार्घमणि भूषिताम्।

श्यामाङ्गीं गन्ध पुष्पाढ्यां कस्तूर्य्यादिभिर्श्चर्च्चिताम् ॥१२३॥

पूजितामुपहारेण घृत होमे वर प्रदाम्। वयेश्वरी प्रकर्त्तव्या वृषयुग्म व्यवस्थिता ॥१२४॥

जटा मुकुट भालेन्दु त्रिशूलोरग भूषणा। मणि मौक्तिक शोभाद्या सित चन्दन चर्च्चिता ॥१२५॥

पूजिता कुसुमैर्हृद्यैः सर्व्व काम फलप्रदा।

---

१. वलिदानोपहोरण मधु होमेन सिद्धिदा क ग।

२. पद्भि श्री फल हरेत्तावकरिणः कलशान्वितैः क।

३. पूर्वा क।

४. विक्रमेतु श्रीया कार्य्या पद्भोपरि व्यवस्थिता क ग।

५. संग क ग।

६. साधारणं क।

७. यत्र क ग।

८. यंत्रास क।

६. किरणो ज्वला धारी च सिंहासन व्यवस्थिता क।

१०. कपालोत्पल क ग।

११. नातो होमां वर क।

१२. सुरार्चिता क।

१३. पय क ग।

एताश्चोत्तमभागस्थाः पूजिताः संस्तुताः शिवा ॥१२६॥

सर्व्वकाम प्रदा देव्यो नृप राष्ट्र विवर्द्धनाः । सर्व्वासां पायसं दद्यादुपहार विलेपनम् ॥१२७॥

चन्दनागुरू कर्पूर विल्व पत्राणि पूजनम् । होमं क्षीर घृतं शस्तं तिलक्षौद्र समन्वितम् ॥१२८॥

जितद्वन्द्वेन कर्त्तव्यं क्षीर पायस भोजिना । सर्व्वलोकोपकाराय आत्मनश्च शुभाय च ॥१२९॥

सर्व्वं पाप विशुद्ध्यर्थं सर्व्वाभ्युदय हेतुकम् । देवीनां पूजनं शस्तं संवत्सर भयापहम् ॥१३०॥

इत्याद्ये देवीपुराणे संवत्सर देवता प्रथम विंशति विधिः ॥

ब्राह्मी हंसासना कार्य्या मुञ्ज मेखल भूषिता । चतुर्व्वक्त्रा सकुर्व्वाणा दण्डकाष्ठक मण्डलु[1] ।१३१।

अक्षसूत्रधरा देवी स्रुवहस्ता च[2] धारिणी । योगपट्टकदण्डाङ्गी वेदोद्गीरित आनना[3] ॥१३२॥

कृत्वा प्रतिष्ठयेद्यस्तु[4] सर्व्वजिद्वर्षके शुभे[5] । पूर्व्वोक्तेन विधानेन सर्व्वमङ्गल स्थापने ॥१३३॥

यो विधिर्विहितस्तात[6] सोऽप्य[7]त्रैव प्रकीर्त्तिता ।
होम जाप्य वलि गन्ध शालि षष्टिक कृष्णशः[8] ॥१३४॥

पायसं दधि भक्तञ्च लडडुकान[9] पूपकांस्तथा । ध्वज माल्योपहारञ्च कुङ्कुमागुरु रोचनाः ॥१३५॥

मणि मौक्तिक दामानि कृत्वा[10] देवीं निवेशयेत् ।
सर्व्वकामानवाप्नोति[11] मुच्यते सर्व्वपातकैः ॥१३६॥

अश्वमेध समं पुण्यं लभते ह्यविचारणात् ।
क्षेमारोग्यं सुभिक्षञ्च तस्मिन् देशे प्रजायते ॥१३७॥

यत्रेयं क्रियते पूजा ब्राह्मीमुदिदश्य मानवाः । तुष्टं[12] युगं प्रकर्त्तव्यं सूर्य्यरूपं सतेजसम् ॥१३८॥

गो ब्राह्मण नृपाणाञ्च[13] यजमान सुखावहम् । जयावती प्रकर्त्तव्या सर्व्वधारी तु वत्सरे ॥१३९॥

शरशार्ङ्गवरा[14] देवी सर्व्वाभरण भूषिता । रक्त गन्धानुलिप्ताङ्गी सर्व्वं शत्रु निवर्हणी ॥१४०॥

---

१. चतुर्वक्त चतुर्कंड काष्ठक मंडलुं क ।
२. स्क्तवस्ताक्ष धारिणी क ।
३. वेदोरितमानना क ग ।
४. येयस्त क ।
५. जिद्वर्यभे क ।
६. विहितात क ।
. सोय्यै क ।
८. कृशरा क ग ।
९. लदुकाका क ।
१०. दानानि दत्वा क ग ।
११. वाशेति क ।
१२. त्वाष्ट्र क ग ।
१३. नृणांच क ।
१४. शर भृगधरी क ।

यस्तु[1] पूजयते भक्त्या[2] स लभतेप्सितं फलम् । शाक्री विरोधीनामे[3] च वज्रहस्ता गजे स्थिता ॥१४१॥
सुरुपाङ्कुशहस्ता[4] च हार केयूर भूषिता । गण गन्धर्व संयुक्ता सिद्ध चारण सेविता[5] ॥१४२॥
महाविभव सारेण पूजनीया नृपोत्तमैः । वस्त्रालङ्कार गन्धाद्यैः पुष्पधूप पवित्रकान्[6] ॥१४३॥
दद्याद्रक्तोपहारन्तु[7] सर्व्वं क्षत्र विवृद्धये । गजाङ्क[8] गुग्गुलं होमं क्षीर सर्पिः परिप्लुतम् ॥१४४॥
लक्षैकं हवमानस्य सर्व्वकामान् प्रयच्छति । आयुरारोग्यमैश्वर्य्यं ददाति त्रिदशेश्वरी ॥१४५॥
अजिता विकृते कार्य्या मकरासन संस्थिता । पाशाङ्कुशधरा[9] देवी सुरुपा विभवान्विता[10] ॥१४६॥
जाती काशोक पुष्पैश्च पूजनीया सुभावितैः । होम एलात्वचं कुष्ठं[11] पयोहारस्य सिद्धिदा ॥१४७॥
खरेऽ[12] पराजिता देवी सिंहारुढ़ा महाबला । पिनाकेषुकरा कार्य्या खड्ग खेटक धारिणी ॥२४८॥
त्रिनेत्रा जटा भारेन्दु वासुकी कृत भूषणा । कृत्वा सर्व्वोपहारन्तु प्रतिष्ठा विधि चोदिताम् ।१४९।
स्थापनं कारयेत् तात ततः पूजा पुरातनी[13] । महाविभव भावेन होम चन्दन कुङ्कुमम्[14] ॥१५०॥
दधि[15] भक्तं घृतंक्षीरं नैवेद्यं द्विज तर्पणम् । कन्या भोजन पूजा च सर्व्वकाम फलप्रदा ॥१५१॥
जयन्ती नन्दने कार्य्या कुन्तशूलासिधारिणी[16] । खेटक खड्गहस्ता[17] च पूजनीया सुवासितैः[18] ।१५२।
एला कुङ्कुम कर्पूर गन्धलडडु कर्पूरकैः । प्रयच्छति शुभान् कामांस्तुरगोरगहोमनैः[19] ॥१५३॥
विजये मानसी कार्य्या स्यन्दने संव्यवस्थिता । घण्टा मुद्गर धारी च वज्राङ्कुश करोद्यता ॥१५४॥
सर्व्वाभरण भूषाङ्गी[20] सर्व्वदेवनमस्कृता[21] । चम्पकोशीर पुन्नाग पूजनात् सर्व्वकामदा[22] ॥१५५॥
माया जये प्रकर्त्तव्या बहुरुपा सुशोभना । पाशाङ्कुशधरा देवी मालाचामरधारिणी ॥१५६॥
श्यामवर्णा सुरूपाद्या[23] पीत वस्त्र परिच्छदा । सहकार कृता पीडा मदकुङ्कुम चर्च्चिता ॥१५७॥

---

१. यस्तु क ।
२. भक्ता क ग ।
३. विरोधिनामाने क ग ।
४. स्वरुपा क ग ।
५. वारण वदिता क ग ।
६. पवित्रकात् क ।
७. दद्याद्रक्षो पाचारंतु क ।
८. गजां क ।
९. धरी क ।
१०. विभवानिता क ।
११. नुष्टं क ।
१२. खरेरा क ।
१३. पुरातनां क ग ।
१४. होमं कुंकुम चंदनं क ग ।
१५. दचि क ।
१६. कुशतला सिधारिणी क ।
१७. ग्रहता क ।
१८. स्वभाषितैः क ।
१९. कामानृत क ।
२०. भूषीसी क ।
२१. देव क ।
२२. वपशीर पुमा सर्व कामदा क ।
२३. स्वपाद्या क ।

हेम रत्न मणि वज्र पूजिता विधिना मुने । क्षीर पायस दानेन सर्व्व होमा च सिद्धिदा ॥१५८॥
दिति दैत्यनुतां देवी मन्मथे पूजयेन्मुने । दण्डासन संस्थितां भद्रां सर्व्वाभरण भूषिताम् ॥१५९॥
फलनीलोत्पलकरामुत्सङ्गशिशु[1] भूषिताम् । फल गन्धोपहारेण हवनाच्च शुभप्रदाम् ॥१६०॥
श्वेतां दुर्म्मुख वर्षार्द्धे श्वेतपङ्कज भूषिता । दण्डाक्ष सूत्रधारी च व्रतस्था योगमास्थिता ॥१६१॥
जपहोमार्च्चनं दानं गन्ध क्षीर बलि प्रियां । रस निर्यास होमेन सेव्या तु[2] शुभदायिका ॥१६२॥
विमोहनो हेमलंवे पीतवर्णा मृगासना । ध्वज शूलाक्षधारी च वेणु हस्ता ध्वनि प्रिया ॥१६३॥
सुरुपा यौवनस्था च हारकेयूर भूषिता । मधु पायस होमेन पूजया च शुभप्रदा ॥१६४॥
विलम्बे कारयेद्देवीं शरण्यां वरदाभयाम् । सिंहासन[3]समासीनामातपत्र विभूषिताम् ॥१६५॥
श्याम चन्दनकोशीर चर्च्चितां सितवाससाम् । कुङ्कुमागुरुहोमेन चिन्तितार्थ[4]प्रसाधिनीम् ॥१६६॥
कौशिकीं कौशिकारूढां कृष्णवर्णा कपालिनीम् । कर्त्तृकां[5] मुण्डहस्तां च त्रिशूल करभास्वराम् ।१६७॥
बलि मांसोदनाहारां[6]कृष्ण गन्धस्रज प्रियाम् । तुरुष्कागुरूहोमेन विकारि भय नाशिनीम् ॥१६८॥
गौरी शङ्खेन्दु वर्णाभां शर्वरी अभिधे भवेत् । वृष पद्मासनासीनां साक्ष सूत्रकमण्डलुः ॥१६९॥
वरदोद्यत[7]रूपाद्यां सर्व्वमाल्य फल प्रियाम् । तगरागुरुहोमेन कुङ्कुमेन शुभप्रदाम् ॥१७०॥

प्लवाख्ये[8]विमला कार्य्या शुद्ध हारेन्दु वर्च्चसा[10] ।
मुक्ताक्ष सूत्रधारी च कमण्डलु करा वरा ॥१७१॥

नरासन समारूढां श्वेत माल्याम्बर[11]प्रिया । दधि क्षीरौदनाहारा कर्पुरमदर्चचिता ॥१७२॥
सित पङ्कज होमेन राष्ट्रायुः नृपवर्द्धनी । शोभकृदति कर्त्तव्या वसन्तोज्ज्वलभूषणा ॥१७३॥
नृत्यमाना शुभा देवी समस्ता भरणैर्युता । वीणा वादन शीला च मदकर्पुर चर्च्चिता ॥१७४॥
अशोक स्रज होमेन सर्व्वकाम फलप्रदा[12] । शुभकृल्ललालसा कार्य्या करिणी पृष्ठ संस्थिता[13] ।१७५।

---

१. करा मुत्संगाशशि क ।
२. सध्यंते क ।
३. क पुस्तके पंक्ती नं सन्ति क ।
४. कुंकुमागुरुहोमेन विंतिताध क ।
५. कपाणिनीं क ।
६. वलि सां सोदनन्न हारां क ।
७. वाधेदात क ग ।
८. पुराख्ये क ग ।
९. वर्व्वसा क ।
१०. माल्यासुर क ग ।
११. होमेन सिद्धिदात्रौध क ।
१२. क पुस्तके पंक्ती नं सन्ति क ।
१३. शिलं व क ।

वज्र दर्पण हस्ता च सित चन्दन चर्च्चिता । हारकेयूर शोभाढ्या सुरक्तवसनोज्ज्वला ॥१७६॥
पर्परौदन पूजायां जलहोमेन सिद्धिदा । क्रोधिन्य रून्वती देवी सितवासां वृते स्थिताम् ॥१७७॥
पत्रपुष्पोदककरां चन्दनेन सुचर्च्चिताम् । होमाध्ययन शीला च फलकन्दाशन प्रियाम् ॥१७८॥
उशीरागुरु होमेन संवत्सरं भयापहा । विश्वावसौ क्रिया कार्य्या यज्ञाङ्गकृत भूषणा ॥१७९॥

स्रुव मेखलाधारी च शुक्लरक्त सितोज्ज्वला ।
पद्मोपरि समासीनां पूजयेत् यस्तु भावितः ॥१८०॥

चम्पकोशीर पुन्नागैः[1]स लभेतेप्सितान् मुने । दुर्गा दिग्गज मत्तालि पृष्ठगा अरिसूदनी[2] ॥१८१॥
चर्म्मासि शर पिनाक धारिणी महिषापहा । तच्छिरोत्थ महाकायैस्तद्भटैः परिवारिता ॥१८२॥
रक्त स्रगक्त नेत्रैश्च क्षीर पायस भोजनैः[3] । वेष्टिता नाग पाशेन केचिद्भिन्ना गतासवः ॥१८३॥
देवी शूल हताः कार्य्या सर्व्वे ते संमुखाननाः । पादोपमासने चैक एको हरि निवेशितः ॥१८४॥
एवं विधेन रुपेण परवसु समेकृताम् । पूजयेत् सततं यस्तु गन्ध धूप स्रगादिभिः ॥१८५॥
हेमराजत पत्रैश्च क्षीर पायस भोजनैः । स लभेतेप्सितान् कामांस्त्रिगुणा जीवते समाः ॥१८६॥

अनुक्तानान्तु देवीनां होमं क्षीर घृतं मतम् ।
आयुधं खड्ग शूलञ्च नैवेद्यं घृतपायसम् ॥१८७॥

(इत्याद्ये देवी पुराणे संवत्सर देवता द्वितीय विंशति विधिः)

काली प्लवङ्गनामे तु दण्डपाशोद्यता भवेत् ।
कृष्ण गन्धोपहारेण पूजिता शुभदायिका ॥१८८॥
रौद्री तु कीलके कार्य्या मुण्डकर्त्तृकधारिणी ।
रक्त गन्धोपहारेण पूजिता शुभदायिका ॥१८९॥
सौम्ये कपालिनी कार्य्या त्रिशूल वर धारिणी ।
पीत रक्तोपहारेण होमेन च वर प्रदा ॥१९०॥

---

१. पुशगै क ग।     २. दिगाजस क ।
३. रक्त स्रगक्त नेत्रेश्च तर्जितास्या महाबलैः क ग ।

साधारणे सघण्टा तु[१] घण्टाकर्णा त्रिशूलिनी । रक्त कृष्णोपहारेण सर्व्वकामान् प्रयच्छति ॥१९१॥
विरोध कृन्मयूराख्या[२] मयूरासन संस्थिता । पाश शक्ति करा देवी त्रिनेत्रा अलकोज्ज्वला ॥१९२॥
गन्ध पुष्पोपहारेण चन्दनागुरू चर्च्चिता[३]। पूजिता भाव होमेन सर्व्वकामान् प्रयच्छति ॥१९३॥
परिवाद्यां यजेद् देवीं बहुरूपा नरासनाम्[४] । शूल खड्गधरीं वत्स सर्व्वाभरण भूषिताम् ॥१९४॥
शुक्ल रक्ता सित पीतै गंन्ध धूप पवित्रकैः । पूजिता भावहोमेन[५] वलि दानेन तुष्टिदा ॥१९५॥
प्रमाथिने सुरुपां तु हार केयूर भूषिताम् । दण्डासन समारूढां पद्मस्वस्तिक धारिणीम् ॥१९६॥
मधु माला स्रजा पीडा सर्व्व गन्धोपचर्च्चिता । वलि माल्योपहारेण हवनेन शुभप्रदा ॥१९७॥
आनन्दाख्ये त्रिनेत्रा तु शूल पट्टिश धारिणी । जटोरुरग शरच्चन्द्र[६] भूषिता शिव रूपिणी ॥१९८॥
गन्ध माल्योपहारेण पूजिता सित पङ्कजैः । प्रयच्छति शुभान् कामान् जपहोम परायणा ॥१९९॥
रिपुहा[७] राक्षसे कार्य्या वज्र चक्र धनुर्द्धरा । पूजिता गन्धमाल्यैश्च वलि होमेन सिद्धिदा ॥२००॥
अनले अम्बिका देवी शूल सूत्राक्षधारिणी । रक्त बल्युपहारेण[८] पूजनाहवना शुभा ॥२०१॥
माहेश्वरी वृषारूढा त्रिनेत्रा शूलधारिणी । वीणा वादनशीला च[९] हार केयूर भूषिता ॥२०२॥
चन्दनागुरु दिग्धाङ्गी जाति चम्पक[१०] पूजिता । कालयुक्ते[११] कुमारी तु मयूरासन शक्ति भृत् ।२०३

त्रिदण्डी वालरुपा च रक्तमाल्य समुज्ज्वला[१२] ।
रक्तवासा बलिगन्धा[१३] क्षौद्र मांसासवप्रिया ॥२०४॥
पूजिता विधिवद्देवी[१४] हवनात् तुरंगमा शुभा ।
सिद्धयर्थे[१५] वैष्णवी कार्य्या शङ्ख चक्र गरुत्मगा[१६]॥२०५॥

वनमाला कृतापीडा वनमाला सुशोभना[१७] । पूजिता गन्ध पुष्पाद्यै जाती चन्दनचम्पकैः[१८] ॥२०६॥

---

१. संघदातु क । २. मयूराक्षी क ग । ३. चर्वि क ग ।
४. बहुरुपानुवासनी क । ५. सित क ग । ६. सरिश्वंभू क ।
७. विप्रहा क ग ।
८. वर्णो क ९. व क । १०. वपक क ।
११. वलि सोमालका हारा ध्वनापिगले शुभा क ग । १२. कुकुटा क ।
१३. गंधे क । १४. विविध क । १५. सिद्धार्थ क ग ।
१६. रगदास्मषा क । १७. पीत वस्त्रासु क ग । १८. जाती चंपकं चंदैः क ।

वलिलड्डुकादानेन सर्पिषा हवना शुभा। रौद्रे सुरवराध्यक्षा गजराजोपरि स्थिता ॥२०७॥
वज्राङ्कुशधरा देवी हार केयूरभूषिता। पीत गन्धोपहारेण वलिमाल्यनिवेदनैः ॥२०८॥
कुङ्कुमागुरु कर्पूर हवनेन वरप्रदा। वैवस्वती प्रकर्त्तव्या दुर्म्मतौ महिषोपरि ॥२०९॥
शूकरास्या कपालेन पिबन्ती दण्डधारिणी। रक्त माल्य कृता पीडा गन्धासव-सुपूजिता ॥२१०॥
वलि होमाज्य दानेन सर्व्वकाम फल प्रदा। दुन्दुभाख्ये अघोरा तु कराल वदनोज्ज्वला ॥२११॥
सिंह चर्म्मधरा देवी कृष्ण[1]चर्म्म परिच्छदा। मुण्डमाला कपालञ्च शूलहस्ता वलि प्रिया ॥२१२॥
सर्व्व गन्धोपहारेण पुरहोमेन शान्तिदा[2]। कराली रुधिरोद्गारी ऊर्द्ध्वकेशी भयानना। ॥२१३॥
मुण्ड माला धरा देवी कर्त्तृका पिशिताननना। सर्व्व कृष्णोपहारेण[3] मांसासव प्रपूजना ॥२१४॥
विल्वागुरु घृत क्षौद्र हवना शुभदायिका। रक्ताक्ष[4]विकटा कार्य्या उष्ट्रारुढा महाभुजा ॥२१५॥

पाशदण्ड[5]करालाख्या सर्व्व सत्त्वे भयङ्करा।
कृष्ण गन्धानुलिप्ताङ्गी वृश्चिकशलभान्विता[6] ॥२१६॥
रसोनासवमत्स्यादौ जवाकुसुम चर्च्चिता।
तेनाद्युक्ता महाकाला[7]सार्द्रा मांस वलिप्रिया ॥२१७॥

जप होमार्च्चना देवी सर्व्व गन्ध वलि प्रिया। क्रोधने[8]तु[9]दिति कार्य्या देवमाता बहुप्रजा ॥२१८॥
भद्रासन समारूढा गीतिभिर्व्वालि[10]कैर्वृता। फलपुष्पोप हस्ता च शिशुपालन[11]क्रोधना ॥२१९॥
चतुर्व्वर्णधरा देवी क्षीराहारस्य सिद्धिदा। पूजिता पङ्कजोशीरैश्चन्दनागुरु चर्च्चिता ॥२२०॥
फल कक्कोल होमा च घृत क्षीरासने शुभा। क्षये तु चर्च्चिता[12]कार्य्या प्रेतारुढा महाभुजा ॥२२१॥
ऊर्द्ध्वकेशोत्कटा क्षेमा निर्म्मांस स्नायु बन्धना। नागाभरण भूषाङ्गी कराल वदनोज्ज्वला ॥२२२॥
खड्ग खटवाङ्गधारी च कर्त्तृका मुण्डधारिणी। मातृणा प्रवरा देवी सर्व्वदेव नमस्कृता ॥२२३॥

---

१. रु क ग।
२. शांतिदा क।
३. चारेण क ग।
४. रक्ताख्यै क।
५. पादडं क।
६. भाविता क।
७. तैलाम्यक्त महाकर्णा क।
८. क्रोधः क।
९. कर्त्ते क।
१०. गातीमि क।
११. लालन क ग।
१२. चचिता क ग।

हैमा वा रत्नवार्क्षा वा शैला चावित्रजापि वा ।
स्थाप्या पूर्व्व विधानेन सर्व्व काम प्रसाधनी[1] ॥२२४॥

मातृ चक्रो गतः कार्यो वीणाहस्तः सुरेश्वरः । तुम्बुरु भैरवो नाथ अन्ते विघ्नेश्वरो भवेत् ॥२२५॥
गजवक्त्रो महाकायो[2] लम्बोदर वृक्रोदरौ । परशुर्मोदकं वामे करे याम्येऽक्ष सूत्रकम् ॥२२६॥
वरदं दण्ड[3] मत्स्यं वा वामार्द्धे युवती युवा । सुरुपा शोभना कार्य्या रति नाम्नी गजानने ॥२२७॥
सर्व्वाभरण शोभादि उभयोरपि कारयेत् । विघ्नेशो गज्र्जमानन्तु[4] उपवीतं महोरगाम् ॥२२८॥
देवी पट्टांशु संवीता मणि कङ्कण चर्च्चिता । हार केयूर शोभाभिस्तिलकालक भूषिता ॥२२९॥
कृत्वा तृतीय वर्णेन छड्भेदेन चेश्वरम् । वह्निना भवते देवी औङ्कारा नम चण्डिका[5] ॥२३०॥
एतेऽर्च्चन[6] जप होम प्रतिष्ठा यज्ञ कर्म्मणि । मन्त्रा देवाय देव्यायाः स्वाहान्ता होमने मुने ॥२३१॥

यासां वाहन होमेज्या वलि स्वायुध[7] कल्पना ।
नोदिता वत्स देवीनां तासां शृणु यथाविधि ॥२३२॥

वृषासना प्रकर्त्तव्या त्रिशूलायुध धारिणी । दध्योदनं प्रकर्त्तव्यं वलिगन्धं सितं मतम् ॥२३३॥
होमं क्षीरं घृतं क्षौद्रं तिला याव फलानि च । सामान्यानां समस्तानां[8] विद्याष्टक समुद्रकम् ॥२३४॥
ऋतुषट्क प्रकर्त्तव्यं वसन्तादि यथाविधि । वाला युवान मध्यावत् कृष्णाननभवोज्ज्वला ॥२३५॥
गौरी वृद्धा शिशुश्चेति स्त्रीयुग्मा ऋतवो मताः । एकादश प्रकर्त्तव्याः सर्व्वे रुद्रास्त्रिशूलिनः ॥२३६॥
जटा भारेन्दु वर्म्माङ्गा वासुकी[9] कृतकङ्कणाः । त्रिनेत्राः सितवर्णाभाः सर्व्व देव नमस्कृताः ॥२३७॥
पूजिताः संस्तुता वापि सर्व्वकाम फलप्रदाः । महालक्ष्मीः प्रकर्त्तव्या नृत्यमाना कपालिनी ॥२३८॥

कर्त्तृका मुण्ड खट्वाङ्गी नृपलाम्बरधारिणी[10] ।
कूष्माण्डानां[11] प्रेतस्था दन्तुरा वर्व्वरा गिरौ[12] ॥२३९॥
पूजिता नवमासे[13] तु सर्व्वकाम प्रदायिका ॥२४०॥

इत्यादये देवी पुराणे संवत्सर देवता तृतीय विंशति विधिः ॥

---

१. प्रसीदनी क ग ।
२. वृहत्कायो क ।
३. तं क ग. ।
४. गजमालीतु क ।
५. नम वांतिका क ग ।
६. एता र्चन क ।
७. आयुध क ।
८. सामान्यानि समस्तानि क ।
९. वर्मा कावासुकी क ।
१०. मालामुंडधारिणीक, वृषाम्वर धारिणी ग ।
११. कुष्मांडानीषु क ।
१२. रायर्वर्णां गौ क ।
१३. नभ क ग ।

विष्णुः सूर्य्योऽभवन्मेषे युगं विष्णुः प्रकीर्तितम्[१] ।
सर्व्वाभरण शोभाढ्यं रक्त माल्याम्वर प्रियम् ॥२४१॥
वह्निना पूजयेद्देवं काल युक्तेन भावितः । सर्व्व कामानवाप्नोति युग पीडाभिमुच्यते ॥२४२॥
दानं होमाज्य गो भूमि दत्वा गोमेधमाप्नुयात् ।
वृषे शुक्रोऽभवत् सूर्य्यः सुरेज्यो [२]युग उच्चते ॥२४३॥
यष्टव्यो मणि वैदूर्य्य गन्ध पुष्प[३]पवित्रकैः । वृषाश्वास्तु गजा देया दक्षिणा कनकं पिवा ॥२४४॥
अश्वत्थ समिधा होमं युग पीडां व्यपोहति ।
अथवा[४]मिथुने कार्य्यः शुक्रश्चेति युगं जयेत्[५] ॥२४५॥
रक्त पीतोपचारेण हेम वस्त्र फलाशनैः । यवा गावः प्रदातव्या[६]युग पीडा निवारणाः ॥२४६॥
होमं विन्दति नाम्यन्तु[७]आयुः सम्पद्दायकन् । धाता कर्किणि यष्टव्यो युगं वह्निणं प्रपूजयेत् ॥२४७॥
सितरक्तोपहारेण[८]गन्ध पुष्प पवित्रकैः । विद्रूमोत्पलवैदूर्य्य हेम हार कृताशनैः ॥२४८॥
युग सूर्य्यौ प्रकर्त्तव्यौ सर्व्वकाम फलप्रदौ । कुङ्कुमागुरु कर्पूर रक्त पुष्पोप शोभितौ ॥२४९॥
आद्यन्त वल[९]मन्त्रेण पूजितौ युग भेदिनौ[१०] । सिंहे मित्रेति यष्टव्यौ[११]युगं त्वष्टा प्रपूजयेत् ।२५०॥
हेमेन्द्र नीलजौ कार्य्यौ युग सूर्य्यौ सुशोभिनौ ।
मालती वकुलाशोक कुरुण्ड कुसुमोज्ज्वलौ ॥२५१॥
पद्म स्वस्तिक धारौ तौ पूजितौ वरदायकौ । यष्टव्यो वरुणः कन्ये अहिर्ब्रुन्ध्यो युगं[१२] तथा ॥२५२॥
पुष्परागमयं[१३] सूर्य्यं युगं मौक्तिकजं कुरु । दत्त्वा मौक्तिक दानौ तु[१४] युगपीडा व्यपौहकौ ॥२५३॥
भवतो युग सूर्य्यौ तु आयुरारोग्य वृद्धिदौ । विवस्वान् सप्तमे कार्य्यः पितुश्चेति युगस्तथा[१५] ॥५४॥

---

१. प्रकीर्त्तितः क ।
२. योग ग ।
३. धूप क ।
४. अथता क ।
५. यजेत् क ग ।
६. यम्त्वा गाधः प्रकर्त्तव्या क ।
७. विल्वातिलाज्यंतु क ग ।
८. पचारेण क ।
९. आद्यांन्तु वर्ण क ।
१०. मोहनौ क ।
११. नष्टव्यो क ।
१२. अहिर्वधूनां क ।
१३. पुष्पनामयं क ।
१४. शत पत्रिक पुष्पैश्च कर्पुरा गुरु चर्चितो क ग ।
१५. दातुतं क ।

शङ्ख स्फटिकजौ देवौ रजते परिकल्पितौ। गन्ध पुष्पोपहारेण वस्त्राभरण भूषितौ ॥२५५॥
जप होमं प्रकर्त्तव्यं वसर्वतु शिवेन च। सर्व्वकामानवाप्नोति युग पीडां निवारयेत् ॥२५६॥
वृश्चिके सविता सूर्य्यो[1] विश्वेति युगमुच्यते। तौ वज्रनील सम्भूतौ हेमधारा सुसञ्चितौ[2] ॥२५७॥
रक्त पीतारुणं शुक्ल वस्त्र संवीत र्चाचतौ। कृत्वा कुङ्कुम गन्धाद्यौ पङ्कजोत्पल मालिनौ ॥२५८॥

होमं देवदलं नागं क्षीर घृतं क्षीरं[3] विमिश्रितम्।

लक्षेदं दक्षिणा देया गावो वस्त्रं मणि भुवम् ॥१५९॥

युगसूर्य्ये भवेत् पूजा पञ्चम त्रि चतुर्थकैः। सर्व्वकामानवाप्नोति युगपीडा विनश्यति ॥२६०॥
पूषा धनुषि यष्टव्यो युगं सोमो विधीयते। महानील भवः सूर्य्यः शुक्तिकायां तथा युगम् ॥२६१॥
युगसूर्य्यौ तु हेमस्थौ सितकुङ्कुम चर्च्चितौ। वस्त्र पुष्पाक्षतं तोयं धूप नैवेद्य पूजितौ ॥२६२॥
द्विराद्य प्रथमान्तेन च सर्व्वकाम फलप्रदौ। युगपीडा निवाराय यष्टव्यौ रवि संयुगौ ॥२६३॥
यष्टव्यस्त्वष्टा मकरे इन्द्राग्नि युगसंयुतः। कुरु इन्द्रेन्द्र नीलोत्थौ पट्टोपरि सुसञ्चितै[4] ॥२६४॥
चन्दनागुरु कर्पूर रोचना मद चर्च्चितौ। रक्त वस्त्र सुपुष्पाद्यौ महार्घ मणि भूषितौ ॥२६५॥
दत्त्वा क्षीरोदनं धूपं पञ्च निर्य्यास सम्भवम्। होमं कृत्वा मधुसर्पिः समिधारक्त चन्दनैः ॥२६६॥
ततः क्षमापयेदेतौ युग वह्निण दिवाकरौ। मण्डलान्तेन कुम्भेन हेम्य भुद्रायतेन च ॥२६७॥
द्विजानां दक्षिणां दत्त्वा सर्व्व याग फलं लभेत्। युगपीडा न जायते तस्मिन् देशे महामुने ॥२६८॥
यत्रायं विधि सम्पन्नः सयुगः पूज्यते रविः। कुम्भे ग्रशोति यष्टव्यो युगाश्विन समायुतौ ॥२६९॥
हेम पट्टकृतौ देवौ युग सूर्य्यौ सराजतौ। वेदि[5] पट्ट परिच्छन्नौ कर्पूरमद चर्च्चितौ ॥२७०॥
कुण्ड कूर्य्यक कौरण्ड पुष्पा पीडा विभूषितौ। दत्त्वा देवदलं धूपं सतुरुस्कं वसान्वितम् ॥२७१॥
पञ्चाब्देन तु मन्त्रेण होमं कृत्वा क्षमापयेत्। द्विजानां दक्षिणां दत्त्वा वाजपेय फलं लभेत् ॥२७२॥
ब्रह्म दत्यां व्यपोहेत युगपीडा न जायते। इन्द्राय कथितञ्चेदं वृत्राघस्योपशान्तये ॥२७३॥
मीने भगोऽतिते जाथो युगञ्चापि भगं तथा। यष्टव्यौ युग सूर्य्यौ तौ पक्षेन्द्रमणि सञ्चितौ ॥७४॥

---

१. पितृचेति युग तथा क। २. कार्यायी क ग।
३. दलं शगंघृत क्षीरं क।
४. सुसंचितौ क ग। ५. क पुस्तके पंक्ती न सन्ति।

हेमराजत पात्रस्थौ जाति कामद चर्च्चितौ । करवीर कृता पीडौ कर्णिकार स्रजान्वितौ ॥२७५॥
रक्त वस्त्र परिच्छन्नौ धूपागुरु सुगन्धिनौ । दधि[1] ओदन क्षीरञ्च पायसं वलि भोजनैः ॥२७६॥
हुत्वा चादित्य देवेन युगानामुदयेन तु । दत्वा दानं द्विजातीनां हेम भूषित वाससी ॥२७७॥
ततः क्षमापयेदेतौ चाश्वमेध फलप्रदौ । ब्रह्म हत्या सुरापान पितृहत्या विशोधनौ ॥२७८॥
तौ युगार्कौ प्रयष्टव्यौ मूर्ति संस्थौ सुशोभनौ । युगपीडा विनाशाय सर्व्वकाम फलप्रदौ ॥२७९॥

मेषादि विष्णु सूर्य्यस्तु नारायण युगान्वितः[2] ।
पूज्या ब्रह्मोक्तन्यायेन[3] प्रतिमा मण्डलेऽपि वा ॥२८०॥
मण्डपं[4] मण्डपा यत्र मुच्यन्ते कर्म्मणोऽशुभान् ।
संवत्सर भयाद् घोरान् मण्डलाद्वाथ मण्डलम् ॥२८१॥

अलं पर्य्याप्ति भूषायां मण्डलं तेन चोच्यते । वसना भरणाच्चित्त रञ्जनं राजता मता[5] ॥२८२॥
सम सूत्रं कृतं क्षेत्रं पूर्व्वोत्तरप्लवे[6] भुवि । मण्डलं लक्षणोपेतं तत्र कार्य्यं महामुने ॥२८३॥
प्रागुत्तरेऽथ मध्ये वा यथालाभमथा वले । सूत्रेण वस्तुना शुद्धि[7] न चादिशति वर्द्धितम् ॥२८४॥
वस्त्रानां पुरुषाणां वा तत्रस्थं सुपरीक्षितम् । वर्ण शुद्धयादि[8] रूपेण कुञ्चितं समदर्पणम् ॥२८५॥
तस्मिन् मान विभागन्तु बुद्ध्या भागत्रयं कुरु । कर्णिका केशरान्भागे सर्व्वंपत्राणि लेखयेत् ॥८६॥
दलाग्राणि मूलभागे[9] पञ्चरङ्गध्वजेऽथवा । त्रिवर्णमेकवर्णं वा द्वारं पद्मासमानि तु ॥८७॥
चतुरेकेऽथ वा प्राच्यां वीथीपत्र विहङ्गमैः । नरनाभं पिवा वत्स पद्मनीलोत्पलोत्पलः ॥८८॥
शक्रादिमय वज्रादि लिखेदिवेन्दु गता पिवा । मुक्ताफल प्रवालोऽथ पुष्परागकृता रजा ॥२८९॥
सित कुङ्कुमरागैर्वा नीलैर्मरकतैरपि । शालि षष्टिकचूर्णैर्वा यव गोधूम जाथ वा ॥२९०॥

---

१. क पुस्तके पंक्ती नं सन्ति ।
२. भाद्यादि विष्णु सूर्य्यतु नारायणा युगात्तितं क ग ।
३. यश्वा ब्रह्मोक्तन्यायेन क ।
४. मंडलं क ग ।
५. मरणा भावना चित्तं रंजना वारजा माता क ।
६. पूर्वोत्तर पुरेभुवि क ।
७. वस्तुना शुद्धं क ।
८. स्वाक्षादि क ग ।
९. मुने क ग ।

कौसुम्भ रजनी भृङ्ग पत्र चूर्णी कृता शुभा । यवाङ्गुलोच्छ्रयो रेखा[१] समा पुञ्जविवर्जिता[२] ॥२९१॥

सर्व्व शोभा समायुक्ता मण्डपञ्च विकल्पयेत्[३] ।
शूलाङ्कुशं करे कुर्य्यात् शङ्कराङ्के शिवं यजेत् ॥२९२॥
पद्म स्वस्तिक नाराच खड्गाङ्के तु शिवां यजेत् ।
माला[४] वृत्ताब्ज पद्माङ्के व्योमाङ्के तु दिवाकरम् ॥२९३॥
शक्ति बर्हिण सूत्राङ्के स्कन्दं पीत्वा युगे गणान्[५] ।
स्रुवदण्डाक्ष मालाङ्के कमण्डलुकरत्वजम्[६] ॥२९४॥
वज्रा[७] कपाल शूलाङ्के देवाः स्वस्वायुधेऽङ्किते[८] ।
वसवो दण्ड भृङ्गारैश्चक्र शङ्खाङ्कितं हरिम् ॥२९५॥

शूल व्योमासि चक्राङ्के शिव सूर्याम्बिका[९] हरिम् । यष्टव्याः सर्व्वकामेण योगदारोग्यदा मुने ।२९६॥
रिपुहा सिद्धिदा वत्स स्वाङ्ग षट्क प्रपूजिता । मूलमन्त्रैः स्वकैवार्थ ओङ्कारेणाभियोजितैः ॥२९७॥
चन्दनागुरु कर्पूर मद रोचन कुङ्कुमैः । गन्ध धूपादि निर्य्यास तुरुष्कनख शर्करैः ॥२९८॥
चम्पकोत्पल पद्मानि जाती-कुब्जक मालिका । बिल्वपत्राणि पुष्पाणि नवपत्राणि[१०] पत्रिका ।२९९॥
निवेद्य घृत भक्त्यादि घृतपूर्णादि लड्डुकाः । बलिः शाल्योदनं क्षीरं दधि क्षौद्र विमिश्रिता ॥३००॥
पद्मेन्द्र नील वज्रादि रत्नानि बहुधानि च[११] । अण्डजोऽण्डज भेदानि विचित्राण्याहृतानि च ।३०१॥
ध्वज माला वितानानि चारु रूपाणि कारयेत् । पताका चामरादीनि बहुधा परिकल्पयेत् ॥३०२॥
किङ्किणी शब्द बहुलं घण्टा शब्द वराकुलम् । कर्त्तव्यं देवतागारं विचित्रेन्द्र सदोपमम् ॥३०३॥
शुचिः सन्नद्धो[१२] मन्त्रज्ञो मौनी ध्यान परायणः । गतकाम भयाद्वन्द्वो रागमत्सर वर्ज्जितः ॥३०४॥
आत्मानं पूजयित्वा तु सुगन्ध सितवाससम्[१३] । सुमूहूर्त्ते यजेद्देवान् स्वकीयासन संस्थितान् ॥३०५॥

---

१. अया लेखा क । २. चिवर्जित क ग । ३. मंडल परिकल्पयेत् क ग ।
४. भाना क । ५. स्कदं पार्श्वा युध गणां ग ।
६. करभजां क ग । ७. रुद्रान क ग । ८. स्वस्वास्त्रावांकिते क ।
९. सूर्य्यात्मिका क ग । १०. मरुपत्रादि क ।
११. बहुवाससी क, १२. सन्नद्ध क, १३. वाससः क ग ।

आह्वानेनार्घ्य पाद्यादि हेम पात्रेण दापयेत् । रत्न बिल्वाक्षत पुष्पा दधि दूर्व्वा कुशास्तिलाः ॥३०६॥
सामान्यं[1] सर्व्व देवानामर्घोऽयं परिकल्पितः । अभावाद्दधि दूर्व्वादिर्मानसं वाथ कल्पयेत् ॥३०७॥
दत्त्वार्घ्यं पूजनं कार्य्यं देवाङ्ग[2] लोकपालयोः । गणमातृ ग्रहाणाञ्च कलादि शरदां युगम् ॥३०८॥
मुद्रादि दर्शनं कार्य्यमर्घ्यं दत्त्वा जपादिकन्[3] । कृत्वा देवाय तद्गत्त्वा बलिदानं ग्रहादिषु ॥३०९॥
वलिर्भूत[4] पिशाचेषु देवरक्षो गणेषु च । शिवादि जम्भकादीनां नागानां पय पायसम् ॥३१०॥
कृसरां पितृदेवानां हविर्यक्षेषु चासवम् । दैत्यानां मत्स्य मांसानि देवीनां पुनर्मोदकम्[5] ॥३११॥
बलिपूजा प्रदानान्ते ततो होमं समारभेत् । हस्तादि लिखिते[6] कुण्डे समाख्याते समीकृते ॥३१२॥
ओष्ठमेकाङ्गुलं कार्य्य नाभी वा दश चायता । अष्ट बिस्तर सामान्या गजश्चोष्ट्र-समोपमा ।३१३॥
चतुरङ्गुलमानेन प्रथमा मेखला भवेत् । एकोना द्वे[7] तृतीया तु एवं कुण्डं शुभावहम् ॥३१४॥
चतुरस्रञ्च पूर्व्वादिमश्वत्थ दल सन्निभम् । अर्धेन्दु कृकटाकारं वृत्तं पञ्चकमष्टधा ॥३१५॥

पद्माकारं प्रकर्त्तव्यं कुण्डञ्चेशान गोचरे ।
शाखा अश्वत्था[8] श्रीपर्णो स्रुचा[9] रैकङ्कतोऽपिवा ॥३१६॥

खदिरासन बिल्वादौ स्रुवं हस्तादि दर्घतः । अङ्गुष्ठ परिणाहाद्य[10] दण्ड कुम्भक भूषितम् ॥३१७॥

दुष्करं[11] पुष्करौ द्वौ तु मध्यं रेखोच्छ्रिताङ्कितम् ।
स्रुचा[12] सार्द्धकरा कार्य्या दण्डं वृत्तं सुशोभनम् ॥३१८॥

षडङ्गुल परीणाहं भ्रामयन्ति[13] विनिर्गतम् । द्वयङ्गुलं मूल देशे तु कुम्भं पुष्कर मूलगम्[14] ॥३१९॥

कर्णिका[15] तद्विजानीयात् त्रिभागेण तु पुष्करम् ।
वेदी समाङ्गुला[16] कार्य्या पञ्चवृतं प्रकल्पयेत् ॥३२०॥

---

१. सामान्यः क ग ।
२. वेदांगैः क ग ।
३. जयादिव क ।
४. वायभूत क ग ।
५. देवानां मलनोदनं क ग ।
६. लक्षिते क ग ।
७. एकलांढे क ।
८. शाक्राञ्चतथा ग्र श्री क ।
९. श्रुतिक ग ।
१०. परिणामाभ्यां क ।
११. पुष्करं क ग ।
१२. ध्रुवि क ।
१३. परिणादभ्राभियंत्र क ।
१४. युपूर मूलगा क ।
१५ गंडिका क ।
१६. देवी सप्तांगुला क ग ।

त्रीणि खातं समं कार्य्यमग्रं कुर्य्यात् षडङ्गुलम् ।
गोकर्णाकृति शोभाद्यं कन्यासाङ्गुलि रन्ध्रगम् ॥३२१॥

घृतं[1] निरक्रमणं कार्य्यं यवयत्र सुवेक्षितम्[2] । एवं स्रुवं स्रुचा[3]कार्ये ताभ्यां होमं सुखावहा ॥३२२॥

शमी गभीरिणी कार्य्या धैर्याद्धस्त प्रमाणिता ।
वितस्ति परिणाहाद्या[4] मध्यं वै षोडशाङ्गुलम् ॥३२३॥

वृत्तं करद्वयोपेतं दशाङ्गुल सुवृत्तिगम् । आपीडं तं समं[5] कार्य्यं मध्ये आयास बन्धनम् ॥३२४॥

घटिकाङ्गारयोगार्थं शगरज्ज्वा यथाविधि[6] । सुदृढा वह्नि[7] मन्त्रेण पूजयित्वा तु पातयेत् ॥३२५॥

अभावे[8] सूर्य्यकान्ते च तदभावात् करीषजा[9] । सामान्यायतनागारे आनयेत् ताम्रभाजने ॥३२६॥

शरावे मृन्मये पात्रे कुण्डे पूजान्विते न्यसेत् । अग्नि चक्र विधानेन सर्व्व कर्म्माणि कारयेत् ॥३२७॥

हैमराजत ताम्राणि काष्ठशैल मृदानि च । रत्नादीनि च पात्राणि शुभदेवाङ्कितानि च ॥३२८॥

अर्घ नैवेद्य पूजार्थं वलिदानञ्च कारयेत् । यस्मादेवं विधानेन होमं कृत्वा यथाविधि[10] ॥३२९॥

मण्डलं दर्शयेद् वत्स शुचौ भक्ते उपोषिते । मन्त्रपूतेन[11] हस्तेन दत्वा तु शिरसि स्रजम् ॥३३०॥

पुष्पाणि करयोर्दत्त्वा मण्डलान्ते क्षमापयेत्[12] । पतितं यत्र देवोर्द्धे[13] तदंशं तं विदुर्मुने ॥३३१॥

एवं दृष्टो शिवो वत्स गत्वा वह्नं क्षमापयेत्[14] ।
पूर्णाहुति प्रदानञ्च दृष्ट्वा पापात् प्रमुच्यते ॥३३२॥

सर्व्वकामानवाप्नोति विगताघो महामुने । स्नातो मन्त्रार्द्धकुम्भाम्भैः सर्व व्याधि विमुच्यते ॥३३३॥

गो भू हिरण्य वस्त्राणि रत्नवाजि गजादि वा ।
आचार्य्याय प्रदातव्या आत्मानञ्च निवेदयेत् ॥३३४॥

---

१. घत क ग ।
२. स्वरेखितं क ग ।
३. एवं श्रवंदकवि क ।
४. परिणाहाभ्यां क ग ।
५. अपीडं भस्म संकार्य्यं क ।
६. अटिकां कुयोगां वं बाल वज्रा प्रमासमा क ।
७. सुदृष्टा स्वहि, क ।
८. अभावात् क ग ।
९. स्वरोधजा च ।
१०. यथाविमि, क ग ।
११. नेत्र क ग ।
१२. क्षिपापयेत् क ।
१३. पुष्प देवोर्द्धे क ।
१४. समापयेत् क ।

द्विजानां दक्षिणा देया कन्यकानां विशेषतः । लोके पूजा प्रकर्त्तव्या यथार्हं च क्रमागता ॥३३५॥

दीनान्ध कृपणानाञ्च अन्नं देयं च सर्वदा । कृमि कीट पतङ्गेषु भूमौ दध्योदनं क्षिपेत् ॥३३६॥

सर्व्वदा सर्व्वभूतानां सुखं कार्य्यं सुखार्थिना । स्थावरं जङ्गमं वापि ऋतुराज्यं न हिंसयेत्[1] ॥३३७॥

एवं [2]युगादिभिर्देव्यो बहुभेदाः सभास्कराः । यस्तु मण्डल कुण्डस्थां कृत्वा चित्रेऽथवा यजेत् ॥३३८॥

नासावाध्यात्मिकादीनि दुःखानि क्वचिदाप्नुयात् ।
आधि[3]व्याधि कृता पीडा तस्मिन् देशेऽपि नो भवेत् ॥३३९॥

सुभिक्षं क्षेम वैराग्यं गज वाजि सदोज्ज्वलम् । हेमरत्नाकराकीर्णं राष्ट्रं तस्य प्रजायते ॥३४०॥

पर्ज्जन्यः कालवर्षी स्याच्छस्यशाली वसुन्धरा ।
यज्ञ इष्टि रता विप्रा गावो भुवि पयोऽन्विताः ॥३४१॥

पतिव्रता सदा नार्यो भृत्याः स्वामिपरायणाः ।
नोपसर्गोऽपमृत्युर्व्वा तत्र देशे भवेत् क्वचित्
यत्रेयं सततं पूजा देवीनां क्रियते मुने ॥३४२॥

इति श्री देवीपुराणे देवी संवत्सरमण्डल वलिहरणविधानं नाम पञ्चाशोऽध्यायः ।

---

१. ऋतुवाद्यं नदीनि दुःखानि क्वचिदप क्रयात् क ।
२. क पुस्तके पंक्तीर्न सन्ति ।
३. कामवर्षी स्यात्सस्य मालीवसंधरी क ।



# एकपञ्चाशोऽध्यायः ।

ब्रह्मोवाच ।

येयं देवी इहामुत्र हिताय समुपाश्रिता । स्वार्थ सिद्धौ परार्थे वा भवन्ती कथयामिते ॥१॥
मङ्गला शाकम्भरी[1] काली देव्या या त्रिविधा तनुः । घोरहा रुरुहा वत्स शुभा कन्दक[2] नाशिनी ॥२॥
दमनी[3] महिषघ्नी च तथा च महिषासुरा । एता मूलगता देव्यः[4] षष्टिधा कोटिधापराः ॥३॥
एतेषां शास्त्रवेत्तारो देवी पूजाविधौ शुभा । मातृ मण्डल वेत्ता च ब्राह्मणः क्षत्रियो[6]ऽपि वा ॥४॥
प्रतिचारी विशोर्वापि शूद्रो वा तत्त्वविद्यदि । पूजाविधौ भवेत् श्रेष्ठो न मन्दो न कुशीलवः[7] ॥५॥
न नैष्ठिको विशास्त्रो वा[8] पूजको भवते शुभः । अभिधौ य शिवां पूज्येता[9] परेण नियोजितः ॥६॥
स याति नरके घोरं स्वामी राजा च नश्यति । तस्माच्छिववविधा देवी विष्णुर्भार्गव तैः शुभैः ॥७॥

पूजितः शिववतः सूर्य्यः शिवः[10] सर्व्वफल प्रदः ।
अग्रे वा[11] शिव सिद्धान्त तिलकादि प्रवेदिभिः ॥८॥

माठरोक्त[12] विधौ वापि सर्व्वकाम प्रदायकः । अहञ्च[13] वेद विधिना ग्रहा नागा परे सुराः ॥९॥
सुशास्त्रविधिमाश्रित्य पूजिताः फलदा नृणाम्[14] । वैपरित्याद्भयं कुर्य्यात् अपदे राजनस्थ च ॥१०॥
तस्मात् पराध्यंमुद्दिश्य पूजां विधि शुभावहा । मधुराम्लादिना केचित् तुष्यन्ते बदुकैः परे ॥११॥
कषाय लवणैस्तिक्तैरेवं भिन्ना नृणां मतिः । देवा मूर्त्तिगताः स्थूलाः शब्दगा ध्यानगाः परे ॥१२॥
स्वार्थ सिद्धौ परार्थे वा मनसा यान्ति चिन्तिताः । तथापि उपचारेण जाति भेद क्रियादिभि ॥१३॥
शिवे विवर्ज्जयेत् कुन्दमुन्मत्तञ्च हरेस्तथा । देवीनाञ्चार्क मन्दारौ सूर्य्ये केशयुतं मृगम् ॥१४॥

---

१. कंभवा क । २. शुभांधकारी क ग । ३. मदनी क ग ।
४. भेदाः क ग । ५. एतासां क ग । ६. कृत्रियो क ।
७. ससगुर्न कुशीनरः क । ८. स्तोद्य क । ९. पूज्येद क ग ।
१०. शैवैः क ग । ११. मृगी क ग । १२. कुमारोक्त क ।
१३. अहृच क ग । १४. ...

एवं विधिं समाश्रित्य पूजयेल्लभतो[1] फलम् । हेम पात्रेण[2] सर्व्वाणि लभते च हितान् मुने ॥१५॥
अर्घ्यं दत्वा तु रौप्येण आयु[3] राज्य सुतांल्लभेत् । ताम्र पात्रेण सौभाग्यं धर्म्मं मृन्मय सम्भवैः ।१६।
वार्क्षपात्राणि पात्राणि नैष्ठिकादिषु कारयेत् । शैलानि क्रूर जातीनां रत्नादि[4] सर्व्वकामिकम् ॥१७॥
धातूत्तमानि पात्राणि नृपराष्ट्र विवृद्धये । त्रपुसीस कलौ हानिरन्य जातिषु[5] कारयेत् ॥१८॥
विवाह यज्ञ श्राद्धेषु प्रतिष्ठासु विशेषतः । पात्राणाञ्चादरः कार्य्यः पात्राण्येवोत्तमानि च ॥१९॥
पात्रेषु पृथिवी दुग्धा सुधा पात्रेषु धार्य्यते । वेदाः सोमं क्रतुर्यज्ञाः पात्राण्येव विदुर्बुधाः ॥२०॥
बलि होम क्रियादीनि बिना पात्रे न सिध्यति । तस्माद् यज्ञाङ्गमेवाहुः पात्रञ्चाग्र्यं महामुने ॥२१॥
यो यस्य आयुधः[6] प्रोक्तस्तस्य तल्लाञ्छनं भवेत् । वाहन ध्वजच्छत्रेषु लाञ्छनं परिकल्पयेत् ॥२२॥
षट्त्रिंशदङ्गुलं पात्रञ्चोत्तमं परिकीर्त्तितम् । रस अङ्गुल[7]कीनन्तु न पात्रं कारयेत् क्वचित् ।२३।
नाना विचित्र रूपाणि पुण्डरीकाकृतीनि च । शङ्ख नीलोत्पलाकारान् पात्राणि परिकल्पयेत् ॥२४॥
विना[8]पात्राणि[9] यः कुर्यात् प्रतिष्ठां याज्ञिकी क्रियाम् । विफला भवते सर्व्वा वाहनार्द्धि धनापहा ।२५।
बलिहीने तु दुर्भिक्षं गन्धहीने अभोग्यता । धूपहीने च उद्वेगं वस्त्रहीने धनक्षयम् ॥२६॥
रत्नहीने हरेद्भार्य्यां पताकै दण्डनायकम् । छत्र हीने हरेच्छत्रं विताने मकरं[10] भवेत् ॥२७॥
वेदीहीने तु चालं स्यान्नगरस्य पुरस्य च । कलसै र्बन्धु नाशश्च[11] भवति[12] मुनिसत्तम ॥२८॥
तोरणानामभावे तु हरेज्जा[13]तीश्च बान्धवान् । स्रुवि कुण्डविहीनं तु यज्ञं लुप्यन्ति[14]राक्षसाः ।२९।
रजोहीनं[15] तु दौर्भाग्यं प्राप्नुयात् कारक[16] सदा । दक्षिणा रहिते सर्व्वं भवते अविचारणात् ॥३०॥
मन्त्र विद्या विहीनन्तु सम्पूर्णमपि नश्यति । पात्र मन्त्र समायुक्तं सर्व्वं दोषान् निवारयेत् ॥३१॥

इति श्री देवीपुराणे पात्रविधिर्नाम एकपञ्चाशोऽध्यायः ॥

---

१. पूजयन् लभतो फलं क ग ।    २. पात्राणि क ग ।    ३. ग्राह क ग ।
४. रत्नादि क ।    ५. अनजाकिपु क ।
६. चायुध क ग ।    ७. पंक्ती न सन्ति क पुस्तके ।
८. रत्नादि रचितां कुर्यात्कांची मूल मुसंचितान् । यथा शोभा यथा लाभं पात्राणि परिकल्पयेत् क ।
९. पात्रेण क ।    १०. वितासवकं क ग।    ११. नाशन्तु क ग ।
१२. भवते क ।    १३. हनेतज्ञा क ।    १४. लुपति क ।
१५. रजहीने क ।    १६. दारकः क ग ।

# द्विपञ्चाशोऽध्यायः ।

मनुरुवाच ।

शृणु शौनक तत्त्वेन अप मृत्यु निवारणम् । सर्व्व काम प्रदं[1] पुण्यं रवियाग मनुत्तमम् ॥१॥
ग्रहा माघादि भेदेन आदित्यं मकरे यजेत् । हस्त मात्रे शुभे पद्मे[2] कर्णिका केशरोज्ज्वले ॥२॥
कुङ्कुमादि रजैर्लिख्यमष्टपत्रं रवेर्ग्रहम् । आदित्यं पूजयेन्मध्ये पूर्व्वपत्रे निशाकरम् ॥३॥
मङ्गलं वह्निपत्रस्थं दक्षिणेन बुधं यजेत् । शनि नैर्ऋत पत्रस्थं सुरेज्यं वरुणालयम् ॥४॥
वायव्ये सैंहिकेयन्तु भार्गवश्चोत्तरे यजेत् । केतुं शिवाङ्गगे[3] देयं यागे सर्व्वशुभोदये ॥५॥
आदि वर्ण कृताधारं आदित्यं शम्भुना यजेत् । शेषा वारुण वर्णेन अष्टधाभि र्दिवेन तु ॥६॥
गन्ध पुष्पं[4] पवित्रन्तु हृदयेन प्रदापयेत् । वरदाभय मुद्रौ तु मध्ये व्योमं[5] प्रदर्शयेत् ॥७॥
सर्व्व रक्तोपचारन्तु आदित्याय प्रकल्पयेत् । स्व स्व वर्णं ग्रहाणान्तु देयं पुष्पविलेपनम् ॥८॥
होमं तिलाज्यक्षौद्रन्तु पायसन्तु[6] निवेदयेत् । एवं कृत्वा जपं[7] देवमादित्याय सुसंख्यया ॥९॥
स्नानं शिष्याय कर्त्तव्यं मन्त्र पूतेन वारिणा । सर्व्व कामानवाप्नोति यो विधिं कारयेदिमम् ॥१०॥

इति श्री देवीपुराणे आदित्ययागोनाम द्विपञ्चाशोऽध्यायः ॥

---

१. मिदं क । २. पक्षे क । ३. शिवाशंग क ।
४ धूप क ग । ५. वाम क ग । ६. पायसंर कग ।
७. कृत्वाद्यजं क ।



# त्रिपञ्चाशोऽध्यायः ।

आदित्यं भास्करं सूर्य्यं रविं भानुं दिवाकरम् । स्रष्टारं तेजिनं भावं जयन्तं शुभदं शिवम् ॥१॥
मकरादि प्रभेदेन आदित्यादि शुभोदयम् । यष्टव्या हस्तमात्रे तु द्विवृध्या धनुषावधि[1] ॥२॥
शुभदोऽयं जयं[2] भाग्यं कल्याणमपराजितम् । मङ्गलमिष्ट सिद्धिश्च विभवं शुभदं[3] शुभम् ॥३॥
इष्टाख्यं व्याधिनाशन्तु मकरादौ समारभेत् । सर्व्वपापहरा यागाः सर्व्वे आयुर्धनप्रदाः ॥४॥
सर्व्व रोग विनाशाय सर्व्वे कार्य्याः सुखाय च । नित्यं श्वेतोपहारेण[4] आयुरारोग्यदायकाः ॥५॥
सुत सौभाग्य कामेन कार्य्या रक्तोपचारिकाः । पीतेन ग्रहनाशार्थं कृष्णैः शत्रुनिवारणम् ॥६॥
ग्रहाणां यजनं कार्य्यं समन्त्रं बलिपूजनम् । फल रत्नौषधी गन्धवीज धातु मृदादिभिः ॥७॥
सप्तोदक समन्त्रेण स्नात्वा भाग्योदयो भवेत् । गजानां तुरगाणाञ्च रविशक्र समन्वितम्[5] ॥८॥
स्नानं होमं प्रकर्त्तव्यं लक्षायुत सहस्रिकम् । मातराणां सदा चक्रं हेमराजतताम्रजम्[6] ॥९॥
पूजनं[7] विधिना विप्र संवत्सरं भयापहम्[8] ॥१०॥

इति श्री देवीपुराणे ग्रहमातृविधिर्नाम त्रिपञ्चाशोऽध्यायः ॥

---

१. भनुरवी क ।
२. शुभोदयं जवं क ।
३. सुतदं क ग ।
४. श्वेतोपचारेण क ग ।
५. मंत्रितां क ।
६. ताम्रकं क ग ।
७. पूजितं क ।
८. संवत्सर भयापहं क ग ।
९. आद्ये ग्रहमातृविधिः क ग ।



# चतुःपञ्चाशोऽध्यायः ।

मनुरुवाच ।

सहस्र[1] लक्षणोपेतं वैदूर्य्ये कारयेच्छिवम् ।
हैम[2] पीठं[3] सुशोभाढ्यं वज्राङ्कं[4] तत्र मातरा: ॥१॥
चर्च्चिकाद्याः प्रकर्त्तव्याः पूर्व्वादि परिकल्पिताः ॥२॥

महा[5] भय विनाशाय ऋतुयाग प्रपूजिताः । शिवं[5] रुद्रं सदा वत्स कर्णिकायां निवेशितम् ॥३॥
महाविभव सारेण वस्त्र गन्धं सुपूजितम् । प्रयच्छति शुभान् कामान् मनोऽभीष्टान् सदा जने[6] ॥४॥
तस्य पूजा प्रकर्त्तव्या गेहे सर्व्वत्र कालिके[7] । जप होमार्च्चनं पूजा त्रिकालं सततं भवेत् ॥५॥
कुङ्कुमागुरू कर्पूर मद चन्दन रोचनाः । गन्ध पुष्पाश्च दातव्याः सितनिर्य्यासिसिद्धकाः[8] ॥६॥
सर्व्वभय विनाशाय प्रमाथी पिङ्गलापि वा । शनि सूर्य्या च राहूत्था क्षयादि महदापदः[9] ॥७॥

अन्न[10] जन्मर्क्ष मृत्युस्थाः समं यान्त्यविचारणात् ।
ताम्रे पत्रे प्रकर्त्तव्या ग्रहभाग प्रकल्पिता[11] ॥८॥

रक्त चन्दन मिश्रेण तोयेन सतते जिताः । रक्त करवीरपुष्पैर्मन्त्र पूतार्घ[12] पूजिताः ॥९॥
व्योमे वा मण्डले वापि सर्व्वकाम फल प्रदा । अर्क पलाश खदिरा अपामार्गोऽथ पिप्पला ॥१०॥

श्री फला शमी[13] दूर्व्वा च कुशाग्राः[14] समिधो मताः ।
धूपं गुग्गुलुलोध्रस्य[15] सज्जं चोल दलं परम् ॥११॥

---

१. षडस् क । २. क पुस्तके नास्ति । ३. हरपीयं क ।
४. वज्रार्द्ध क । ५. क पुस्तके नास्ति । ६. सदाजले क ग ।
७. गृहे सर्वर्त्तुकामिके क । ८. सिद्धकाः क ग । ९. महदासयः क ।
१०. अनु क । ११. भाव प्रकल्पिता क । १२. पूर्णार्घं क ग ।
१३. स फलाशमि क । १४. कुशार्काः क ग । १५. कुंदुर क ।

श्री[1]वेष्टकं कुष्ठञ्च वृक्षादि गुग्गुलं तथा। गुडौदनं रवेर्देयं पायसं हविषान्वितम्[2] ॥१२॥
दध्योदनं बुधे देयं गुरौ क्षीरौदनं तथा। घृतान्नं तिलमासान्नं मासं चित्रौदनं तथा ॥१३॥
गां सुरक्ता[3] रवौ दद्याच्छङ्गी[4]सोमे वृषं कुजे।
काञ्चनं वस्त्रमश्वञ्च गां सुकृष्णामजायसम्[5] ॥१४॥
दक्षिणां गन्ध पुष्पादि स्वं स्वं वर्णं प्रदापयेत्। होम ग्रहादि पूजायै शतमष्टाधिकं पि वा ॥१५॥
अष्टाविंशाष्ट होमन्तु यथा प्राप्तिर्विधीयते। लक्षहोमं प्रकर्त्तव्यं सर्व्व पीडा निवारणम् ॥१६॥
गायत्र्या ग्रहमन्त्रैश्च[6]कुष्माण्डी जातवेदसैः। ऐन्द्र वारुणश्चाग्नैश्च वायु यामस वैष्णवैः ॥१७॥
होमं शत[7]सहस्रन्तु अष्टौत्कृष्टं विधीयते। सर्व्व पीडा विनाशाय कोटि होमं शुभावहम् ॥१८॥
यव व्रीहि घृतं क्षीरं तिलाकङ्गु प्रशान्तिकं[8]। पङ्कजोशीर विल्वाम्र दलं होमे प्रकीर्त्तितम्[9] ॥१९॥
सर्व्व शास्त्रार्थ कुशलै र्ग्रहमातृ प्रपूजकैः। होमं कार्यं सदा विप्र सर्व्व शान्ति प्रदायकैः ॥२०॥
ग्रह कृत्योपसर्गादि ऋतुमास समाः शुभाः। यक्षरक्षः कृता[10]पीडा लक्षहोमात् प्रशाम्यति ॥२१॥

इति श्री देवीपुराणे मातृ ग्रहलक्षहोमविधिर्नाम चतुःपञ्चाशोऽध्यायः[11] ॥

---

१. ग्रा क ग्री ग।
२. हविषात्वित क।
३. सुवर्णा क ग।
४. द्रद्याच्छंस्वं क।
५. सुदृष्टा क ग।
६. वो क ग।
७. गुड क ग।
८. क्षीरं तिलाः कुंगु कशांतिकां क।
९. प्रकीर्त्तिताः क।
१०. वृता क।
११. आद्येऽभ्युदये मातृग्रहलक्षहोमविधि क ग।



# पञ्चपञ्चाशोऽध्यायः ।

शौनक उवाच ।

सर्व्व लोकोपकाराय संक्षेपान्न तु विस्तरात् । उत्पात शमनीं शान्ति श्रोतुमिच्छामि तत्त्वतः ॥१॥

मनुरुवाच ।

अपचारेण लोकानामुपसर्गं महात्मनाम्[1] । अपरक्ता विनाशाय सृजन्ते देवता मुने ॥२॥

उत्पातान् विविधाकारांस्त्रिधावस्थानुपस्थितान्[2] ।
दिव्यान्तरीक्षान् भौमांश्च यथावत्तान् निबोधत ॥३॥

स प्राचीन्दिशमन्वावर्त्तते । अथ यदास्य मणि मणिक कुम्भ स्थाली दरणामायासो राजकुल विवा[3]दो वा यानच्छत्र शय्यासनावसथो ध्वजगृहैकदेशः प्रभज्यते । गजवाजि मुख्या प्रम्रियन्ते हस्तिनी वा माद्यति इत्येवमादीनि तान्येतानि सर्व्वाणि इन्द्र दैवत्यान्यद्भु तानि प्रायश्चित्तानि भवन्ति । इन्द्रं विश्वा अवीवृधमिति[4] स्थाली पाकं कृत्वा[5] पञ्चभिराज्याहुतिः जुहोति । इन्द्राय स्वाहा । शची पतये स्वाहा । वज्रपाणये स्वाहा । ईश्वराय स्वाहा । सर्व्व पापप्रशमनाय स्वाहेति । व्याहृतीश्च पृथक् कृत्वा ॥४॥

स दक्षिणां दिशमन्वा वर्त्तते । अथ यदास्य शरीरे चाविष्टानि[6] भवन्ति व्याधयो वानेक विधाः । स्वप्नमस्वपनाति भोजनमभोजनमतिनिद्रा स्वालस्यं गृहद्वारेण वा सर्पोऽपगच्छते[7] कपोतः प्रविशति । स्त्री शरीरे वारोहति । [8]कृष्ण स्त्री दर्शन मादेश्यम्[9] इत्येवमादीनि तान्येतानि सर्व्वाणि यम देवतान्यद्भु तानि प्रायश्चित्तानि भवन्ति । नाके सुपर्णमिति[10]

१. कृतात्मनां क ग ।
२. उपस्थितान् क ग ।
३. विवाहो क ग ।
४. अधि क ग ।
५. हुत्वा क ग ।
६. वानिष्टा क ।
७. गच्छति क ।
८. वारुहति क ग ।
९. मादेश क ग ।
१०. पुस्तके नास्ति क ।

स्थाली पाकं कृत्वा पञ्चभिर्जुहुयात्[1] । यमाय स्वाहा । प्रेताधिपतये स्वाहा । दण्डपाणये स्वाहा । ईश्वराय स्वाहा । सर्व्व पाप प्रशमनाय स्वाहेति । सर्व्वत्रप्रणवादि स्वाहान्तता व्याहृतीश्च पृथक् कृत्वा ॥५॥

सप्रतीचीं दिशमन्वावर्त्तते । अथ यदास्य क्षेत्रे गृह संस्थेषु धान्येष्वीभय आरण्ये पशु मृगाश्चा रौहन्ति । आखु पतङ्ग पैपीलिका शाशक भौमक सूक्ष्मक शलभ इत्येवमादीनि तान्येतानि सर्व्वाणि वरुण देवतान्यद्भु तानि प्रायश्चित्तानि भवन्ति । वरुणं वा विशादण्डमिति स्थाली पाकं हुत्वा पञ्चभिर्जुहुयात् । वरुणाय स्वाहा । अपास्पतये स्वाहा । पाशपाणये स्वाहा । सर्व्वपापशमनाय स्वाहा । ईश्वराय स्वाहेति । व्याहृतिभिश्च पृथक् कृत्वा ॥६॥

स प्रत्युदीचीं[2] दिशमन्वा वर्त्तते । अथ यदास्य मणि कनक रजत वस्त्र वज्र वैदूर्य्य मणिक वियोगा भवन्ति ।आरम्भकाणि च विपद्यन्ते । मित्राणि वा विरज्यन्ते । वेश्मनि अवावूनि वा जायन्ते । वल्मीकाश्चोद्धृयन्ते[3] । शुष्क वृक्षाः प्ररोहन्ति । तैलं त्यजन्ति[4] । मधूनि वा पीयन्ते । रात्राविन्द्रधनु द्रष्ट्वा श्वेताश्वेतञ्चवा[5]यसं । श्मशाने धूमो जायते । अश्वतरी वा गर्भं[6] गृह्णाति इत्येवमादीनि तान्येतानि सर्व्वाणि वैश्रवण देवतान्यत्य-द्भु तानि प्रायश्चित्तानि भवन्ति । आदित्यं देवमिति स्थालीपाकं कृत्वा पञ्चभिराज्या-हुतिभिः जुहुयात् । वैश्रवणाय स्वाहा । यज्ञाधिपतये स्वाहा । हिरण्य पाणये स्वाहा[7] । ईश्वराय स्वाहा । सर्व्वपाप शमनाय स्वाहेति । व्याहृतिभिश्च पृथक हुत्वा ॥७॥

स पृथिवीमन्वा वर्त्तते । अथ यदास्य पृथिवी स्फुटति । कूजति, कम्पति, धूमायति अकस्मात् सलिलमुद्गिरति । अकाले च वृक्षाः पुष्पफलानि वा वर्त्तन्ते । इत्येवमादीनि तान्येतानि सर्व्वाणि अग्निदैवत्यानि अद्भु तानि प्रायश्चित्तानि भवन्ति । अग्निं हुतमिति स्थाली

---

१. आज्याहुतिभि ग ।
२. स यदि उदियम् ग ।
३. वाल्मीका कोध्रियंते क ग ।
४. स्विद्यंते क ग ।
५. दिवाश्चेतं क ग ।
६. गर्द्धसम् ग ।
७. अच्चिद्य् हाणये स्वाहा क ग ।

कृत्वा पञ्चभिराज्याहुतिभिः अभिजुहोति । अग्नये स्वाहा । अर्चिष्पतये स्वाहा । ईश्वराय स्वाहा । सर्व्वपाप शमनाय स्वाहेति । व्याहृतिभिश्च पृथक् पृथक् हुत्वा ॥८॥
सोऽन्तरीक्षमन्वा वर्त्तते । अथ यदास्यान्तरा[1]वर्षाणि चोल्काः पतन्ति । निपतन्ति, धूमायन्ति, दिशो दह्यन्ति । केतवश्चोत्तिष्ठन्ते । गवां शृङ्गेषु रुधिरं स्रवन्ति । अत्यर्थं हिमान्युत्पतन्ति । इत्येवमादीनि तान्येतानि सर्व्वाणि सोमदैवतान्यद्भुतानि प्रायश्चित्तानि भवन्ति । सोमं राजानमिति स्थालीपाकं कृत्वा पञ्चभिराज्याहुतिभिरभिजुहोति पृथक् पृथक् । सोमाय स्वाहा । नक्षत्राधिपतये स्वाहा । सीरपाणये स्वाहा । ईश्वराय स्वाहा । सर्व्वपाप शमनाय स्वाहेति । व्याहृतिभिश्च पृथक कृत्वा ॥९॥
स दिव मन्वावर्त्तते । अथ यदास्य विधाता धार्यते[2] । वाता वायन्ते । अभ्रेषु करकाणि दृश्यन्ते खरकरभकङ्कोलूक गृध्रश्येन भास वायस कपोत गोमायुसंस्थान्युपल पांशु मांस पश्वस्थि रुधिर वर्षाणि प्रवर्त्तन्ते । इत्येवमादीनि तान्येतानि सर्वाणि वायुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति । इदं विष्णु विचक्रम इति स्थालीपाकं कृत्वा पञ्चभिराज्याहुतिभिरभिजुहोति । विष्णवे स्वाहा । सर्व्वाधिपतये स्वाहा[3] । चक्रपाणये स्वाहा । ईश्वराय स्वाहा । सर्व्वपाप शमनाय स्वाहेति व्याहृतिभिश्च पृथक् पृथक्[4] ॥१०॥
भूमिकम्पो दिशां दाहो ग्रहयुद्धश्च जायते । गगने दृश्यते केतुरादित्यश्चैव कम्पते ॥११॥
आदित्याज्जायते च्छिद्रं कृष्णवर्णो हि जायते । विपरीतान्नदींश्चैव रुधिरश्च प्रवाहयेत् ॥१२॥
शिला वा प्लवते यत्र रविर्मध्ये यदा क्वचित् । गगनात् श्रूयते दिव्यं निर्घातश्चैव जायते ॥१३॥
अत्यद्भुतं महाघोरं सृष्टि संहार कारकम् । राज्योपसंहरञ्चैव राजानां क्षयकारकम् ॥१४॥
इत्येवमादीनि तान्येतानि सर्व्वाण्यद्भुतानि प्रायश्चित्तानि भवन्ति ।
गृहे गृहे भवेच्छान्तिः मातृणां पूजनं बलिः । दानं रुद्रं जपेन्नित्यं भास्करेज्या ग्रहार्च्चनम् ॥१५॥

---

१. तारा वर्षाणि क ग । २. धार्यते ग ।
३. सर्वदेवाधिपतये स्वाहा ग । ४. हुत्वा पृथक् क ग ।

लक्षहोमं महाहोमं कोटिहोमं पुरोदितम् । गोभू हिरण्य वस्त्रान्न तिलदानं शुभावहम् ॥१६॥
पायसं दधिक्षीराज्यं देयं सर्व्वेषु भोजनम् । एवं प्रजायते शान्तिस्ततो द्रव्याणि आहरेत् ॥१७॥
तानि तोयेन प्रोक्षीयादुपहाराणि यानि तु ।

अथ पूर्व्वाह्ने च यथा[1] वदाज्ये चाहुतिं हुत्वा दूर्व्वा[2] पयोदधिसर्पिः सर्षपान् फलवती अपामार्ग तिल व्रीहि-यव-समिधान्येतान्याहरेद्वा स्नातः प्रयतः शुचिः शुचिवासाः स्थण्डिलमुपलिप्य नित्य तन्त्रेणोदन-कृषर-यवागू-सक्तु-पायसं-दधिमधु घृताक्ताः पृथक् च वरः सर्व्वेषां वा पायसं ततः अग्निमुपसमाधाय जुहुयात् यथावदिति ॥१८॥

इति श्री देवीपुराणे सार्व्वदैविकी सर्व्वोत्पात शान्तिर्नाम पञ्चपञ्चाशोऽध्यायः[3] ॥

१. प्रातराहुतिभ् क ग ।   २. दूर्वा उग्रीनिमि ग ।
३. महाम्युदयादि सार्वदैविकी सर्वोत्पात शांतिः समाप्त ग ।



# षट् पञ्चाशोऽध्यायः ।

इन्द्रं विश्वा अवावृषं समुद्रव्य च संशिरः[1] । रथीतमं रथीनां वा राजानां शतपतिं पतिम्[2] ॥१॥

नाके सुपर्णमुपत्यांत हवा रेवन्तो[3]अभ्य च क्षत त्वा[4] ।

हिरण्याक्षं[5]वरुणस्य दूतं[6]यमस्य भूरण्यं योनौ शकुनम्[7] ॥२॥

वरुणं वोधिपादमृचामिन्द्रं[8]हवामहे । परिव्रजेच्चव वाह्वोर्जगन्धाशो स्वर्णवं नरम्[9] ॥३॥

आदित्यं[10]देवं सविता मन्योः कवि क्रतुमर्च्चामि[11] ।

सत्यसवं[12]रत्न धामभि प्रियमतितरं कविम् ॥४॥

ऊर्ध्वं यस्या मतिभा आदित्युत्सवो मणि । हिरण्यपाणि त्वमिमीते सुक्रतुः कृपापयः ॥५॥

अग्निं दूतं वृणीमहे होतारं विश्व वेदसम् । अस्य यज्ञस्य सुक्रतम्॥६॥

सोमं राजानं भवते अग्निमन्वारभामहे । आदित्यं[13]विष्णुं सूर्य्यं ब्राह्मणञ्च वृहस्पतिम् ॥७॥

इदंविष्णु विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांशूले ॥८॥

वात आवात भेषजं शन्तु मया त्तना कुदे । प्रणतायुंषि तारिषत्[14] ॥९॥

गौरीमिमाय सलिलानि[15]तक्षत्येकपदी द्विपदी सा चतुष्पदी ॥१०॥

अष्टापदी नव पदीं भूमीं सहस्राक्षं वा परमे व्योमन् ॥११॥

काण्डात् काण्डात् प्ररोहन्ती पुरुषः पुरुषः परि । दधानो[16] दूर्व्वे प्रतनु सहस्रेण शतेन चेति ॥१२॥

---

१. संगिरः क ग । २. इद्रं अश्चावधी वृधसे अत्रव्य विसंगिरः । स्थीत संज्ञं रथानां वाजीनां सतापतिं क ग ।
३. अवनंतो क । ४. न्यवक्रतत्वा क । ५. हिरण्यक्षं क ।
६. भूतं क । ७. यमस्य योनौ शकनंतुरण्यं क ।
८. वरुणं वेविसाद मृचा मित्रं शकलं मुरण क ग । ९. वार्ह्रोर्जगंधीत् सास्वन्नरं क ग ।
१०. आल्यं क । ११. सविता रामाण्यंकार क । १२. पत्की नं सन्ति क ग पुस्तके ।
१३. सोमं राजं वरुणं यमं मनुत्व भिरङ्गिरमि सिचामि क ग ।
१४. भेषजं संभु मया तुना कुदे प्रण आयंमितारिषत् क ग । १५. गौरीमिमये सलिलानि क ग ।
१६. परिभानां क ग ।

यथैव यज्ञस्तथैव बन्धूर्यासि तनोसि प्रतनोसि अथैनमभिवाद्य[1] वाचयति ।

ध्रुवोसि ध्रुवोऽयं यजमानो ऽस्मिन्नायतने प्रजया भूयासमिति[2] ॥१४॥

पशुभिरिति चैवं यं कामं कामयते सोऽस्मै कामः[3] समृद्ध्यते ॥१५॥

यो जानाति न[4] जीयते हन्ति शत्रुमभिद्रुय स एव भवेद् वसु सहस्रजित् ॥१६॥

इहैव स्तं मा वियौष्टं दीर्घमायु व्यश्नुतम् । क्रीडन्तौ पुत्रैर्नप्तृभिः मोदमानौ च स्वे गृहे ॥१७॥

पुनः पत्नी अग्निवदायुषा सह वर्च्चसा ।

दीर्घायु रस्यापः पतिभि र्जीवाति शरदः शतम् ॥१८॥

स्थालीपाकादिकर्म विधिरुच्यते । परिसमूह्य-उपलिप्य-उल्लिख्य-उद्धृत्य-अभ्युक्ष्य-अग्निमुपसमाधाय-दक्षिणतो ब्रह्मासनमास्तीर्य-प्रणीय-परिस्तीर्य-आत्मवदासाद्य-पवित्रीकृत्वा-प्रोक्षनी-संस्कृत्य-आत्मवत् प्रोक्ष्य-निरुपाधमधिस्तुत्य-पर्यग्निकुर्यात् ॥१९॥

स्रुवं प्रताप्य समृह्य अभ्युक्ष्य पुनः प्रताप्य निदध्यात् संत्ताप्योत्पूय अवेक्ष्य प्रोक्षणी पूर्ववदुपयमनान् कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् । एष एव विधिर्यत्र क्वचिद्धौमः ॥२०॥

परिसमूहनादिभिर्देवता प्रतिभागमंत्राश्च व्याख्यास्यामः ॥२१॥

यद्देवो देवहेलनमिति परिसमूहनम् । मानस्तोकेत्युपलेपनम् । त्वां वृत्रे जिन्द्र सत्पतिम् इत्युल्लिख्य । व्रजं गच्छेत्युद्वृत्य । देवस्य त्वेति अभ्युक्ष्य । अग्निमृत्वेति अग्निमुपसमाधाय । समिधाग्नि द्रव्यस्य चेति समिदाधानं दधात् ॥२२॥

मयि गृह्णामीति अग्रहस्तं कृत्वा हिरण्यगर्भ इति दक्षिणतो ब्रह्मा । आपो हिष्ठेति च उत्तरतः प्रणीता । कयानश्चित्रा इति प्रणीत्य परितः परिस्तरणम् । पवित्रस्थो वैष्णव्य इति पवित्रछेदनी । इषेत्वेत्याज्यनिरुपणम् ॥२३॥

त्रातारमिति स्रुवं प्रताप्य । अनिशितोषि प्रकृत्याभि सम्मार्जनम् । प्रत्युष्टं रक्षेति पुनः प्रतपनम् ॥२४॥

---

१. वेद्य क ग । २. भूयादिति क ग । ३. सोस्मिकस्यः क ।
४. योजिनातिन क ग ।

सवितुर्वः प्रसव तत् पुनामि इत्युत्पवनम् । तदेवाग्निरित्यर्च्चनम् । धूरसीति पर्युक्षणम् ॥२५॥
एवं लक्षण संयुक्तं सर्वहोमेषु याज्ञिकम् । विधानं विहितं तत्र ब्रह्मणामित तेजसा ॥२६॥
अन्यथा ये प्रकुर्वन्ति सूत्रमाश्रित्य केवलम् । निर्वासास्तत्र गच्छन्ति सर्वे देवा न संशयः ॥२७॥
यद्देवा देवहेलनं देवासश्च कुमारयम् । अग्निर्मतिः स्यादेन गोविश्वान् मुञ्च त्वंहसः ॥२८॥

इति परिसमूहनमन्त्रः ।

मा नः स्तोके तनये मा न आयूषि मानो गोषु मानो अश्वेषु रीरिषः । मानो वीरान्रुद्रभामिनोऽवधीः हविष्मन्तः सदमित्वा हवामहे । उपलेपनमन्त्रः ॥२९॥

त्वां वृत्तेष्विन्द्र सत्पतिं भवत्वां काष्ठां सर्व्वतः । सत्वन्नाश्चित्र वज्रस्ते वष्ठपा मस्तुवानोऽयुवः । गामश्वं रथ्यामिन्द्रं सत्किरमत्राराज्यं न जिग्मये ॥३०॥

इत्युल्लिखन मंत्रः ।

व्रजं गच्छ गोष्ठामं वर्ष तु तेभ्यो वर्धान्न् । देवसवितः परमस्यां पृथिव्यां शतेन । पाशैर्यस्मान् द्वेष्टि यं च वयं द्विष्मः । उद्धृत्यमंत्रः ॥३१॥

देवस्य त्वा सवितुः प्रसवेऽश्विनौ वाहुभ्यां पूष्णो हस्ताभ्यां अश्विनौ भैषज्येन तेजसे ब्रह्मवर्चसाभिषिचामि । अभ्युक्षणमंत्र ॥३२॥

अग्निमूर्धः दिवः ककुत्पतिः पृथिव्या अपं । अपाँ रेतांसि जिन्वति स्वाहा । अग्निवाहनमंत्रः ॥३३॥

समिधाग्नि ध्रुवस्य ते । घृतैर्बोधयतातिथिम् अस्मिन् हव्या जुहोत नः । सुसमिद्धा यशोचिषे घृतं तीव्रं जुहोति नः । अग्नये जातवेदसे । इति समिदाधान मंत्रः ॥३४॥

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुते माम् कस्मै देवाय हविषा विधेमः ॥ इति ब्रह्ममंत्र ॥३५॥

आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ प्रणीतायुष्यमंत्र ॥३६॥

---

१. गिर ग ।  २. सत्पतीं पतिम् ग ।

कथा नश्चित्र आभूवद्दूती सदा वृधः सखा । कथा शचिष्ठया वृता । इति प्रणीता परिस्तरण मंत्रः ॥३७॥

पवित्रेऽस्थो वैष्णव्यौ सवितुर्व्वः प्रसव उत्पुनामि अच्छिद्रेण । परिच्छेदनमन्त्रः ॥३८॥

इषेत्वो र्जेत्वा वायवस्थः देवो वः सविता प्रार्पयतु । सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे॥

इति आज्य निरुपण मंत्रः ॥३९॥

त्रातारमिन्द्रं सवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रं ह्वयामि । शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः । इति स्रु व प्रतपन मंत्रः ॥४०॥

अनिशितासि सतपनं क्षित्वा जिनीं द्वाजराजे ध्याये सम्मार्क्षि आदित्यैवास्नातो सीन्द्राण्यै । इति समूहनम् ॥४१॥

विष्णोर्वैशौऽर्यापूर्जित्वा दलेन त्वां चक्षुषा पश्यामि । इति संमार्जन मंत्रः ॥४२॥

प्रत्युष्टं रक्ष प्रत्युष्टा अरातय । योनिष्ठेऽप्युत् वक्षोनिष्ठरं भरातये पुनः । इति प्रतापनमंत्रः ।४३॥

धूरसि धूर्व्वन्ते धूर्वत्वां या अस्मान् यस्त्वयं धूर्व्वामिः ॥ धूर्ववतिधूर्ववतम् । देवानामसि वह्नितमं स्वस्तितमं पप्रितमं जुष्ठतमं देवहुतमं आहुतमं हविर्धानि मृचेश्वमीछामी ते यज्ञपतीवार्षीः। इति पर्युक्षणमंत्र ॥४४॥

प्रजापतये स्वाहा । इन्द्राय स्वाहा । अग्नये स्वाहा । सोमाय स्वाहा । अन्तरिक्षाय स्वाहा । ओं भू स्वाहा । ओं भुवः स्वाहा । ओं स्वः स्वाहाः । इति मूलहोमाहुतयः ॥४५॥

एवं वेदिकोऽग्निः संष्दुतो भवति । अथातः परिस्तरण देवताः कथ्यन्ते ॥४६॥

परिसमूहने काश्यपः । उपलेपने विश्वेदेवाः । उल्लेखने मित्रा वरुणौ । उल्लिखने पृथ्वी । अम्पुक्षणे गंधर्वा । अग्निः सादने शर्वः ॥४७॥

मनुरुवाच ।

परिसमूह्योपलिख्योल्लिखन कर्मविधिरुच्यते । दक्षिणासादने ब्रह्मा । उत्तरतः पूरणे सागराः । आस्तरणे त्रसाः । अथावसादने शतक्रतुः । पवित्रवन्धने पितरः । प्रोक्षणी संस्कारे मातरः ॥४८॥

जुह्वते श्रुवे श्रुवापाश्च ब्रह्मविष्णुमहेश्वराः । आज्यातपने वसवः । अधिश्रवणे वैवस्वतः । पर्यग्निकरणे मरुतः । उद्वासने स्कन्दः । उत्पन्न प्रत्युत्पवने चन्द्रः द्यौः ॥४९॥

आज्यावेक्षणे दिशः सर्वाः । पवित्रधारणे प्रणीताः । यामुमा देवी । ईध्मे च लक्ष्मीः । विश्वस्य विश्वाभूतानि ॥५०॥

पूर्वोक्तानान्तु वह्नीनामेकमानीय पावकम् । होमकर्म प्रकर्त्तव्यं विधि ज्ञात्वा महामुने ॥५१॥
एता वै देवताः प्रोक्ता ब्राह्मणानां हिताय वै । यज्ञेषु पशुबंधेषु सर्वयज्ञ क्रियासु च ॥५२॥

इति श्री देवीपुराणेभ्युदयपादे हवनविधिर्नाम षट्पंचाशोऽध्यायः[1] ।

१. हवनविधिः समाप्त कग ।



# सप्तपञ्चाशोऽध्यायः ।

मनुरुवाच ।

धेनुं तिलमयीमाघ्यां दद्याद् पुरुषश्चोत्तरायणे । सर्व कामानवाप्नोति ज्यैष्ठे जलमयीं ददेत् ॥१॥

पुष्ये घृतमयीं दद्याच्छ्रेष्ठाहि विधिना मुने । इहितांल्लभते लोकान् स्थानेषु विविधेषु च ॥२॥

शौनक उवाच ।

प्रभवादि त्वया तात देव्याः षष्टिरुदाहृता । विस्तरात् पूजनं तासां कालान्तरफलप्रदम् ॥३॥

संक्षेपादेककायस्थां[1] देवीमातृग्रहान्विताः । त्रिदिव लोकपालेन संयुक्ताः सर्व्वकामदाः ॥४॥

षष्टिवर्षकृता पूजा मासैकेन[2] प्रयच्छति । तथा कथय मे सर्व्वं सर्व्वलोकसुखावहम् ॥५॥

मनुरुवाच ।

हेम राजतताम्रा[3]वा काष्ठाद्या मृन्मयापि वा । चित्रा वा रत्नजा चापि कार्य्या देवी सुलक्षणा ६॥

शुभद्रव्यभवा चान्या सिंह पद्मग्रहान्विता । मातरो भय संयुक्ता चर्च्चिता[4]मुकुटान्विता ॥७॥

गणेशस्कन्द सम्पन्ना लोकपालसमन्विता । ब्रह्मेशविष्णु शिरसा नीलोत्पलकरा वरा ॥८॥

खड्ग खेटकधारी च शरच्चन्द्रकरापि वा । चन्द्र सूर्य्यकरा कार्य्या यावत् षष्टि कृताधिका[5] ॥९॥

द्विभुजां भावरूपेण कारयेद् भुजकल्पनाम् । एवं कृत्वा शुभां देवीं इन्द्रमणि गृहे यजेत्[6] ॥१०॥

द्विवद्धा शतमष्टौ च[7] शरदण्डमथापि वा । सौम्यास्ये सौम्यसंस्थानां[8] यश्चास्यन्तैजसे गृहम् ॥११॥

तस्य पूर्वे समं कुण्डं कार्य्यमैन्द्रं सुखावहम् । पूर्व्वास्यं पश्चिमास्यं वा यत्र वा रमते मनः ॥१२॥

---

१. कामस्था ग ।
२. समैके न ग ।
३. हेमताम्रगयीं वापि क ग ।
४. चर्चिकां क ग ।
५. यावच्छान्तिः कृताधिका क ।
६. रुद्रमाते ग्रहे यजेत् क ग ।
७. द्विभुध्या शत यष्टी करदंडं क ग ।
८. सौम्य संस्थानां ख ।

ततः पूजा जपं होमं मन्त्रस्तोत्र प्रकीर्तनम् । यात्रा मण्डलपूजा च पुस्तकादेश्च पाठनम् ॥१३॥

लोक यात्रा रथ यात्रा कार्यं होमं दिने दिने ।

घृत-क्षीर-मधु-व्रीहि-तिल-बिल्व-दलादिकम् ॥१४॥

होमं कार्य्यं सुगन्धैश्च धूपैः पुष्पै सदार्च्चनम् । कर्पूरा गुरुलेपादि वितानध्वज चामरम् ।

देयं सर्वार्थ सिद्ध्यर्थं सर्व्वपाप प्रणाशनम् ॥१५॥

ब्रह्मोवाच ।

मेषादारम्य देवीनां पूजा कार्य्या सदा मुने । यावत् संवत्सरं पूर्णं सर्व्वकामफलार्थिभिः ॥१६॥

दिलीपेन यथा पूर्वं पूजां कृत्वा क्रमागताम् । सुरोत्तमे महाकल्पे भाग्यऋद्धिस्वकामिना ॥१७॥

तथा च अम्बरीषेण अन्यैश्च नृपसत्तमैः । कृता शिवार्चने बुद्धिस्तिथिकालक्रमागताः ॥१८॥

यो विभाज्य पुरा ह्येकः कालव्यापी[1] महेश्वरः । सर्वदेवतनु र्भूत्वा प्रयच्छति फलं नृणाम् ॥१९॥

यज्ञमाज्यं तथा पूपं वेदवक्त्र[2] स मन्वितः । दत्वा फलं द्विजातिषु पूतैः सर्व्वेषु धर्म्मिषु ॥२०॥

सर्वां च मङ्गलां रूपां कृत्वा चाष्टशतां तनुम् ॥२१॥

पुनाति सर्वलोकान् स क्रियाभावाङ्गमीश्वरः । सर्व्वेषु चागता देवी सर्व्वदेवै रभिष्टुता ॥२२॥

वैष्णवीं तनु[3]मास्थाय स्थिता सा व्यवहारतः ।

वर्णाश्रमागतान् धर्मान् यथाकालं क्रमागतान् ॥२३॥

तथा तथा सुरेशान प्रयच्छति नृणां सदा ।

रजस्तोमां[4] विजानीयात् सृष्टिहेतुं स्थितौ पुनः ॥२४॥

विष्णुः सत्त्वं गतो नाशे कालः सततमाश्रितः[5] । त्रयाणां समतां वत्स महादेवः सदाशिवः ॥२५॥

स ईशः सर्व्वदेवानां नाना भेदगतः पुनः । क्रियाख्या ज्ञान भेदेन शतधाथ सहस्रशः ॥२६॥

भेदो न शक्यते वक्तुं लोकेषु स्वल्पबुद्धिषु । एवं विदित्वा भिन्नेच्छा इष्टापूर्त्तगतं विभुम् ॥२७॥

---

१. कालरूपी क ग ।
२. वेदोक्तङ्कारक्तमान्वितः ख ।
३. तत्त्वं ग ।
४. रजस्थोर्मा क ।
५. शतसमाश्रितः क ।

पूजनीयं मुनिश्रेष्ठ सर्व्वकामेश्वरेश्वरम् ।
एकानैक[1]विभागस्थं सर्व्वशास्त्रे क्रियायुतम्[2] ॥२८॥

कामरूपी महादेवं कामदं भवते नृणाम् । सुरासुर मनुष्याणां यक्षरक्षोरगादिषु ।
फलं प्रयच्छति चेष्टं सर्व्वबुद्धिः प्रभावजम् ॥२९॥

कर्म्मयज्ञस्तपोयज्ञः स्वाध्यायं च शान्तिदम्[3] । प्रयच्छति फलं यस्मात् पंचधा परमेश्वरः ॥३०॥

तस्मात् तस्य सदा चर्य्या कर्त्तव्या हितमिच्छता । हितन्तु चेष्टं संसिद्धि निरवद्यं सुखं यतः ॥३१।

सर्व्वद्वन्द्व विनिर्म्मुक्तो ध्यानयोगं[4] सदाभ्यसेत । तच्च भक्ति क्रमात् प्राप्यं कर्मयोगाच्चान्यथा ।
कर्म्म पूजा जपो होमं देवार्चास्थापनादिकम् ॥३२॥

इति श्री देवी पुराणे त्रैलोक्याभ्युदये पादे पूजा प्रशंसा नाम सप्तपंचाशोऽध्यायः[5] ॥

---

१. एवं नैक क ग ।
२. क्रियातनुम् क ग ।
३. स्वाध्यायध्यान शान्तिदं क ।
४. धनयोगं समाचरेन् ग क ।
५. त्रैलोक्याभ्युदये पूजाप्रशंसा ग क ।



# अष्टपञ्चाशोऽध्यायः ।

बृहस्पतिरुवाच ।

कथं स राजां भाग्यन्तु सर्व्वलोकाधिपो विभुः ।
कथञ्च दिव्यतां यायाद् विष्णु सायुज्यतां विभो ॥१॥
सर्व्वदैवेश्वरस्तस्य कथं तुष्ट उमापतिः[1] । एतत् कौतुहलं देव श्रोतुमिच्छामि तत्वतः ॥२॥

ब्रह्मोवाच ।

कल्पे सुरोत्तमे पूर्व्वं कैलासे पर्व्वतोत्तमे । दिव्येन तपसा युक्तं भाग्यर्क्षे तोषितं शिवम् ॥३॥
तेन वरप्रसादेन सर्व्वलोकेश्वरा द्विज[2] । भाग्यो ह्यासीन्महाबाहो सर्व्वं देवैरभिष्टुतः ॥४॥
मेधादिगुण संयुक्तः कामक्रोधादिवर्ज्जितः । सांवत्सरस्तथामात्यः पुरोधा भिषजान्वितः ॥५॥
सांवत्सरोऽथ तत्रज्ञ अमात्य सर्व्व शास्त्रवित् । पुरोधा वेदपौराण दंड्याथर्वशास्त्रवित् ॥६॥
दश यज्ञ क्रिया देवा हितकृदहितोऽन्यथा । भिषजोऽष्टाङ्गः वेदाज्ञो[3] लघुहस्तो जितेन्द्रियः ॥७॥
अनुरक्तस्तथा भक्तो द्वन्द्वाद्वन्द्वगुणान्वितः । कोषं रत्नादि सम्पन्नं सुभक्त भोगसंयुतम् ॥८॥
भार्या इष्टा हिता नित्यं पुरं हर्म्यसमाकुलम् । अश्वेभवाहनं पुष्टं तस्य चासीद् द्विजोत्तमः ॥९॥
एवं सर्व्व गुणोपेतं पुरोधानुमते स्थितः । सांवत्सरोदिते काले[4] विजयाय समारभेत् ॥१०॥
ततः कालेन महता शङ्करस्य नृपोत्तमः । तपश्चरन्महातेजा पुत्रायुत समावृतः ॥११॥
प्राप्ते संवत्सरे पुण्ये युगेऽपितु[5] निरामये । भाग्यर्क्ष द्वादशी नाम सर्व्वभाग्यप्रदायिका ॥१२॥
तत्र कृत्वा हरेरर्च्चां यष्टा पद्मे यथाविधि । सर्व्व लक्षण सम्पन्ना श्रेष्ठमृक्षभवा मुने ॥१३॥
शर्कराद्धंहरिं पुंसः उमेशं स्थापयेद् बलात् । भक्त्या सर्व्वोपहारेण द्वादशारे तु मण्डले ।
आद्येन चक्रराजेन पूजितं मधुसूदनम् ॥१४॥

---

१. तुष्टमुमापतिः ख । २. लोकेश्वरा द्विजा ख । ३. वेदज्ञो ग ।
४. साम्वत्सरो यथाकाले ग । ५. यागानि तु ख ।

तुतोष तस्य नृपतेस्तेन भाग्यत्वमाप्नुयात् । तुष्टेन देवदेवेन वरं दत्तं द्विजोत्तमम् ॥१५॥
अनिरुद्धस्तु त्वं वत्स मम तुल्यो भविष्यसि । शंखचक्रासि पाणिस्त्वं सर्व्वकामाँल्लभिष्यसि ॥१६॥
कृत्वा दिव्यायुतं राज्यं मम सायुज्यमाप्यसि ।भाग्यस्यैकादशार्क्षं न्तु तेन चान्यापि या तिथिः ॥१७॥
तस्मिन् संपूजिता देवाः सर्व्वकामप्रदायकाः । प्रभवादि समे श्रेष्ठे युगे चैव मनोरमे ॥१८॥
भाग्याख्या द्वादशी तात अष्टम्यां वा तदर्च्चनम् । यागमण्डल पूजाचर्वा हरिमुद्दिश्य कारयेत् ॥१९॥
आचार्य्याय प्रदातव्यं हेमगोभूतिलादिकम् । दक्षिणा आत्मसारेण पुनाति नरकार्णवात् ॥२०॥
युगं भाग्यप्रभावेण प्रयच्छति फलं हरिः । यथा काले च क्षेत्रे च एकापि कणिका मता ॥२१॥
प्रयाति शतधा वृद्धि यथा चाद्ये युगे द्विजः । यथा माघे तथा पौष्ये वासरेऽपि द्विजोत्तम ॥२२॥
तुल्यं पुण्यं विजानीयाद् द्वादश्यामष्टमीषु च । तुष्यते देव देवेशः शशाङ्काङ्कित[1] शेखरः ॥२३॥
पुत्रायु–राज्य–सौभाग्यं प्रयच्छति जनार्दनः । यः पुनर्माघमासेन करोति हरिरर्च्चनम् ॥२४॥
पद्मे सुलक्षणोपेते वर्णकैरुपशोभिते । तस्य तुष्यति देवेशश्चक्रपाणि र्जनार्द्दनः ॥२५॥

इति श्रीदेवीपुराणे भाग्यद्वादशी नामाष्टपञ्चाशोऽध्यायः[2] ॥

---

१. शरं कोङ्कितशेखरः ग ।
२. त्रैलोक्याभ्युदये भाग्यद्वादशी क ग ।



# एकोनषष्टितमोऽध्यायः

ब्रह्मोवाच ।

सर्व्वकाम प्रसिध्यर्थं पूजनीया यथा शिवा । तथा ते कथयिष्यामि शृणु वत्स समासतः ॥१॥
चैत्रादौ या समाख्याता पूजा सर्व्वार्थ साधनी । तस्या[1] भेदान् प्रवक्ष्यामि इष्टापूर्ति प्रसिद्धये ॥२॥
चैत्रां[2] चित्रक्षणां पूजा कृत्वा त्वष्टा फलं लभेत । तृतीयायान्तु वैशाखे रोहिण्यर्क्षे प्रपूजयेत् ॥३॥
उदकुम्भ प्रदानेन ब्रह्मलोके महीयते । इन्द्राग्नि दैवते मृदो पौर्णमास्यां तथैव च ॥४॥
पूजां कृत्वा भवेद् ब्रह्मन् विगताघो नरोत्तमः । अग्नौ परिग्रहः कार्य्यो दानं देयं द्विजातिषु ॥५॥
त्रयाणामेकमादाय अग्नि देवीं प्रपूजयेत् । अग्निहोत्री भवेत् पूतः शेषं वर्णाकितं फलम् ॥६॥
मूलर्क्षे पशुपातेन ज्येष्ठां देवीं प्रपूजयेत् । सर्व्वकामानवाप्नोति भावशुद्धेन कर्म्मणा ॥७॥
आषाढे मासि यो देवीमाषाढर्क्षे प्रपूजयेत् । सर्व्वान् कामानवाप्नोति देवी लोकं च गच्छति[3] ॥८॥
श्रावणे पूजयेद् देवीं प्रतिपद्यादितः क्रमात्[4] । ब्रह्ममूर्तिगता ऋक्षे पौष्ये भौजङ्गमेऽपिवा ॥९॥
अथवा सुविधानेन पवित्रारोहणं भवेत् । ब्रह्माग्न्युमा गणेशस्य नागस्कन्धतनुस्थिता ॥१०॥
रविमातर रूपा तु मङ्गलायनरूपगा । वृषविष्णु समाकारा कामरुद्र समाकृती ॥११॥
शक्ररूपा प्रयष्टव्या देव्या गन्ध स्रगादिभिः । प्रथमे चाश्रमे पूजा गृह्य कर्म व्रतादि च ॥१२॥
कृत्वा कामानवाप्नोति विगताघो मुनीश्वरः । प्रौष्ठे पौर्णासु कर्त्तव्या पूजा जागरणं निशि ॥१३॥
महोत्सवविधानेन सौत्रामणिफलं लभेत् । अष्टम्यां रोहिणीं ऋक्षे सोपवासन्तु पूजयेत् ॥१४॥
विष्णुलोकमवाप्नोति सर्व्वकाम समृद्धिदम् । तत्रैव कारयेद् देवीं पितृरूपां[5] महोदयाम्॥१५॥

---

१. तस्य भेदान क ग।

२. ग पुस्तके श्लोकद्वयं नास्ति ।

३. पद्यमिदं ग पुस्तके नास्ति क पुस्तकेऽपि नास्ति ।

४. धामात् क ।

५. पितृरूपीं ग ।

कन्यास्थे च रवौ वत्स पूजनीया यथाविधि । भौजङ्गीं तिथिमाश्रित्य[1] यावच्चन्द्रार्कसंगमम् ॥१६॥
ऋक्षे पिण्ड प्रदानन्तु ज्येष्ठ पुत्रीं विवर्ज्जयेत् । आहवेषु विपन्नानां जलाग्नि[2] भृगुपातिषु ॥१७॥
चतुर्दश्यां भवेत् पूजा अमावस्यान्तु कार्त्तिकी । कन्यास्थे तु रवौ दिवे शुक्लाष्टम्यां प्रपूजयेत् ॥१८॥
सोपवासो निशार्द्धे तु महाविभवविस्तरैः । पूजां समारभेद् देव्या ब्रह्मर्क्षे[3] वरुणेऽपि वा ॥१९॥
पशुघातः प्रकर्त्तव्यो गरलाजवधस्तथा । बलिक्षेपस्तु रक्षाणां कार्य्यः सर्व्वेषां शान्तये ॥२०॥
रथयात्रा प्रकर्त्तव्या या पुरा संप्रकीर्त्तिता । महोत्सवं महापुण्यं तस्मिन् देवी प्रपूजयेत् ॥२१॥
तुलास्थे दीपदानेन पूजा कार्य्या महात्मना[4] । दीपवृक्षाः प्रकर्त्तव्या दीप चक्रास्तथापरा ॥२२॥
दीपयात्रा प्रकर्त्तव्या चतुर्द्दश्यां कुहूषु च । सिनी[5] वाली स्तथा वत्स तदा कार्य्यं महाफलम् ॥२३॥
सर्व्वशेषे प्रकर्त्तव्यं बलिपूजा होमोत्सवम्[6] । देवतानां समुत्थानं कार्य्यं पौष्णासु बुद्धिमान् ॥२४॥
नैराजनं प्रकर्त्तव्यं नृनागतुरगादिषु । कार्त्तिक्यां कारयेत् पूजां यागं देवीप्रियं सदा ॥२५॥
ब्रह्मविष्णु शिवादीनां तत्र पूजा महाफला । गवां सर्गं प्रकर्त्तव्यं नीलं वा वृषमुत्सृजेत् ॥२६॥
सर्व्व यज्ञ फलं ब्रह्मन् प्राप्नुयादविचारयन् । अस्त्राणां पूजनं तत्र कर्त्तव्यं सर्व्वसिद्धये ॥२७॥
मार्गे पूजा प्रकर्त्तव्या अहिर्बुध्नेक्षणा शुभा । सोमार्के कारयेत् पूजां सर्व्वकाम फलप्रदाम् ॥२८॥
पुष्ये पुष्याभिषेकन्तु कर्त्तव्यं पूजयेज्जयाम् । चतुर्थ्यां शुक्लमाघस्य महापूजा विधीयते ॥२९॥
माघ्यां पूजा प्रकर्त्तव्या देवीं वै मङ्गलां यजेत् । फाल्गुने पूजयेद् देवीं चण्डिकेति च या मता ॥३०॥
मातराणां विशेषेण तत्र पूजा विधीयते । एवं सर्व्व गता देवी सर्व्वदेव तनुस्थिता ॥३१॥
पूजिता विधिना वत्स सर्व्वकामान् प्रयच्छति ॥३२॥

इति श्री देवीपुराणे त्रैलोक्याभ्युदये पादे पूजाप्रशंसानाम एकोनषष्टितमोऽध्यायः[7] ।

१. आसाद्य क ग ।
२. जयाग्नि मृगुपात्रिषु क ग ।
३. रक्षर्क्षे क ग ।
४. महाफला ग ।
५. शिनीवाली ग ।
६. महोत्सवम् ग ।
७. इत्यभ्युदयपादे क्रमपूजा ग ।



# षष्टितमोऽध्यायः।

मनुरुवाच।

अश्वमेध समं पुण्यं वृषोत्सर्गादवाप्यते[1]। रेवत्याञ्चाश्विने मासि कार्त्तिक्यां कार्त्तिकस्य वा ॥१॥

गो विवाहोऽथवा कार्य्योऽमायां वै फाल्गुनेऽपि वा।
शिवाया[2]मङ्गलं चैत्रं तृतीयायां महाफलम् ॥२॥
अश्वत्थोडुम्बरीयागं विवाह विधिना भवेत्।
सतोरणं भवेत् तीर्थे उत्सर्गं गोकुलेऽपि वा ॥३॥

चतस्रो वत्सिका भद्रा द्वौ वा सम्भवतोऽपि वा। वत्सं सर्व्वाङ्गसंपूर्णं कन्या सा लोहिता भवेत्[3] ।४।
अलङ्कृत्य यथा शोभा उत्सर्गं कारयेन्मुने। विवाहमेक वत्सैकं नीलेन भवते सदा ॥५॥
वृषेण अश्वमेधस्य यज्ञस्य फलदायकम्। जायेरन् बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥६॥
यजेद्वा अश्वमेधं नीलं वा वृषमुत्सृजेत्। लोहितो यस्तु वर्णेन शङ्खवर्ण मुखो[4]वृषः ॥७॥
लाङ्गूलशिरस श्चैव स वै नीलवृषः स्मृतः। अङ्कित[6]सृज्यते पूर्व्वं गाञ्चालङ्कृत्य सर्व्वतः ॥८॥
तप्तेन वामतश्चक्रं याम्ये शूलं समालिखेत्। धातुना हेमभावेन[7]आयसेनाथ वाङ्कयेत् ॥९॥
एवं कृत्वा अवाप्नोति फलं वाजिमखोदितम्। यमुद्दिश्य सृजेद् वत्सं स लभतेऽविचारणात् ॥१०॥
यथा शिवो[8]अजा अर्च्चा पूजिता सर्व्वकामदा। एवं देवत्रयं जप्त्वा अनन्तं लभते फलम् ॥११॥
मङ्गला विहितं यच्च गोदानजं फलं तथा। सहस्र क्रतवस्तेन वृषोत्सर्गादवाप्नुयात् ॥१२॥

---

१. नृपोत्सार्तत् ग।
२. शिवो वाणगतं क।
३. वत्सिकामवेत् ग क।
४. रोहिणीयस्तु ग क।
५. शंखवर्णखुरो वृषः क ग।
६. श्रोंकित क।
७. हिसभारेण क।
८. मजा अर्च्चा क।

गन्धाष्टमी भवेन्मार्गे गन्धर्व फल दायिका । सहस्र क्रतवस्तेन वृषोत् सर्गादवाप्नुयात्[1] ॥१३॥
क्षीराष्टमी महापुण्या चन्द्रलोकफलप्रदा ॥१४॥
दध्ना विष्णुपदं याति हविषा रविमण्डले । मधुना देवताः सर्व्वाः शिवं शालिकृतान्नजैः ॥१५॥
ब्राह्मं नीवार पूजाभि र्मङ्गला संप्रयच्छति । इहैव सर्व्वकामानि प्रदद्यात् सर्व्वं मङ्गला ॥१६॥
यथेप्सितानि लोकानां शिवा पूर्वेन[2] पूजिता । प्रयच्छति सुरलोके चेष्टान्यपि समन्ततः ॥१७॥
प्रपाराम[3] तडागानि देवतायतनानि च । पूर्त्तानि तेष्वपि चेष्टं हेमदानं महामुने ॥१८॥
उपकल्पितेषु भागेषु यदि[4] विघ्नोपजायते । तदा दुर्गादिषु[5] कार्य्या तिथिषु सर्व्वकामदम् ॥१९॥

वैशाख शुक्लस्य तु या तृतीया नवम्यसौ कार्तिक शुक्ल पक्षे ।
नभस्य मासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥२०॥
उपरागे[6] चन्द्रमसे रवेश्च तं मिस्रोऽष्ट कायामयन द्वयं च ।
पानीय मप्यत्र तिलैर्विभिन्नं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥२१॥
श्राद्धं[7] कृतं तेन समाः सहस्रं रहस्यमेतत् पितरो वदन्ति ।
एतेषु कालेषु च दान होममुत्सर्गधाता यत्नेषु दत्तम् ।
अनन्तकल्पं सुर सिद्धगीतम् वेदेषु चेष्टं मुनयो वदन्ति ॥२२॥

अथवा जीर्ण संस्कार विधिः पुण्यो महामुने । देवतादिषु कर्त्तव्यो महाभोग फलेप्सुभिः ॥२३॥
मूलादष्टगुण पुण्यं जीर्णसंस्कारके भवेत् ॥२४॥
तस्मादनाथ जीर्णेषु कार्य्यं संस्करणं मुने । स्वकीयं परकीयं वा यथाविभव विस्तरैः ॥२५॥
स्वतो वा परतो वापि यस्तु संस्कुरुते सुरान् ।
स यावच्चन्द्र सूर्य्यौ द्यौस्तावत् कालं सुखी भवेत् ॥२६॥
लोकेषु तेषु देवानां विरत[8]स्तेषु दृष्टधीः । यथा गोमेध यज्ञेषु पशुरोमसमाः समाः ॥२७॥

---

१. क पुस्तके पंक्तिर्नास्ति ।
२. पूर्त्ते न क ग ।
३. कूपाराम क ग ।
४. होमदानं महामुने क ग ।
५. युगादिषु क ग ।
६. उपल्पवे क ग ।
७. श्रीत्वम् ग ।
८. विरजः क ग ।

वसते दिवि[1] हृष्टात्मा जीर्ण संस्कार कारकः । अनाथा वा सनाथा वा पूजनीयाः सदा सुरा ॥२८॥
विशेषेण तु ये पूर्व्वास्ते ते चेज्या सततं मुने । पृथुना चेष्टमानादौ मैनाके उमाशङ्करम्[2] ॥२९॥
ययातिना च गोमन्ते शङ्करं हरिणा सह । कैलासेऽर्धनारीशं[3] रघुणा पूजितं पुरा ॥३०॥
दिलीपेन तथा राज्ये त्रिमूर्ति कामिकेऽचले ।
दक्षिणापि हि संप्राप्तं देवीमिष्ट्वा इहितं फलम् ॥३१॥
अन्येऽपि ऋषयः सिद्धि गताः पूर्त्तेन कर्म्मणा ॥३२॥

इति श्री देवी पुराणे देव्यवतारे पूजाविधिर्नाम[4] षष्टितमोऽध्यायः ।

१. वसत्ते विरजे लोके तथारेणुसमः क ग ।
२. यमशंकरम् क ।
३. कुमाणीसां ख ।
४. आद्ये देव्यवतारे पूजाविधि क ग ।



# एकषष्टितमोऽध्यायः।

ब्रह्मोवाच ।

चत्रादौ कारयेत् पूजां मम वत्स यथाविधि । गन्धधूपार्च्चनादानैर्मालाभिर्दमनोद्भवैः ॥१॥
सहोमं पूजयेद् देवं सर्व्वकामानवाप्नुयात् । सर्व्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः ॥२॥
उमां शिवं हुताशञ्च द्वितीयायान्तु पूजयेत् । हविष्य-मन्त्र-नैवेद्यं देयं गन्धार्च्चनं पुरा ॥३॥
फलमाप्नोति विप्रेन्द्र उमया यत् प्रभाषितम्[1] । तृतीयायां यजेद्देवीं शंकरेण समन्विताम् ॥४॥
कुङ्कुमागुरु-कर्पूर-मणि-वस्त्र-स्रगर्च्चिताम् । सुगन्ध-पुष्प-धूपैश्च दमनेन सुमालिताम्[2] ॥५॥
आन्दोले दोलयेद् वत्स शिवोमा तुष्यते सदा । रात्रौ जागरणं कार्य्यं प्रातर्देया तु दक्षिणा ॥६॥
हेमवस्त्रानुपात्राणि[3] ताम्बूलानि स्रजानि च । सौभाग्याय सदा स्त्रीभिः कार्य्यं पुत्रसुखार्थिभिः ॥७॥
गणेशे कारयेत् पूजां लडडुकादिभिर्भावितः । चतुर्थ्यां विघ्ननाशाय सर्व्वकाम-समृद्धये ॥८॥
पञ्चम्यां पूजयेन्नागाननन्ताद्यान्[4] महोरगान् । क्षीरसर्पिस्तु नैवेद्यं देयं सर्व्वविषापहम् ॥९॥
षष्ठ्यां स्कन्दस्य कर्त्तव्या पूजा सर्व्वोपहारिणी । इहैव सुखसौभाग्यमन्ते स्कन्दपुरं व्रजेत् ॥१०॥
भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः । कृत्वा प्राप्नोति भोगादीन् विगतारिर्महातपाः ॥११॥

मातराणाञ्च अष्टम्यां पूजां सर्व्वार्थं गन्धिकीम्[5] ।
कृतवांल्लभते वत्स सिद्धिमिष्टां तु दमनकैः । ॥१२॥

नवम्यां पूजयेद्देवीं महामहिष-मर्दिनीम् । कुङ्कुमा-गुरु-कर्पूर-धूपान्न-ध्वज-दर्पणैः ॥१३॥
दमनैर्मरूपत्रैश्च विजयाख्यं प्रदं लभेत् । धर्म्मराजे दशम्यान्तु पूजा कार्य्यानुगन्धकीम् ॥१४॥

---

१. उल्कायां यत् प्रभाषितम् क ।
२. सुमालिनी ग ।
३. अनुयात्राणि वस्त्रात्रपात्राणि क ग ।
४. अनंताध्यान् क ग ।
५.सर्वाघ्रगंधकाम् क ।

विगतारिर्निरातङ्क इह चान्ते परं पदम् । एकादश्यां वृषे पूजा कार्य्या सर्व्वोपहारका[1] ॥१५॥
धनवान् पुत्रवान् कान्ते वृषलोके महीयते । द्वादश्यां पूजयेद्विष्णुं कर्पूरागुरु चन्दनैः ॥१६॥
हविष्यान्नं महावाहो कर्त्ता विष्णुपदं लभेत् । कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि ॥१७॥
रति-प्रीति-समायुक्तो अशोक–मणि–भूषितः । कुम्भे वा सितवस्त्रे वा लेख्यः पत्रफलादिभिः ॥१८॥
खण्डशर्कर नैवेद्यैः सौभाग्यमतुलं लभेत् । चतुर्द्दश्यान्तु देवेशं शशाङ्काङ्कित शेखरम् ॥१९॥
क्षीरादिस्नपनैः स्नाप्यं धूप-पुष्प-सुगन्धिभिः । पूजनीयं यथान्यायं दमनैर्होमसंयुतैः[2] ॥२०॥
वस्त्रान्न मणीपूजा च कर्त्तव्या महती शिवे । वितानध्वजछत्रञ्च देयं कार्य्यन्तु जागरम् ॥२१॥
महापुण्यमवाप्नोति अश्वमेधं शताधिकम् । पौर्णमास्यां तथा कार्य्या सर्व्वकाम समृद्धये ॥२२॥
इन्द्राय शचीयुक्ताय कामिकं लभते फलम् । एवं पञ्चदशाहं च यस्तु पूजा प्रकुर्व्वते ॥२३॥
सर्व्वयज्ञ तपोदान फलान्यस्य अवाप्नुयात् । विचित्र देव[3]भोगेषु क्रीडते दिवि स्वेच्छया ॥२४॥
पुण्यक्षयादिहायातः पृथिव्यां भवते नृपः । विगतारिर्न सन्देह इत्याह भगवान शिवः॥२५॥

इति श्री देवी पुराणे महाभ्युदये दमनकी पूजानामैकषष्टितमोऽध्यायः[4] ।

---

१. गंधोपकारिकी क ग ।
२. हेमसंचितैः क
३. देह क ग ।
४. इत्यादये महाभ्युदये दमनकीपूजा क ।



# द्विषष्टितमोऽध्यायः ।

ब्रह्मोवाच ।

वैशाखे तु प्रकर्त्तव्या पूजा पाटलजैः स्रजैः । सर्व्वकाममवाप्नोति ज्यैष्ठे पद्मार्ज्जुनैस्तथा ॥१॥

आषाढे विल्व कह्लारैरिहितं लभते फलम् । नोमाली कुसुमैः पूजा न भे कार्य्या महाफला ।

कदम्ब चम्पकैरीषे सर्व्वकाम फलप्रदा ॥२॥

पूजा पङ्कजमालाभ्यां सर्व्वाभ्युदयदायिका । शतपत्रिकया पूजा कार्त्तिके सर्व्वकामिका[1] ॥३॥

मार्गे नीलोत्पला पूजा पुष्ये कुंज कजास्तथा । माघे कुन्दकृता पूजा सर्व्वकाम प्रदायिका ॥४॥

फाल्गुने मरुपत्रोत्था माधवी शुभदायिका । एवं संवत्सरं चैर्य्यां यः कुर्य्याद् ग्रहसत्तम ॥५॥

गन्धपुष्पान्न वस्त्रैश्च तस्य पुण्यफलं श्रणु । हेमगो भूमि वस्त्रान्न विद्यादान फलं लभेत् ॥६॥

वाजपेय महामेध राजसूय शताधिकम् । अश्वमेधं पशुमेधं गोमेधं क्रमशः फलम् ॥७॥

लभते दक्षिणा होमं[2] व्रतान्ते विधिना ददेत्[3] । पूरणं फलपुष्पैश्च वस्त्रपट्टस्रजान्नजम् ॥८॥

धृत क्षीरदधिभक्तैः सर्व्वकाम फलप्रदः । एवं भावानुरूपेण यस्तु पूजां प्रकल्पयेत् ॥९॥

शिवाय संभवेद् वत्स शिव स्थानचरः सदा ॥१०॥

इति श्री देवीपुराणे प्रतिमापूजा नाम द्विषष्टितमोऽध्यायः[4]

---

१. सर्वकार्यकी ग ।
२. हेमं ग ।
३. दश ग ।
४. आद्ये प्रतिमापूजा ग ।



# त्रिषष्टितमोऽध्यायः ।

मनुरुवाच ।

मन्दरस्थं महादेवं ब्रह्मा पृच्छति शङ्करम् । केषु केषु च स्थानेषु द्रष्टव्योऽसि मया प्रभो ॥१॥

ईश्वर उवाच ।

वाराणस्यां महादेवं प्रयागे तु महेश्वरम् । नैमिषे देवदेवन्तु गयायां प्रपितामहम् ॥२॥
कुरुक्षेत्रे विदुः स्थानं प्रभासे विश्वरूपिणम् । पुष्करे तु अयोगंधं विश्वञ्च विमलेश्वरे ॥३॥
अट्टहासे महानादं महेन्द्रे तु महाव्रतम् । उज्जयिन्यां महाकालं माकोटे तु महोत्कटम् ।
शङ्कुकर्णे महातेजं गौकर्णे च महाबलम्[1] ॥४॥
रुद्रकोट्यां महायोगी महालिङ्गं स्थलेश्वरे । हर्षे च हर्षितञ्चैव सर्व्वं मध्यमकेश्वरम् ॥५॥
केदारे चैव ईशानं रुद्रं रुद्रे महालये । सुवर्णाक्षे सहस्राक्षं[2] वृषभे वृषभध्वजम् ॥६॥
भैरवे भैरवाकारं भव शस्त्रपदे[3] विदुः । उग्रं कनखले चैव भद्रकर्णे ह्रदे शिवम् ॥७॥
देवदारुवणे दिण्डि[4] चण्डं मध्यम जङ्गले[5] । उर्ध्वरेतं तुरुण्डे च सुकलान्ते[6] कपर्द्दिनम् ॥८॥
कृत्तिवासञ्च एकाग्रे सूक्ष्मञ्चाम्रतिकेश्वरे । कालंजरे नीलकण्ठं श्रीकंठं मंडकेश्वरे ॥
ध्यानसिद्धेश्वरे योगी गायत्रीञ्चोत्तरेश्वरे॥९॥
विजयं नाम काशमीरे जयन्तं मरुकेश्वरे । हरिश्चन्द्रे हरिञ्चैव पुरिश्चन्द्रे तु शङ्करम् ॥१०॥
जटिं रामेश्वरे विद्यात् सौम्यं कुक्कुटकेश्वरे । भूतेश्वरे भस्मगोत्रं जललिङ्गं जलेश्वरम्[7] ॥११॥
भिक्षुकं करिकायान्तु वाराहं विन्ध्यपर्व्वते । ताम्रं पश्चिमसन्ध्यायां विरजायां त्रिलोचनम् ॥१२॥

---

१. ग पुस्तके नास्ति
२. वर्णा रन्यो तु सहस्नाख्यं ग ।
३. वस्त्रापदे क ग ।
४. दगुं ग ।
५. जंगम ग ।
६. स्वफलां ग
७. गलप्रियम् ग ।

तृप्तेश्वरे त्रिशूली च श्रीशैले त्रिपुरान्तकम् । जल लिङ्गे विदुः कालं कपाली करवीरके ॥१३॥
दीप्तचक्रेश्वरे[3] वेदं नेपाले पशुपतिं पतिम् । श्रीकारा रोहणे लकुटिं वेदीकाया[1] मुमापतिम् ॥१४॥
गङ्गायां सागरे त्वमयमोङ्कारममरकण्टके । सप्तगोदावरे भीमं स्वयम्भूर्नकुलेश्वरे ॥१५॥
कर्णिकारे गणाध्यक्षं भूर्भुवं गन्धमादने । सिद्धेश्वरन्तु आकाशे पाताले हाटकेश्वरम् ॥१६॥
अष्टषष्टिस्तु नामानि देवदेवस्य धीमतः[3] । पुराणे चोपगीतानि ब्रह्मणा च स्वयम्भुवा ॥१७॥
यः पठेत् प्रातरुत्थाय स्नातो वा यदि वा शुचिः । मुच्यते सर्व्वपापेभ्य शिवलोकञ्च गच्छति ।१८।

इति श्री देवी पुराणे महादेवस्याष्टषष्टिनामकीर्त्तनं नाम त्रिषष्टितमोऽध्यायः[4] ।

---

१. वक्त्रेखटे ग ।
२. देविकायाम् ग ।
३. धीमतो क ग ।
४. इत्याद्ये देवीपुराणे अष्टषष्टि नामानि महादेवस्य ग ।



# चतुषष्टितमोऽध्याय :

ब्रह्मोवाच ।

वृषं गावौ समादाय युवानौ लक्षणान्वितौ । हेमशृङ्गौ शफे रौप्यौ सवस्त्रौ पूजयेन्मुने ॥१॥
शिवोमां पूजयित्वा तु तद्दिने यः प्रयच्छति । शिवभक्ताय विप्राय रोहिण्यां वा मृगेण वा ॥२॥
न वियोगो भवेत् तस्य सुतपत्नीपति वृत । वातरंहस वै मानैर्गच्छेच्छिवपुरं द्विजः ॥३॥
तत्र भोगांश्चिरान् भुक्त्वा इह आगत्य जायते । समृद्धो धनधान्याभ्यां पुत्रमित्र समाकुलः ॥४॥
विगतारिर्भवेद् ब्रह्मन् व्रतस्यास्य प्रभावतः । यो वा रत्नसमायुक्तं गोयुगं[1] पूजयेन्मुने ॥५॥

प्रयच्छति शिवोमे च प्रीयेतां भावितात्मनः[६] ।
स सर्व्वपापञ्च दुःखेभ्यो विमुक्तः क्रीडते सदा
इहलोके भवेद्धन्यो देहान्ते परमं पदम् ॥६॥

इति श्री देवी पुराणे गोरत्नव्रतं नाम चतुषष्टितमोऽध्यायः[२] ॥

---

१. यो युग क ग ।

२. इत्यभ्युदये गो रत्नव्रतम् क ग ।



# पञ्चषष्टितमोऽध्यायः ।

ब्रह्मोवाच ।

तृतीयायान्तु शुक्लायां लिखेद्वस्त्रयुगे शुभे । रोचनासित काश्मीरैः शिवोमां पूजयेत् ततः ॥१॥
हेमरत्न स्रजैर्वत्स मन्त्रयुग्ममुदीरयेत् । तदमान मन्त्र शङ्कः यत्तत् पूर्व्वमुदाहृतम् ॥२॥
तेन जप्यार्च्चनं होमं कर्त्तव्यं द्विजसत्तम । अवियोगाय नारीणां[1]व्रतराजं सदा हितम् ॥३॥
सहेमं रत्नपुष्पाढ्यं सहस्रं दापयेद्धुतम् । महापुण्यं महाभाग्यं सर्व्वकाम प्रदायकम् ॥४॥
सुत भ्रातृवियोगन्तु न भवेत् तेन भो द्विज । न व्याधिर्नोपसर्गश्च यावत् तन्तुरज[2]मुने ॥५॥
तावत् कालमुमालोके क्रीडते मुदितश्चिरम् । हस्त मात्रा तृण कार्य्या अङ्गुष्ठा तर्ज्जनीगता ॥६॥
प्रदीप्य यावत् सादीप्ता तावत् भोज्यं समारभेत् । देवीं संपूजयित्वा तु षोडशान्तेन भावितः ॥७॥
हेम पुष्पैस्तथा गन्धै रत्नैश्चित्रैर्यथा विधि । संवत्सरं[3]यथान्यायं सत्यान् कामानवाप्नुयात् ॥८॥
प्रदीप्ता नवमी वत्स हेम गोदक्षिणा मता । व्रतान्ते विधिना तेन संग्रामे अपराजितः ॥९॥
भवते शत्रुसंघस्य यथा देवो महेश्वरः । अनेनैव विधानेन गुग्गुला गुडिकाथवा[4] ॥१०॥
पूजयित्वा शिवां मन्त्रैः प्रदीप्ते होमयेद्विधौ । पूर्व्वोक्ता दक्षिणा चात्र फलं वाजिमखोदितम् ॥११॥

मनुरुवाच ।

ग्रहदोषापसृष्टस्य राज्ञो राजसुतस्य वा । महिष्या वा मृतापत्या द्विजातिष्वथ राजनि ॥१२॥
विपदद्ग गते फलं यस्य सुप्रयत्न कृतोद्यमे । गजाश्व गोवृषाणाञ्च यत्र हानिः प्रजायते ॥१३॥
यत्र भौमान्तरीक्षे च उपसर्गः प्रदृश्यते । तत्र कुर्य्यान्महायोगं प्राज्ञं पुष्याभिषेचनम् ॥१४॥
मूलं राजा समाख्यातस्तस्य शाखा प्रजादिकम् । तदुपघातसंस्कारैः शुभे वा अशुभेऽपिवा ॥१५॥

---

१. नवीनां ग ।
२. व्रजं ख ।
३. समुत्सवम् कग ।
४. गुग्गुली गुलुकं यवा ग ।

यत्नः कार्य्यः सदा वत्स मूलं शाखादिकं भवेत् ।
मूले विनष्टे नश्यन्ति शाखाद्याः फलसञ्चयाः ॥१६॥
ततोऽर्थं मूलरक्षाणां यतितव्यं महामुने । धर्मार्थ काममोक्षाणां स हि हेतुः प्रपद्यते ॥१७॥
ब्रह्मणा या पुरा शान्ति र्महेन्द्रार्थं बृहस्पतिः ।
व्याख्याता कीर्त्तयिष्यामि तां ते शौनक शृणुष्व ताम् ॥१८॥
पुष्ये स्नानं तथा[1]पुण्यं सर्व्व पापप्रणाशनम् । उत्पात शमनं दिव्यं यत्र कार्य्याविधारय[2] ॥१९॥
वल्मीक तुषकेशास्थि कट्टं कण्टक वर्जिते । स्निग्धश्लेष्माति दौर्गन्धि विगताक्षे महीतले ॥२०॥
कङ्क कापोत गृध्रोलूकाकादि परिवर्ज्जिते । सुशुभे[3]चर्म्मकाशोके वकुलाभ्राभ्रशाद्वले ॥२१॥
तरुणा तरु वेल्लिप्रतते निरुपहतदलान्विते । सुमधुरे वृक्षप्राये फल पल्लव शोभिते ॥२२॥
पक्षिशाव गणाकीर्णे कृकवाकूप शोभिते । जीवं जीवकहारीत शतपत्र शुकाकुले ॥२३॥
चकोरं कुरु वा वत्स चक्रवाकोपशोभिते । शिखि पारावतश्रीक कोक कोकिल नादिते ॥२४॥
मधु पुष्प सुरापान[4]मत्त षट्कर्णाकुले । यागं कुर्य्याद्वनोद्देशे क्षेत्रारण्येऽथवा शुभे ॥२५॥
हिमाद्रौ जुहुयात् यावत् सह्ये विन्ध्याचलेऽपि वा । नदीनां पुलिने वाथ सङ्गमे वा मनोरमे ॥२६॥
सिकता-पङ्क-उत्कीर्णे जलपक्षि नखक्षते । प्रोत्प्लुत हंसच्छत्राभे गीते कारण्ड सारसैः ॥२७॥
सहस्राक्ष समारम्ये सरे इन्दीवरेक्षणे । विकसत् कमल वदना कुले कलहंसभाषिणी ॥२८॥
प्रोदभिन्नकुड्मल कुचा नलिनी पत्र निवासिनी[5] । गोरीमन्थजशकृत् खुराः फेनरवाकुले ॥२९॥
सुत सम्पूर्ण हुङ्कार गोवत्सवरवल्लिते । समुद्रतीरे कुर्याच्च यत्रायाताः सुतागताः[6] ॥३०॥
रत्नसम्पूर्ण कोषाश्च निवसन्ति निराकुलाः । स्वनील निचुलाकीर्णे उपान्ते वा खगान्विते ॥३१॥
सिंहकोल गजानाञ्च यत्र एकत्र भूभृदा । विभीयो यत्र श्रासते खगा मृगसमन्विताः ॥३२॥
तत्र कुर्य्याद् सदा स्नानं यत्र मातृ गृहं शुभम् । काञ्ची कलाथनूपुरजघनोरूभरालसा[7] ॥३३॥

---

१. महापुण्यम् ग ।
२. कुत्रवधारय क ग ।
३. सुपूते क ग ।
४. मधुपुष्पासव पान ग ।
५. विलासिनी क ग ।
६. शुभावताः ग ।
७. यत्र वा अत्र मातगे गमना प्रमदालसाग ।

श्रीमती मृगेक्षणा वा परपुष्ट प्रभाषिणी[1] । गृहे यत्र मुदा आस्ते तत्र कुर्य्याच्च वा मुने ॥३४॥
पूर्व्वोदक् प्लवने भूमौ प्रदक्षिणपथे जने । श्वाविन्मुधि केविवरैः कर्कटिवासवर्ज्जिते ॥३५॥
वर्णा गन्ध रसोपेताः घना स्निग्धा समाः शुभा । दृष्टा सा वीजरोहाद्यैर्बहुशः सुपरीक्षिता ॥३६॥
गत्वा तां शुभे मुहूर्ते कौवेर्य्यामधिवासयेत् ॥३७॥
वलि पुष्पोपहारञ्च मन्त्रयुक्तं निवेदयेत् । आगच्छन्तु सुराः सर्व्वे यत्र पूजाभिलाषिणः ॥३८॥
दिशो द्विजा नगाश्चैव ये चाप्यन्येंऽश भागिनः ।
आवाह्यैवं ततः सर्व्वान्निवं ब्रूयात् पुरोहितः ॥३९॥
श्वः पूजां प्राप्य धातारो दत्वा शान्ति महीभुजे ।
कृत्वा पूजां ततस्तासां रात्रौ तस्मिन् परावसेत्[2] ॥४०॥
स्वपनाः शुभाश्च गोवत्सदधि देवाङ्गदर्शनम्[3] । दृष्टा दूर्व्वाक्षतं रत्न फल शैला जयावहाः ॥४१॥
छत्र चामरशङ्खाब्ज सित वासादिदर्शनम् । लाभो वा सर्व्वकामानां पूरणाय प्रकीर्तिताः ॥४२॥
फल पुष्पलता वृक्षाः क्षीरिणः शुभदा मताः । तेषामारोहणं श्रेष्ठं प्रासादे वृषभादिषु ॥४३॥
चन्द्रार्क ग्रहणं शस्तं पर्व्वतारोहणं शुभम् । निगडैर्बन्धनं स्वप्ने विद्विषश्च जयावह ॥४४॥
परिवर्त्तं गिरेः कुर्य्याच्छत्रुर्वाचावगूहति । वेष्टयेद् यस्तु प्रासादं स्वान्तेस्तस्य जयो भवेत् ॥४५॥
मृतरोदनमागम्यागमनञ्च शुभावहम् ॥४६॥
स्वप्ने तु कूपपङ्केषु गर्त्ताद्वा तरणं शुभम् । नदीषु तरणं शस्तं समुद्रोत्तरणं तथा ॥४७॥
निर्ज्जित्य शत्रुसैनञ्च जयं प्राप्नोति मानवः । कटकादि-अलङ्काराः पुत्रराज्य सुखप्रदाः ॥४८॥
सुहृद जन वैपञ्ची लाभाः स्त्रीधन दायका । रुधिरन्तु पिवेद्यस्तु तरते वा यदि क्वचित् ॥४९॥
मासादि भक्षणे लाभे लभते चेहितं फलम् । हास्यनृत्य न चोत्साह पाठनाः कलिकारकाः ॥५०॥
याम्ययानाङ्गना कृष्णानयनं भयमृत्युदम् । पङ्का गोधगामित्वं कूपमनुप्रवेशनम् ॥५१॥
उत्तरे भयदं स्वप्ने रक्तमाल्याम्बरागमः । स्वराष्ट्रे कपिकाकोलू वराहाहि निर्ग्रन्थयः ॥५२॥

---

१. परपुष्पप्रदायिनी ख ।
२. मूषिकाविवरं क ग ।
३. तस्यां वृती वसेत ग ।
४. दुर्वादिदर्शनाम् ग ।

दृष्ट्वाशुभान् जपः कार्य्यो धातुजाः[1]न फल प्रदाः ।
वातपित्त कफोत्थेषु यानाग्नितरणादिका ॥५३॥

ग्रीष्म शरद्वसन्तेषु प्रकोपा न फलप्रदाः । श्रुतानुकीर्त्तने दृष्टमनुभूतानुर्गहिताः ॥५३॥

न चेष्टा ददि वा दृष्टाः प्रदोषे प्रथमे तथा । मध्ये मध्यफलाः सर्व्वे चान्ते शीघ्रफलप्रदाः ॥५४॥

गोविसर्गे च ये दृष्टास्ते तथा परिकीर्त्तिताः ।
दृष्ट्वा स्वप्नान् शुभान् यागं कुर्य्यानिष्ठान्न कारयेत् ॥५५॥

स्नानं देवार्च्चनं होमं जपं शान्ति समारभेत् । कृत्वा शुभं भवेत् सर्व्वं ततो मण्डल मालिखेत् ॥५६॥

चतुर्हस्तं समारभ्य यावद्धस्तशतं भवेत् । मण्डलं तत्र कर्त्तव्यमत ऊर्द्धं न कारयेत् ॥५७॥

विमलं विजयं भद्रं विमानं शुभदं शिवम् । वर्द्धमानञ्च दैवञ्च मंदाक्षं कामदायकम् ॥५८॥

रूचकं स्वस्तिकाख्यञ्च द्विदशञ्चेति[2]मण्डलाः ।
सित्यादि-हरिताश्च रजाः कार्य्याः सुशोभनाः ॥५९॥

शालि षष्टिक कौसुम्भरजनी हरिपत्रजाः । मणि विद्रुम रागाश्च भस्मना अभिमन्त्रिता ॥६०॥

सित सर्षप धूपाद्या रजः कृत्वा तु पातयेत् । अस्त्र राजं न्यसेन्मन्त्री सम्भवेऽतिपदं पि वा ॥६१॥

समोत्थानं शुभं कृत्वा गोमयेनोपलेपितम् । स चन्दन गुरू कर्पूर क्षोदधूपाधिवासितम् ॥६२॥

भूभागं[1]सुमितं सिद्धं पूर्व्वपश्चिमचोत्तरम् । साम्यं स्वस्तिक मत्स्याद्यैः सूत्रैर्वण्डजपत्रजैः ॥६३॥

पद्म पत्राष्टकं मध्ये द्विगुणं त्रिगुणं पिवा । द्वाराणि समसूत्राणि कर्णिका केशरोज्ज्वलम् ॥६४॥

पद्मं तथावशेषानि स्वस्तिकान्युत्पलानि च । सव्यावलम्बहस्तस्तु रजःपातं समाचरेत् ॥६५॥

मध्यमानामिकाङ्गुष्ठैरुपविष्ठा यथेप्सया[3] । अधोमुखाङ्गुलिं कृत्वा पातयेत् तु विचक्षणः ।
समारेखा तु कर्त्तव्या विच्छिन्ना पुञ्जवर्जिता ॥६६॥

अङ्गुष्ठपर्व्व वैपुल्या समा कार्य्या विजानता । संसक्तं विषमं स्थूलं विच्छिन्नकृषरावृतम् ॥६७॥

पर्य्यन्त सहितं ह्रस्वमालिखेद्वा कदाचन । संसक्ते कलहं विद्याद्वक्रैरेरवे[4]तु विग्रहम् ॥६८॥

अतिस्थूले भवेद्व्याधिर्नित्यं पीडा विमिश्रिते । विन्दुभिर्भयमाप्नोति शत्रुपक्षान्न संशयः ॥६९॥

---

१. धातुमान् ग ।
२. दश द्वा इति मंडल ग ।
३. उपचेष्टा सुखेप्सया क ग ।
४. बहुरेखं तु क ग ।

कृशायाञ्चार्थहानिः स्याद् विच्छिन्ने मरणं ध्रुवम् । विप्रयोगो भवेत् तस्य इष्टं द्रव्यसुतस्य वा ।

अविदित्वा लिखेद्यस्य मण्डलन्तु यथेप्सया ॥७०॥

सर्व्वदोषानवाप्नोति ये दोषाः पूर्व्वभाषिताः । चतुरस्रं चतुर्द्वारं लिखेन्मण्डलमुत्तमम् ॥७१॥

मण्डलस्य प्रमाणेन पद्मं द्वारान् समालिखेत् । हस्तोर्नोन्नत कर्त्तव्यं पद्मं विप्र कदाचन ॥७२॥

नाधिकं चतुरूर्द्धन्तु लिखितव्यं विजानता । प्रतापायु स्त्रियो धर्म्मो राज्यं श्रीरूपशान्तता ॥७३॥

योगाप्तिरर्थलाभश्च पूर्व्वद्वारे तु मण्डले । सिद्धिर्मेधा यशः सौख्यमारोग्यं जनवल्लभम् ॥७४॥

सर्व्वकामार्थ सिद्धिश्च उत्तरे द्वारमण्डले । पुत्रमायुर्बलञ्चैव सौभाग्यं रिपुमर्द्दनम् ॥७५॥

यज्ञकर्माभिवृद्धिश्च पश्चिमद्वारि मंडले । तस्य मध्ये पुनः पद्ममष्टपत्रं सकर्णिकम् ॥७६॥

चतुर्वितस्तिकं विप्रे राजन्ये त्रिवितस्तिकम् । पद्मस्यैवानुपूर्वेण नालं तदनुपूर्वशः[1] ॥७७॥

वारुणीं दिशमाश्रित्य नालन्तु परिकल्पयेत् । सप्तपाताल सौनालं भुवनान्ताः प्रकीर्त्तिता ॥७८॥

ईदृशं कल्पितं पद्मं देवदेवेन शम्भुना । ध्वजतोरण संयुक्तं पताकाभिरलङ्कृतम् ॥७९॥

कर्णिका तु भवेन्मेरुर्वीजैर्ग्रहगणाः स्थिताः । केशरास्तु भवेन्नद्यः कण्टके पर्व्वता स्थिताः ॥८०॥

अष्टौ दला दिशः प्रोक्ता एकः पद्मः प्रतिष्ठितः ।

सप्तपाताल भूर्लोके नालन्तु परिकीर्त्तितम् ॥८१॥

भूर्लोकस्तु दला ज्ञेयो दिगात्मा शून्यगोचरा । स्र्वलोकः कर्णिकाख्यातास्त्रैलोक्यं पद्मसंज्ञितम् ।

कर्णिकायां न्यसेद्देवं पूजाकाले महेश्वरम् ॥८२॥

मातरा ग्रहनागाश्च यक्षा रक्षा दिवौकशः । वसवो मुनिलोकेशाः सरूद्रा भुवनाधिपाः ॥८३॥

लवाः काष्ठाः क्षणा यामा रात्र्यहाः ससिताः सिताः ।

पक्षा मासा ऋर्तुमार्गो समा युगयुगान्तराः ॥८४॥

कल्पान्ताश्च महाकल्पाः पद्मे चैवं समालिखेत् । प्रथमे मण्डले देवं शिवं विद्येश संयुतम् ॥

गणनायक संयुक्तं द्वितीयावरणे यजेत् ॥८५॥

सग्रहं भास्करं प्राच्यामैशान्यान्तु पिनाकिनम् ।

सौम्यास्यं केशवं रक्षे पश्चिमस्यां पितामहम् ॥८६॥

---

१. ख पुस्तके नास्ति ।

तृतीये मण्डलारण्ये मेदिन्यामुपकल्पिते । नानारत्नाकराकीर्णे भूयो देवान् समालिखेत् ॥८७॥

पुरोहितो यथास्थानं नागान् यक्षान् पितॄन् सुरान् ।
गन्धर्व्वाप्सरसश्चैव मुनीन् सिद्धान् निधापयेत् ॥८८॥

ग्रहाश्च ग्रहनक्षत्रैः सरुद्राश्चैव मातरः । स्कन्दं विष्णुं विशाखञ्च लोकपालान् सुरस्त्रियः ॥८९॥
वर्णकै र्विविधैः कृत्वा कृत्यैर्गन्धगुणान्वितैः । यथा सम्पूजयेद्विद्वान् गन्धमाल्यानुलेपनैः ॥९०॥
भक्ष्यैरनेकैर्विविधैः फलमूलामिषैस्तथा । पानैस्तु विविधैर्हृद्यैः सुराक्षीरासवादिभिः ॥९१॥
विशेषाद्विहिता पूजा ग्रहयज्ञे मया पुरा । मातराणां सुराणाञ्च साप्यत्रैवोपकल्प्यते ॥९२॥
पिशाचान् दानवान् रक्षान् मांसमद्यैः प्रपूजयेत् । अभ्यञ्जनाञ्जन तिलैर्मांसैन पितरस्तथा ॥९३॥
मुनयः सामयजुभिः ऋग्गन्धैर्धूपमाल्यकैः[1] । त्रिमधुरेण च नागानशेषैर्वर्गकैस्तथा ॥९४॥
धूपाज्याहुतिदानैश्च देवान् रत्नदक्षिणैः । गन्धर्वाप्सरसो गन्धैर्माल्यैश्च सुमनैस्तथा ॥९५॥
शेषास्तु सार्व्ववर्णिके वलिगन्धैश्च पूजयेत् । प्रतिसराणि पताकाश्च वस्त्राण्याभरणानि च ॥९६॥
सर्व्वेषां च प्रदेयानि सयज्ञोपवीतानि च । दक्षिणे पश्चिमे चैव वायव्यां मण्डलस्य वा ॥९७॥
ग्रहयज्ञविधानेन होमं मातृमखोदितम् । कृत्वा द्रव्यैरिमैर्वत्स यथोक्तैर्लक्षणान्वितैः ॥९८॥
लाजाक्षत घृतं क्षौद्रं दधि क्षीरं सरीसृपाः[2] । सिद्धार्थाः सुमनोगन्ध धूपाश्च ससितोत्कटाः ॥९९॥

गोरोचना तिला दर्भाः स्वर्त्तुजानि फलानि च ।
घृत पायस पूर्णाश्च रागवान् विनिवेदयेत् ॥१००॥
पश्चिमायान्तु वेद्यायां पूजेयं स्नानिकी भवेत् ।
कलशान् सुदृढान् कुर्य्याल्लक्षणेन वदामि ते ॥१०१॥

इति श्री देवीपुराणे पुष्पाभिषेके चिन्ता नाम पञ्चषष्टितमोऽध्यायः[3] ।

---

१. धूपाध्याहुतिपानैश्च ग ।
२. क्षीरं तु सर्वदा ग ।
३. आद्ये पुष्पाभिषेके मण्डला चिंता ग ।

# षट्षष्टितमोऽध्यायः ।

ब्रह्मोवाच ।

उत्पत्तिं लक्षणं मानं कथयामि महामुने । बाधकः[1] कलशश्चैव येन लोके प्रकीर्तितः ॥१॥
अमृते मथ्यमाने तु सर्व्वदेवैः सदानवैः । मन्थानं[2] मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥२॥
उत्पन्नममृतं तत्र महावीर्य्यं पराक्रमम् । तस्यायं धारणार्थाय कलशः परिकीर्तितः ॥३॥
कलां कलां गृहीत्वा वै देवानां विश्वकर्म्मणाम् । निर्म्मितोऽयं सुरैर्यस्मात् कलशस्तेन उच्यते ॥४॥
कलशस्य मुखे ब्रह्मा ग्रीवायान्तु महेश्वरः । मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः स्थिताः ॥५॥
शेषास्तु देवताः सर्वा वेष्टयन्ति चतुर्द्दिशम् । कुक्षौ तु सागराः सप्त सप्तद्वीपास्तु संश्रिताः ॥६॥
नक्षत्राणि ग्रहाः सर्वे तथैव कुलपर्व्वताः । हिमवान् हेमकूटश्च निषधो मेरुरेव च ॥७॥
रोहितो माल्यवन्तश्च सूर्य्यकान्तिश्च पर्व्वताः । गङ्गा सरस्वती सिन्धु सुभगा यमुना नदी ॥८॥
एरावती शतह्रदा तथा वैतरणी नदी । गोदावरी नर्म्मदा च मही नाम महानदी ॥९॥
कुरुक्षेत्रं प्रयागञ्च एकहंसं[3] पृथूदकम् । अमरेश्वरं[4] पुण्डरीकं गङ्गासागरमेव च ॥१०॥
पृथिव्यां यानि तीर्थानि कलशे निवसन्ति ते । ग्रहशान्तिश्च पुष्टिश्च प्रीति गायत्रिरेव च ॥११॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च । अथर्व्ववेदसहिताः सर्व्वे कलशे संस्थिताः ॥१२॥
न चैव कलशाः पुण्याः शम्भूमूर्त्तिसमुद्भवा । गोत्योपगोभ्यो मरुतः समुदश्च तथापरे ॥१३॥
मनोहरः खलुभद्रः पञ्चमः परिकीर्त्तितः । विरजस्तनुदूषश्च[5] षष्ठसप्तमकावुभौ ॥१४॥

---

१. वाचक ग ।
२. संस्थानां ग ।
३. एकहस्तम् ग ।
४. अश्वमेधम् ख ।
५. तलइषष्ट ग ।

अष्टमस्त्विन्द्रियोपेतो नवमो विजयः स्मृतः । नवैव कलशाः ख्याता अधिदेवं निबोधत ॥१५॥
नवमो यः समाख्यातो विजयो नाम नामतः । शिवस्तत्र स्थितः साक्षात् सर्व्वपापहरः शुभः ॥१६॥
स तु पञ्चमुखः ख्यातो लोके सर्व्वार्थसाधकः ।
पञ्चब्रह्मात्मको यस्मात् तेन पञ्चमुखः स्मृतः ॥१७॥
पश्चिमे तु मुखे सद्यो वामदेवस्तथोत्तरे । पूर्व्वे तत्पुरुषं विद्यादघोरञ्चापि दक्षिणे ॥१८॥
ईशानः पञ्चमो मध्ये सर्व्वेषामुपरि स्थितः । एते पञ्चमुखा वत्स पापघ्ना ग्रहनाशनाः ॥१९॥
सद्योजातं भवेच्छुक्लं वामदेवन्तु पीतकम् । रक्तस्तत् पुरुषो ज्ञेयो अघोरः कृष्ण एव च ॥२०॥
ईशानः पश्चिमस्तेषां सर्व्ववर्ण समन्वितः । कामदः कामरूपी स्याद् ज्ञानाधारः शिवात्मकः ॥२१॥
क्षितीन्द्रो ज्येष्ठकलशो द्वितीयो जलसम्भवः । तृतीय पवनश्चैव चतुर्थस्तु हुताशनः ॥२२॥
पञ्चमो यजमानस्तु षष्ठश्चाकाश सम्भवः । सोमस्तु सप्तमः प्रोक्त आदित्यश्च तथाष्टमः ॥२३॥
एते चोत्पादिता देव्या शिवेनाधिष्ठिताः पुरा । इन्द्रस्य मूर्त्तयश्चाष्टौ सूर्य्यान्तास्तनवः शिवः ॥२४॥
क्षितीन्द्रः पूर्व्वतो न्यास्यः पश्चिमे जल सम्भवः ।
वायव्ये वायवो न्यास्य आग्नेये अग्निसम्भवः ॥२५॥
सौम्यमुत्तरतो योज्यं सौरं दक्षिणतो न्यसेत् । न्यस्यैवं कलशानान्तु पूर्व्वरूपं विचिन्तयेत् ।
कलशानां मुखे ब्रह्मा ग्रीवायां विष्णुरेवहि[1] ॥२६॥
मध्ये मातृगणाः सर्व्वे सेन्द्रा देवाश्च पन्नगाः । कुक्षौ तु सागरास्तेषां सप्तद्वीपा च मेदिनी ॥२७॥
श्रिया चैव तयोमा च गन्धर्व्वा ऋषयस्तथा । पञ्चभूतास्तथा धारास्तेषामधरतः स्थिताः ॥२८॥
पूर्णाः पूतेन तोयेन सिद्धास्त्वेकान्ततोज्ज्वला । सरित्सरः सखातेन तडागेन जलेन वा ॥२९॥
वापीकूपौ च दिव्येन सामुद्रेण सुखावहाः । सर्व्वमङ्गल मङ्गल्याः सर्व्वकिल्विषनाशकाः ॥३०॥
अभिषेके सदा ग्राह्याः कलशा ईदृशाः शुभाः । यात्राविवाह काले वा प्रतिष्ठायज्ञकर्म्मणि ॥३१॥
योजनीया विशेषेण सर्व्वकाम प्रसाधकाः । मृतापत्या तु या नारी या च वन्ध्या प्रकीर्तिता ॥३२॥
मूढगर्भा अगर्भा च दुर्भगा व्याधिपीडिता । एतासान्तु सदा कार्य्यं स्नापनं पुष्पमण्डले ॥३३॥

---

१. कृष्ण एव ग ।

सर्व्वरत्नौषधी गन्ध-फल-पुष्प-समन्विताः। ग्रहदोषे प्रयोक्तव्याः कल्याणे मङ्गले तथा ॥३४॥

ग्रहान् धारयते यस्मान्मातरा विविधास्तथा। दुरितांश्च महाघोरस्तेन ते धारकाः[1]स्मृताः ॥३५॥

एकैकान्तु कलां मूर्त्तौ क्षित्यादीनां यथाक्रमम्।

संहृत्य संस्थिता यस्मात् तेन ते कलशाः स्मृताः ॥३६॥

हैमराजत ताम्रा वा मृण्मया लक्षणान्विताः। पञ्चाङ्गुल वैपुल्यमुतसेधः षोडशाङ्गुलान् ॥३७॥

कलशानां प्रमाणन्तु मुखमष्टाङ्गुलं भवेत्। अष्टमूर्त्तिस्थितो[2]योऽसौ स शिवः पद्मसंस्थितः ॥३८॥

मूर्त्तयोऽष्टौ गणास्तस्य कर्णिकायां शिवः स्थितः।

ये गणास्ते दला नागे ये नागा कलशाश्च ते ॥३९॥

कलशाश्च ग्रहाः प्रोक्ता लोकपाला दिशश्च ते। एतैः सर्व्वमिदं व्याप्तमाब्रह्म भुवनं जगत् ॥४०॥

दुराधर्षैं र्महासत्त्वैः सर्व्वपाप विशोधकैः ॥४१॥

इति श्री देवीपुराणे कलशोत्पत्ति निवेशाधिदेवलक्षणकीर्त्तनं नाम षट्षष्टितमोऽध्यायः[3]।

---

१. वाचकाः ग। २. सप्तमूर्त्ति ग।

१. इत्याद्ये कलशोत्पत्ति निवेषनाधि देवलक्षणम् ग।

# सप्तषष्टितमोऽध्यायः ।

ब्रह्मोवाच ।

रत्नानि बीज पुष्पाणि फलानि कलशे क्षिपेत् । पुष्पमाल्याश्च वस्त्रान्ते सितचन्दनचर्च्चिताः ॥१॥
वज्रमौक्तिक वैदूर्य्यमहापद्मेन्द्रस्फाटिकैः । सर्व्वधातु फल बिल्वनारङ्गोडुम्बरैस्तथा ॥२॥
बीजपूरक जम्बीर आम्रआम्रात[1]दाडिमैः । यवशालिनीवारैश्च गोधूमसित सर्षपैः ॥३॥
कुङ्कुमागुरुकर्पूरमदरोचनचन्दनम् । मांसेला कुष्ठ कर्पूर यत्र चण्डाम्बराञ्जनम्[2] ॥४॥
जाती[3]पत्रकणगन्ध पृक्कागौरी सपर्णकम् । वचारात्रि समञ्जिष्ठा तुरुष्कं मङ्गलाष्टकम् ॥५॥
दूर्व्वा मोहनिमृङ्गाङ्क[4]शतमूली शतावरी । वला नागवला देवी सहदेवा गजध्वरा[5] ॥६॥
पूर्णकोशा सिता पाठा गुञ्जा सुरसिका लताम् । व्यापकं गजदन्तु शतपुष्पा पुनर्नवा ॥७॥
ब्राह्मी देवी शिवा रुद्रा सर्व्वगन्धानि काञ्चनम् । समाहृत्य शुभान्येतान् कलशेषु निधापयेत् ॥८॥
कल्याणं विजयं धूपौ चन्द्रोदये समङ्गलम् । सर्वरत्नमलंकारं रोचनाख्यं तु पट्टकम ॥९॥
बुध्या द्वयंगुलमंगुल्या षड्विंशांगुलयावधी । नोत्तमं चतुरस्रं वा पद्मचन्द्रिकगर्मिकम् ॥१०॥
वामे सपद्ममत्स्ये भागा स्वस्तिकविनायकैः । श्री श्री वृक्षवराहेम श्रमीदेवी शुभान्वितम्[6] ॥११॥
सर्व्वरत्नमलङ्कारं पट्टं कार्य्यं द्विहस्तकम् । हस्तविस्तार उच्छ्रायं दशाङ्गुल्यं सुशोभनम् ॥१२॥
स्नानाख्यं सार्द्धहस्तन्तु पट्टं वृत्तासनान्वितम् । शय्याख्यं द्विगुणं दैर्ध्याद्विनुर्मानं सपीठकम् ॥१३॥
गज सिंहं कृताटोपं हेमरत्नविभूषितम् । सिंहाख्यं सार्द्ध विस्तारा कुण्डासनमथापि वा ॥१४॥

---

१. साम्र साम्रात ग । २. मात्स्येनाष्ट कर्पूर पत्र ंडा सुराजलम् ग ।
३. निर्मासां वृदशैले यज्ञजुदेवनं फलम् ख क पुस्तके नास्ति ।
४. भगांगं ग । ५. सहदेवीमजाक्षमा ग । ६. ख पुस्तके न सन्ति ।

सप्तपादं ग्रहाख्यं वा हेम पत्र विभूषितम् । वज्रेन्द्र नील रुद्राख्यं महार्घमणि चर्च्चितम् ॥१५॥
चतुष्पादोऽथ वा कार्य्यस्त्रिमण्डल समोऽपिवा । व्याघ्रचित्रकपट्टैवा उपधानानि कारयेत् ॥१६॥
अन्यैर्वा रञ्जितैश्चर्म्मैर्मृदुतूलक पूरिताम् । शय्यां दैर्घ्यार्द्ध विस्तीर्णां चतुर्हस्तां सुलक्षणाम् ॥१७॥
वितस्ताधिकमिच्छन्ति नृपेश गुरुविद्यया । पद्मपादाथ पादा वा गजसिंह पदाथवा ॥१८॥
दन्तिदन्त विचित्रा वा हेमरत्न विभूषिता । शुभ पट्टोत्तरा वा धात्रा करिण्या हस्तमुच्छ्रिताः ।१९॥
किन्नराद्याः प्रकर्त्तव्याः सर्व्वशोभा समन्विताः । शुभबन्धसमोपेताः सकुम्भा अथ सग्रहाः[1] ॥२०॥
शिवोपलसमं मानं कार्य्यं वं शिववारणम्[2] । पद्मस्वस्तिक सङ्घट्ट उत्पलं विहगान्वितम् ॥२१॥
यत्र वल्लीकृतापीड हेमदन्तं सुसञ्चितम् । वज्रपद्ममहापद्म रागवैदूर्य्य भूषितम् ॥२२॥
गजकुम्भ समाकारमर्द्ध चन्द्रकृतापि वा । सहस्रकिन्नरी मानं सप्तमञ्च शतैः पिवा ॥२३॥
नृवेशं सर्व्वलोकानां त्रिशतं द्विशतं पिवा । तूणौ शय्या समा कार्य्या मृदुकौष्ठक पूरकैः ॥२४॥
उपधानं विचित्रन्तु कनकं मृदु वर्त्तुलम् । वृत्तशृङ्गाटकाकारान् श्रवणाख्याय कण्डुकान् ॥२५॥
यानं शय्याकृति कार्य्यं वृत्तपादं सुशोभनम् । वितस्तिरुच्छ्रिता कार्य्या शिवपादार्क्षा मृत्तिका ॥२६॥
एवं समस्तं प्रत्यग्रं कृत्वा शय्यासनादिकम् । वस्त्रालङ्कार शोभाढ्यमभिषेकं समारभेत् ॥२७॥
ततो धूपस्य[3] वैश्यस्य चर्म्म रोहितमक्षतम् । सिंहस्याथ तृतीयस्य व्याघ्रस्य च ततः परम् ॥२८॥
चत्वारि तानि चर्म्माणि तस्या वेद्या उपस्तरेत् । शुभे मुहूर्ते संप्राप्ते पुष्ययुक्ते निशाकरे ॥२९॥
हेमं वा राजतं ताम्रं क्षीरवृक्षमयं पिवा । भद्रासनं प्रकर्त्तव्यं सार्द्धहस्त समुच्छ्रितम् ॥३०॥
सपादहस्तमानन्तु राज्ञा मण्डलिकान्तरा । सुसंहृष्टमना राजा हैमन्ते दीपं संविशेत् ॥३१॥
दैवज्ञामात्य कञ्चुकिवन्दि पौर सुहृद्वृतः । द्विज वेदध्वनि गीत पटु वाद्य रवान्वितः ॥३२॥
मृदङ्ग शङ्ख तूर्य्यैश्च शुभ शब्दैर्हता शुभम् । अहतक्षौमानि निवसं नृपं कम्वलछादितम् ॥३३॥
कलशैर्वलि पुष्पाढ्यैःसर्पिपूर्णैश्चस्नापयेत् । अष्ट-षोडश-विशांष्टशतमष्टाधिकं पिवा ।
कलशानां समाख्यातमधिकानामुत्तरोत्तरम् ॥३४॥

---

१. संग्रहा ग ।

२. शिवोपया सममानं कार्यं वै शिवधारणम् ग ।

३. वृषस्य ग ।

कल्याणैर्न तु मन्त्रेण मङ्गलेन जपेन वा। देवी शम्भु भवेनाथ स्नाप्याज्येन अथापिवा ॥३५॥
आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम्। आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः ॥३६॥
भौमान्तरीक्ष दिव्यं वा यत्तु कल्मषमागतम्। सर्व्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छति ॥३८॥
ततः कम्बलमुपनीय पुष्पस्नानाम्बुपूरितैः। कलशैः स्नापयेद्राजन्नार्चयोऽनेन मन्त्रेण ॥३९॥

सुरास्त्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः।
ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च समरुद्गणाः ॥४०॥
आदित्या वसवो रुद्रा अश्विनौ च भिषग् वरौ।
अदितिर्देव माता च स्वाहा सिद्धिः सरस्वती ॥४१॥

कीर्तिलक्ष्मीर्द्युतिः श्रीश्च सिनीवाली कुहूस्तथा। दितिश्च सुरसा चैव विनता कद्रुरेव च ॥४२॥
देवपत्न्यश्च या प्रोक्ता देव मातर एव च। सर्व्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसां गणाः ॥४३॥
नक्षत्राणि मुहूर्त्ताश्च पक्षाऽहोरात्रि सन्धयः। संवत्सरा दिनेशाश्च कलाः काष्टा क्षणा लवाः॥

सर्व्वे त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः ॥४४॥

वैमानिकाः सुरगणाः मानवाः सागरैः सह। सरितश्च महाभागा नागाः किम्पुरुषास्तथा ॥४५॥
वैखानसा महाभागा द्विजा वैहायसाश्च ये। सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि च ॥४६॥
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः। भृगुः सनत्कुमारश्च सनकोऽथ सनन्दकः ॥४७॥
सनातनश्च दक्षश्च जैगीषव्योऽथ नन्दनः। एकतश्च द्वितश्चैव त्रितो जावालि-कश्यपौ॥

दुरयो[1] दुर्विनीतश्च कण्वः कात्यायनस्तथा ॥४८॥

मार्कण्डेयो दीर्घतपा शुनः शेपो विदूरथः। द्यौर्त्नः संवर्त्तकश्चैव च्यवनोऽत्रि पराशरः ॥४९॥
द्वैपायनो यवक्रीतो देवरातः सहानुजः। एते चान्ये च मुनयो वेदव्रत परायणाः ॥५०॥
सशिष्यास्तेऽभिषिञ्चन्तु सदाराश्च तपोधनाः। पर्व्वतास्तरवो वन्द्याः पुण्यान्यायतनानि च ॥५१॥
प्रजापति दितिश्चैव गावो विश्वस्य मातरः। वाहनानि च दिव्यानि सर्व्वलोकाश्चराचराः ॥५२॥

१. दुर्वासा ग।

अग्नय पितरस्तारा जीमूताः खं दिशो जलम् । एते चान्ये च वहवः पुण्यैः सङ्कीर्त्तनाशुभैः ।।

तोयैस्त्वामभिषिञ्चन्तु सर्व्वोत्पातनिवर्हणैः ॥५३॥

इत्येवं शुभदैरेतैर्मन्त्रैर्दिव्यैस्तथापरैः । शैवै र्नारायणैः रौद्रै र्व्रह्मशक्र समुद्भवैः ।

आपोहिष्ठा हिरण्येति शम्भवेति तथैव च ॥५४॥

सर्व्वमङ्गल मङ्गल्यैर्वस्त्रं कार्पासिकं ध्रियात् । शङ्ख वेणुरवैस्तूर्य्यै राचान्तो मङ्गलैर्नृपः ॥५५॥

ततः सम्पूजयेद्देवान् गुरुन् विप्रान् ध्वजायुधान् ।

छत्रं बाद्यं गजानश्वान् परिजप्तानि धारयेत् ॥५६॥

देवेन विजयेनोद्यमलङ्कारानि पार्थिवः । द्वितीयायां ततो वेद्यां गत्वाहूय हुताशनम् ॥५७॥

देवानां वदनं स्थानं निमित्तानि तु लक्षयेत् । स्वाहा रुद्राय चेन्द्राय विष्णवे ब्रह्मणे शिवे ॥५८॥

प्राजापत्ये कुमाराय विघ्नहाय विनायके । सूर्य्याय ग्रहराजाय वराहाय त्रिविक्रमे ॥५९॥

मातृणां वरदे मात्रे चामुण्डायै स्वधेति च । नागराजायानन्ताय ततो राजा समाहरेत् ॥६०॥

क्रमेण संस्थिते चर्म्मण्युपविशेन्नराधिपः । वृषस्य वृषदंशस्य रुरोश्च पृषतस्य च ॥६१॥

तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् । उपविष्टे पुनर्होमं तैर्मन्त्रैः सघृतैस्तिलैः ॥६२॥

कृत्वा शेषं समाप्ति स प्राञ्जलिः संस्थितो वदेत् ।

यान्तु देव गणाः सर्वे पूजामादाय पार्थिवीम् ॥६३॥

सिद्धिं दत्वा सुविपुलां पुनरागमनाय वै । नृपतिरतो दैवज्ञान् पुरोधांश्च द्विजानर्च्चयेत् ॥६४॥

गोभूहिरण्य रत्नैश्च अन्यानपि क्रमागतान् ॥६५॥

स्थल देवान् पुरोदेवीन् नदीकल चतुष्पथान् । अभयञ्च जने देयं गङ्गोत्सङ्गं समारचेत् ॥६६॥

अलङ्कृत्य यथान्यायं सितौ तौ वस्तुभूषितौ । देवदेवीति विज्ञाय वन्धनस्थांश्च मोचयेत् ॥६७॥

नमो विचित्राङ्ग सदुष्टान् पुनस्तान् कृतागसान् । विभवानुरूप भावैश्च पुरे पूजां समारभेत् ।६८॥

सिंहासनं समास्थाय चतुस्के घृतद्योतितैः । दीपैः रजतपत्रस्थैः तोयार्घमृतवंदितैः ॥६९॥

रोचनादिकं पश्येद् दर्पणं मंगलानि च । एवं पुण्ये अवाप्नोति कर्त्ता राज्यायुः सम्पदः ॥७०॥

विनापि वर्षे फलदं पुष्टं पुष्याभिषेचने । राष्ट्रोत्पातोऽयसेषु धूमकेतोश्च दर्शनम् ॥७१॥

ग्रहावमर्दनं चैव पुष्यस्नानं समाचरेत् ॥ नास्ति लोके स उत्पातो यो ह्यनेन न शाम्यति ॥७२॥

मङ्गलञ्चापरं नास्ति यदस्मादतिरिच्यते । अधिराज्यार्थिनो राज्ञः पुत्रजन्माभिकांक्षया:[1] ॥७३॥
तत् पूर्व्वमभिषेकेण विधिरेष प्रशस्यते । देवेन ब्रह्मणे दत्तं तेनाप्युशनसे पुनः ॥७४॥
उशनाच्च गुरोः प्राप्तं ततो देवः स ते गतम् । महेन्द्रार्थमुवाचेदं वृहत्कीर्त्ति बृहस्पतिः ॥७५॥
स्थानमायुः प्रजावृद्धिः सौभाग्यकरमुत्तमम् । अनेनैव च तोयेन हस्त्यश्वं स्नापयेत् तु यः ॥७६॥
तस्याभय विनिर्म्मुक्तं परां वृद्धिमवाप्नुयात् । प्रतिसंवत्सरं कार्य्यमभिषेकन्तु पार्थिव ॥७७॥
माण्डलीकनरेन्द्राणां सामन्ताधिपतेः पिवा । सामन्तानां सदा कार्य्यं विघ्नेश्वर[2]मखं शुभम् ॥७८॥
स्त्रिया वा लक्षणोपेता यस्य वा लभतेऽसुखम् । तस्येदं कारयेत् स्नानं सर्व्वकामप्रसाधकम् ॥७९॥

इति श्री देवीपुराणे पुष्याभिषेको नाम सप्तषष्टितमोऽध्यायः[3] ।

---

१. ख पुस्तके न सन्ति ।

१. कांक्षिणः ग ।   २. विश्वेश्वरय ग ।

३. इत्याद्ये त्रैलोक्याभ्युदयपादे पुष्पाभिषेकः समाप्तः ग ।

# अष्टषष्टितमोऽध्यायः।

मनुरुवाच ।

गोतीर्थे पुत्रकामाय धनकामाय सङ्गमे । मातृस्थानेषु सौभाग्यं श्मशाने मृतपुत्रिकाम् ॥१॥

जीर्णे कूपे काकवन्ध्यां पुष्करिणीतटे शुभे । नित्यं विनायकस्थाने स्नापयेत्तु कुमारिकाम् ॥२॥

रक्तवासोत्तरीयान्तु यस्या नोत्पाद्यते नरः । नद्यास्तु पश्चिमे कूले लेख्यस्तीर्थेषु चाग्रतः ॥३॥

मातृणां वामभागे तु यज्ञस्याग्नेयता दिशि । तले तु एक वृक्षस्य मध्ये चैव चतुष्पथे ॥४॥

लिखेत् पूर्व्वेणैव रणे श्मशाने नैर्ऋते लिखेत् । जीर्णे कूपे यथेच्छन्तु पर्व्वतस्योत्त रेण तु ॥५॥

ऐशान्यामेकलिङ्गे तु याम्यां वन आरामयोः । त्रिकूटस्योत्तरे भागे आधारस्याष्टपदे लिखेत् ॥६॥

पुस्तके नैर्ऋते लेख्यमायतनेषु पृष्ठतः । वायव्यां वारुणीमध्ये गोष्ठे चैव यथेप्सया ॥७॥

नैर्ऋत्यां याम्यमध्ये तु पुलिनेतु समालिखेत् । कौवेरी ऐशानीमध्ये सङ्गमे च समालिखेत् ॥८॥

तडागात् पद रातेनैव लिखेद्दिक्षु यथेप्सया ।
एते स्थाना मयाख्याता स्थान श्रेष्ठाश्च दोषजाः । ॥९॥
भयं मृत्युं करिष्यन्ति गोत्रोत्सादं दरिद्रताम् ।
मन्त्रसिद्धिर्न जायेत सुतश्चैव विनश्यति । ॥१०॥

कुलक्षयमतो याति सभृत्यपशुबान्धवैः । आदौ भूमिं परीक्षेत पश्चात् कुर्वीत मण्डलम् ॥११॥

सशल्यामुषरां चैव स्फुटितां विषमां तथा ॥
वल्मीकं ग्रामधानञ्च अशुभां तां विवर्ज्जयेत् ॥१२॥

सशल्यान्ते केशबहुला ऊषरे तु धनक्षयः । स्फुटिते मरणं ज्ञेयं विषमे शस्त्रतो भयम् ।

वल्मीके अनपत्यार्थं ग्रामे धाने त्वनिर्वृतम् ॥१३॥

सुषमां शाद्वलां भूमिं कूर्म्मपृष्ठोन्नतां तथा । पूर्व्वप्लवा वृद्धिकरी नराणाञ्च शुभप्रदा ॥१४॥

दक्षिणतो मृत्योर्भयमर्थक्षयं पश्चिमतः । बलं ददत्युत्तरतः ॥
नैर्ऋते शस्त्राद्भयमाग्नेय्यामग्निदाहश्च ॥१५॥
ऐशान्यां कामदा मही वायव्यां[1] शस्त्रतो भयम् ।
अष्टौ दिग् भागाः मयाख्यातास्ततः कर्म्म समारभेत् ॥१६॥
ग्रहान् पापान् हनेच्छ्वेतो रक्तोऽपि च गणान् हनेत् ।
कृष्णः सर्व्वासुरान् हन्ति पीतकन्तु विनायकान् ॥१७॥
पिशाचान् राक्षसांश्चैव हरते हरितो रजः । रुद्रो ब्रह्मा हरिर्द्देवी सर्व्व देवन्तु पञ्चमम् ॥१८॥
आकाशात् कृष्णको जातः पृथिवीं हरितां विदुः ।

इति श्री देवीपुराणे काम्यस्नान स्थाननिरूपणं नामाष्टषष्टितमोऽध्यायः[2] ।

---

१. कौवेर्य्या ग ।

२. नास्ति ग पुस्तके ।



# एकोनसप्ततितमोऽध्यायः ।

मनुरुवाच ।

सर्व्वकामप्रदं पुण्यं गणयागं वदामि ते । हिताय सर्व्वलोकानां पार्थिवानां विशेषतः ।
विनायकः कर्म्मविघ्न सिद्ध्यर्थं विनियोजितः । गणानामाधिपत्ये च रुद्रेण ब्रह्मणा पुरा ॥२॥
तेनोपलक्षितं कर्म्म लक्षणानि निबोधत । स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डश्च पश्यति ॥३॥
काषायवाससश्चैव क्रव्यादांश्चावरोहति । अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठति ॥४॥
व्रजमानं तथात्मानं मन्यतेऽनुगतं परैः । विमना विफलारम्भः संसीदत्यनिमित्ततः ॥५॥
तेनोपसृष्टो लभते न राज्यं राजनन्दनः । कुमारी न च भर्त्तारमपत्यं गर्भिणी तथा ॥६॥
आचार्य्यत्वं श्रोत्रियश्च शिष्यो नाध्ययनं तथा । वणिग्लाभं न चाप्नोति कृषीश्चैव कृषीवलः ॥७॥
स्नपनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्व्वकम् । गौरसर्षप कक्कोल सद्यो नोत्सादितस्य च ॥८॥
सर्व्वौषधैः सर्व्वगन्धै र्विलिप्तशिरसैस्तथा । भद्रासनोपविष्टस्य स्वस्तिवाच्यान् द्विजान् शुभान् ॥९॥

अश्वस्थानाद गजस्थानाद् वल्मीकात् सङ्गमाद् ह्रदात् ।
मृत्तिकां रोचनां गंधान् गुगुलुञ्चाप्सु निक्षिपेत् ॥१०॥

यदा कृतं ह्येकवर्णैश्चतुर्भिः कलशैर्ह्रदात् । चर्म्मण्युपानहे रक्ते स्थाप्यं भद्रासनं तथा ॥११॥
सहस्राक्षं शतधारमृषिभिः पावनं कृतम् । तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥१२॥
भगं ते वरुणो राजा भगं सूर्य्यवृहस्पती । भगं मित्रश्च वायुश्च भगं सप्तर्षयो विदुः ॥१३॥
यत् ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु ते सदा ॥१४॥
स्नातस्य सार्षपं तैलं स्रुवेणौडुम्बरेण तु । जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्यते ॥१५॥
सितश्च सन्मितश्चैव तथा शालकटङ्कटाः । कूष्माण्डराज पुत्रांश्च यजेत् स्वाहासमन्वितम् ॥१६॥
नामभिर्वलिमन्त्रैश्च नमस्कारसमन्वितैः । दद्यात् चतुष्पथे सूपं कुशानास्तीर्य्य सर्व्वतः ॥१७॥

कृत्वा कृतांस्तण्डुलांश्च पललौदनमेव च ।
मत्स्यान् पक्वांस्तथा वामान् मांसानि विविधानि च ॥१८॥
पुष्पांश्चित्रान् सुगन्धांश्च सुराश्च त्रिविधामपि । मूलकं पूरिकापूपांस्तथैवोण्डेरक स्रजः ॥१९॥
दधिपायसमन्त्रश्च गुडवेष्टित मोदकान् । विनायकस्य जननीमुपतिष्ठेत् ततोऽम्बिकाम् ॥२०॥
दूर्व्वासिर्षप पुष्पाणां कृत्वार्ध्य पुष्पमञ्जलिम् । रूपं देहि यशो देहि भाग्यं भगवति देहि मे ॥२१॥
ततः शुक्लाम्बरधरः पुष्पगन्धानुलेपनः । ब्राह्मणान् भोजनं दद्याद् वस्त्र युग्मं गुरोरपि ॥२२॥
एवं विनायकं पूज्यं ग्रहान् पूर्व्वविधानतः । अराध्येन प्रसादेन गुरुदेवद्विजार्च्चनम् ॥२३॥
कर्म्मणां फलमाप्नोति श्रियश्चाप्नोत्यनुत्तमाम् ॥२४॥

इति श्री देवीपुराणे विनायकमण्डलपूजास्नानविधि नामैकोनसप्ततितमोऽध्यायः[1] ॥

१. अधिविनायक मंत्रपूजास्थापन विधिः ग ।



# सप्ततितमोऽध्यायः ।

ओं विनायकाय गों नमः । गां हृदयाय नमः । श्रों शिरः । गूं शिखा । गैं नेत्रे ।
गौं कवचम् । गः अस्त्रम् ॥१॥

एतैः सर्वं प्रकर्त्तव्यं मण्डलैः सोपपातकैः । घाताग्निशत्रु तोयाग्नि दिनरात्र्यर्द्धगामि तु ॥२॥

एवं मण्डल विन्यासैर्हेमराजत भास्करैः । पटे वा लिखिता भूर्जे मन्त्रा आयुः प्रदायकाः ॥३॥

नराणां वाजयोधानां तुरगेभवृषोष्ट्रयोः । नामाद्यक्षरसंरुद्धा हेमलेखानि नादरात् ॥४॥

मदकुङ्कुम कर्पूर रोचनारस लेखिताः । गोमयेन सवत्साया भूमौ च पतितेन तु ॥५॥

परस्थं मातृमध्यस्थं षोडशानान्तु रुद्रगम् । द्विगुणस्थं गुणान्तस्थं मण्डलानुगतं कृतम् ॥६॥

पाणौ कण्ठकटिवस्त्रं हरुदेवाद्पट्टगम् । मत्तवारण संरुढं पूजितं धनपुत्रदम् ॥७॥
वस्त्रहेम मणि माल्यगन्धकर्पूर चन्दनैः ॥८॥

फलैर्नीरसनिर्मांसं मध्यस्थं धनधान्यदम् । जातीचम्पकोशीरं पूजितं घृतमध्यगम् ॥९॥
सितभावोपचारेण आरोग्यायुः प्रवर्द्धनम् ॥१०॥

रक्तपीता सिता नीला कामस्तम्भन मोहजैः । कर्त्तव्यं सर्व्वकार्य्येषु कालश्चात्र समृद्धये ॥११॥

इति श्री देवीपुराणे रक्षाविधानं नाम सप्ततितमोऽध्यायः[1] ।

---

१. रक्षाविधानम् ग ।



# एकसप्ततितमोऽध्यायः ।

मनुरुवाच ।

पार्थिवात् तु कृता रक्षा वहुधा रुद्रलाञ्छिता[1] । तद्वर्णवदसंख्याता गजकुम्भस्थमाहवे ॥१॥
परसैन्य विनाशाय पीत पुष्पादि पूजिता । सर्व्वकामप्रदा रक्षा आद्यवर्णोप लाञ्छिता ॥२॥
अष्टवर्ग कृतान्तस्था चन्द्रमध्यगता[2] पुनः । सितपुष्पोपचारेण ज्वरदा च श्रमापहा ॥३॥
तेजोवर्णगता रक्षा तन्मण्डल कृतानुगा । नागाविरूपसम्पूर्णा विषभूत ज्वरापहा ॥४॥
वायु वीज कृता पीडा सपताका सिताश्रिता । चालने परसैन्यस्य विधिनानेन कल्पिता ॥५॥
वटकाष्ठोत्थफलके वह्लिस्तम्भेन वा मुने । रक्षेयं ताम्रफलके ज्वरशीत निवारणी ॥६॥
क्षीरचन्द्रघृतान्तस्था दाहतापशमे मता । फल होमाय वा मन्त्रा फलदा घृततर्पणा ॥७॥
पुष्पहोमा जयं दद्यादायुरारोग्य सम्पदाः । तर्पणायसकुष्ठादि सर्व्वकाम फलप्रदा ॥८॥
आदित्यस्य च वर्णेन कालवर्णेन वा मुने । रुद्रदेवेन देवस्य तर्पणं विहितं मुने ॥९॥
चतूर्व्यूहसमायुक्तः पूजितो मधुसूदनः ॥१०॥

इति श्रीदेवीपुराणे रक्षात्रिमूर्त्ति सूर्य्य तत्त्व भेद पूजा नामैक सप्ततितमोऽध्यायः ।

---

१. अक्रलाञ्छिता क । २. कृता ग ।

# द्विसप्ततितमोऽध्यायः ।

वशिष्ठ उवाच ।

दुर्गाणाञ्च पुराणाञ्च प्रमाणायामसंस्थितिम् । यथावच्छ्रोतुमिच्छामि सर्व्वलोके सुखावहाम्[1] ॥१॥

बृहस्पतिरुवाच ।

सृष्ट्यादौ कथिता ब्रह्मन् ब्रह्मणामित तेजसा । स्वर्भूर्लोक विभागश्च पातालतलवासिनाम् ॥२॥
जम्बूद्वीपे यथा लोका निवसन्ति सुखार्थिनः । तथाहं सप्रवक्ष्यामि यथा शम्भुः पुराऽब्रवीत् ॥३॥
सर्व्वेषां सुरसङ्घानां यथा ब्रह्मा उवाच ह । पूर्व्वं निकामचारिण्यो ह्यनिकेता अथावसन् ॥४॥
प्रजाः सर्व्वाः सुहृष्टात्मा भय द्वन्द्वविवर्ज्जिताः । पृथुः शासदिमां पृथ्वीं धर्म्मवर्त्मन्यवस्थितः ॥५॥
प्रजा लोभं गता विप्र कामक्रोध वलेन च । कामं स्त्रीषु प्रवृत्तासु निशुम्भवशगा यदा ॥६॥
तदा सदाभवत् सिद्धिः कल्पवृक्षसमुद्भवा । देवापि मेरुनाच्छन्ना दुर्गं दानवशङ्कया ॥७॥
ततो ब्रह्मा समाधाय विश्वकर्म्मा महामतिः । गृहाणि चक्रिरे तासु प्रजासु[2] सुखहे तवे ॥८॥
जलशीतातपादीनां प्रतिघाताय चक्रिरे । यथा प्रीतिर्यथा योगं निकेतानि पृथक् पृथक् ॥९॥
मरुधन्वसु निम्नेषु पर्व्वतेषु नदीषु च । संप्रयान्ति च दुर्गाणि धान्यं पार्व्वतमौदकम् ॥१०॥
यथा कालं यथा देशं समेषु विषमेषु च । नगरं सन्निवेशानि दुर्गाणाञ्च यथाविधि ॥११॥
ततस्तु मापयामास सखेटकानि पुराणि च । ग्रामाणि च यथाभागं तथैवान्तः पुराणि च ॥१२॥
तेषामायामविष्कम्भान् सन्निवेशान्तराणि च । चक्रुस्ततो यथाप्रज्ञं मित्वा मित्वात्मनोऽङ्गुलैः ॥१३॥
मानार्थानि प्रमाणानि तदा प्रभृति चक्रिरे । भानुं रेणुं कचं लिक्षा यूका यवक्रमाष्टधा ॥१४॥
गुणिता ह्यङ्गुलं विप्र यवाष्टकमुदाहृतम् । देवाङ्गुलं समाख्यातं स्वं स्वं सर्वेषु चाङ्गुलम् ॥१५॥

---

१. हितावहा मृक ग ।
२. क्रियासु ग ।

यवाङ्गुल प्रदेशास्तु[1] हस्तकिष्कधनूंषि च। दश त्वङ्गुलपर्व्वाणि प्रादेश इति संज्ञितः ॥१६॥
अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते। तालः स्मृतो मध्यमया गोकर्णश्चाप्यनामया ॥१७॥
कनिष्ठया विवस्तिस्तु द्वादशाङ्गुल इष्यते। अररत्नैरङ्गुलान्युक्तः संख्यया त्वेकविंशतिः ॥१८॥
चत्वारि विंशतिश्चैव हस्तपादाङ्गुलानि तु। कष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलैः ॥१९॥
चतुर्हस्तो धनुर्दण्डो नालिका युगमेव च। धनुः सहस्रे द्वे क्रोशे गव्यूतिर्द्विगुणं मतम् ॥२०॥
अष्टौ धनुः सहस्राणि योजनं भवते नृणाम्। एवं मान विभागेन व्यवहारः स्थितो भुवि ॥२१॥
[2]ऐन्द्रोत्तरप्लवे भूमौ पुरं दुर्गञ्च शस्यते। चतुरस्रमथावृत्तं त्र्यस्रं दीर्घमथापि वा ॥ ॥२२॥

पुरं यथाक्रमात् श्रेष्ठं मध्यमोत्तमकनीयसम्।
समन्ताद् योजनान्यष्टावैन्द्रं देवपुरं मतम् ॥२३॥
दश द्वे वैष्णवं प्राहुः षष्टिमानन्तु शाङ्करम्।
दशब्राह्मं तथा पञ्च सामान्यं सार्व्वभौमिकम् ॥२४॥

योजनार्द्धं च मानानि पुराणि सन्निवेशयेत्। मध्ये राजगृहं कार्य्यं विप्राणाञ्चोत्तरादितः ॥२५॥
क्रमाच्छेषाणि कार्य्याणि प्रकृतिवाह्यतः पुरात्। वसेयुरन्यथा दोषो वर्णशङ्करजो महान् ॥२६॥
कृत्रिमेषु च दुर्गेषु चेष्टप्राकारकल्पना। चतुः पञ्चकमानेन कल्पयेद् विधिना मुने ॥२७॥

खातिक्यरचितं कार्य्यं प्रणालिभिः समन्वितम्।
चत्वार्य्यष्ट वाथवा त्रीणि द्वौ वा भूमि वशाद् भवेत् ॥२८॥

नवदुर्गा समेतञ्च सशिवं भुजगान्वितम्। नगरं सर्व्वतोभद्रं कर्त्तव्यं रुचकं पिवा ॥२९॥
स्वस्तिकं मध्यमं कार्य्यं कुमारीपुरमेव च। चतुष्पथे चतुर्युक्तं सर्व्वकाम सुखावहम् ॥३०॥
छिन्नकर्णं विनासञ्च दुस्थितं कुशदुर्व्वलम्। नगरं न प्रशंसन्ति गर्त्तं विद्धं विभेदितम् ॥३१॥
अग्रतः स्वल्पप्रासादं छिन्नघ्राणं विदुर्बुधाः। द्विमुखं कर्णहीनन्तु कृशं मध्ये कृशं विदुः ॥३२॥
दुस्थितं निम्नं याम्यन्तु नैऋर्तं धनदुर्व्वलम्। सौम्यं सर्व्वसुखाच्छादि पूरितं वारुणं वशम् ॥३३॥
याम्यमायुःप्रदं पूर्णं नगरं प्रीतिवर्द्धनम्। सर्ववस्तु संपूर्णं च सर्व्वारोग्य सुखंप्रदम् ॥३४॥

---

१. अथवाङ्गुल क। २. तन्त्रोत्तर ग।
३. वसेधरण्यपथ्यदोषो ग।

मध्यं चतुष्पथोपेतं न च तं पीडयेत् क्वचित् । ब्रह्मस्थानं हितं विप्र शिवस्तत्र सदा स्थितः ॥३५॥
चतुर्विंशतिताद्यस्तु हस्तानष्टगतं परम् । अत्र मध्यं प्रशंसन्ति ह्रस्वोत्कृष्ट विवर्जितम् ॥३६॥
अथ किष्कुशतान्यष्टौ प्राहुर्मुख्यं निवेशनम् । नगरार्द्धश्च विष्कम्भं खेटं ग्रामं ततोर्द्धतः[1] ॥३७॥
नगराद् योजनं खेटं खेटाद् ग्रामार्द्ध योजनम् । द्विक्रोशं परमा सीमा क्षेत्र सीमा चतुर्धनुः ॥३८॥
त्रिंशद्धनुर्ग्राममाहुः सीमामार्गो[2] दशैव तु । विंशद्धनुः ग्राममार्ग सीमामार्गो दशैवतु ॥
धनूंषि दश विस्तीर्णः श्रीमान् राजपथः कृतः ॥३९॥
नृवाजिरथनागानामसम्बाधं सुसञ्चरः । धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः ॥४०॥
त्रिकरास्त्वुपरथ्यास्तु द्विकराप्युपरथ्यका । जङ्घापथश्च चतुष्पादः त्रिपदं स्याद्गृहान्तरम् ॥४१॥
व्यतीपादस्त्वर्द्धपादं प्राग्वंशः पदिकः स्मृतः । अवकरः परिवारः पादमात्र समन्ततः ॥४२॥
प्रावृट्काले तु सावित्री[3] कर्त्तव्या अन्यथा नहि ।
आद्रूये[4] कार्य्या पुरा विप्र अष्ट लोकविवर्जिताः ॥४३॥
न विशेच्छौकरं वक्त्रं तस्मिन् पालो भवेदसी । एवं नगरेऽष्टके सिद्धे पुरेषु च महामुने ॥४४॥
ततो मेधाकृति दुर्गं कल्पयन्ति नृपोत्तमाः ॥४५॥
सहजं गिरिदुर्गश्च कैलासं शाङ्करं यथा । तथा चाद्रापि द्रष्टव्यं बहुतोयगृहान्वितम् ॥४६॥
आख्यातं दिव्यसम्पन्नं विना दैवजलं[5] शुभम्
सार्द्धयोजनमानन्तु समं दीर्घमथापि वा ॥४७॥
श्रेष्ठं मध्यं भवेद्धन्वं पादांत कल्पसं भवेत् ॥
क्रोशं क्रोशार्धमं दुर्गं श्रेष्ठमाहुर्मनीषिणः ॥४८॥
इषुर्न चरते यत्र अधस्तात् प्रेरितो मुने । पथस्तेन धनुष्मता तत्र संस्कारमारभेत् ॥४९॥
चतुर्द्दिक्षु स्वदेशान्तदुर्ग दैवकृतं नृपः । कारयेद् युद्धयोग्यन्तु सप्त ग्राम शतावृतम् ॥५०॥
दुर्गे कृते चतुर्द्दिक्षु मण्डलं न विशत्यरिः । वीरवासावसंरोधात् पार्ष्णिग्राहभयादपि ॥५१॥

---

१. श्रीमान् ततार्द्धतः ग ।
२. दिशामार्गो ग ।
३. सावृत्ता ग ।
४. राज्ये ग ।
५. विनादैरजनम् ग ।

दुर्गं चतुर्व्विधं ज्ञेयमापत्स्वाश्रयकारणम् ।
औदकं पार्व्वतञ्चैव धान्वनं वनजं तथा ॥५२॥
चत्वारो मूलदुर्गे तु द्विभेदाः परिकीर्तिताः ।
अन्तर्द्वीपं[1] स्थलञ्चैव गुहाप्रान्तरमेव च ॥५३॥

प्रोक्तं निरुदकं स्तम्वमिरिणाख्यं तथैव च । खाञ्जनं चैव विज्ञेयं स्तम्वगहनमष्टमम् । ॥५४॥
आपो द्विधा गता यत्र तदन्तर्द्वीपमुच्यते । विज्ञेयं तु नदीदुर्गमित्युवाचोशना स्वयम् ॥५५॥
स्थूलमुन्नत देशः स्यादगाध सलिलावृतम् । जलदुर्गं द्वितीयं[2] स्यात् तडागं सरसश्च यत् ॥५६॥
गिरीणामन्तरालं यद्दैवद्वारं सुदुर्गमम् । गुहाख्यं पर्व्वतं दुर्गं प्रवदन्ति मनीषिणः ॥५७॥
प्रोत्तुङ्गटङ्क विच्छिन्नं सोपसारं सुसंस्कृतम् । प्रास्तरं गिरिदुर्गं स्यात् सर्व्वं दुर्गं सुलक्षणम् ॥५८॥
वहिर्निःसलिलं दुर्गं तृणवृक्षविवर्जितम् । ज्ञेयं निरुदकं स्तम्बं सदा दुर्गं विधायकैः ॥५९॥

एतदेकञ्च विज्ञेयमिरिणं सोषरं वुधैः ।
स्वल्पक्षारजलोपेतं द्वितीयं सोषरं[3] स्मृतम् ॥६०॥

एतावांस्तु विशेषः स्याद्धान्वनं द्विविधं पुनः । खञ्जनाख्यं पुनर्ज्ञेयं सजलाधारकर्दमम् ॥६१॥

स्तोकवृक्ष समायुक्तं स्तम्बाख्यं गहनं विदुः[1] ॥६२॥

वनदुर्गं द्वितीयन्तु प्रवदन्ति मनीषिणः । नदी पर्व्वत दुर्गेषु चतुरः पार्थिव आवसेत् ॥६३॥
वर्णोत्तमहिते ते द्वे सर्व्वकाम प्रसाधके । धान्वनं वनदुर्गञ्च आटव्यं तत् प्रकीर्तितम् ॥६४॥

वसन्ति स्वेन विधिना यथोद्दिष्टेन ते मुने ॥६५॥

अन्येऽपि च भविष्यन्ति दुर्गाश्रयसमाश्रिताः । तेऽपि तेषु यथा योगं हितकार्य्यरताः सदा ॥६६॥
खण्डस्फोटित संस्कारं द्रव्याणां निचयांस्तथा । रक्षाश्चैव यथाशास्त्रं कुर्य्याद् दुर्गेष्वतन्द्रितः ॥६७॥

दुर्गोत्पत्तेश्चतुर्थांशं दुर्गेष्वेवोपयोजयेत् ॥६८॥

खण्डस्फोटित संस्कारं क्रियादौ नित्यकर्म्मणि । कर्त्तव्यं पोषणे पादं कोषमर्द्धं प्रवेशयेत् ॥६९॥

---

१. अन्तरीय क ।
२. तृतीयम् ग ।
३. धान्वनं ग ।
४. नवदुर्गं प्रकीर्तितम् ग । वनदुर्गं क ।

देशकाल वशाद्वापि कल्पनीयौ व्ययाव्ययौ। प्राकारपरिखादीनां कल्पयेद् वा पृथक् पृथक् ॥७०॥
द्रव्याणां निचयार्थञ्च सग्रामान् महर्द्धिकान् । परिखाखननं नित्यं नित्यं वप्रविवर्द्धनम् ॥७१॥
प्राकारोपचयं नित्यं नित्यं धान्यादिसंग्रहः। शरीरस्य शरीरो वा पोतो पोतस्य वा यथा ॥७२॥
तथा दुर्गस्य कार्य्येषु दुर्गाचारहितो भवेत् ॥७३॥
आपदः सुलभा राज्ञां तेषां दुर्गः प्रतिक्रिया। दुर्गेषु मतिमांस्तस्मान्न प्रमाद्येत कर्हिचित् ॥७४॥
सुप्रभूनारिवध्यानां सर्व्वलोकोपकारिणाम्[1] । स्वाम्यादीनामनुच्छित्तावेकं दुर्गं बलं विदुः ॥७५॥
कृतोऽप्यापत् प्रतीकारो मोहादेव प्रमादतः ॥७६॥
तस्कराः खण्डयन्त्येव नरं निद्रालुकामिकम् । अनर्घ्य[2]निचयोपेतं सापसारं सुरक्षितम् ॥७७॥
दुर्ग दुर्गगुणोपेतं यस्य राज्ञः सुसंभृतम् । अनुच्छेद्यः स शत्रूणां याति मित्राणां चापदि ॥७८॥
अदुर्गस्तु पुनः शीघ्रमभियुक्तो बलीयसा । उत्सेध-वध-बन्धानामेकमाप्नोत्यसशंयम् ॥७९॥
तस्मात् सुकृतरक्षेषु दीर्घकालः सहिष्णवः। दुर्गेषु निचयाः कार्य्या द्विगुणा द्वादशाब्दिकाः ॥८०॥
अशेषस्नेह धान्यादि भैषज्य लवणानि च । शुष्कशाकादिक वल्लूरं क्षारगन्धस्तृणानि च ॥
अङ्गारायवसं काष्ठ सोरदारूणि वेगवः ॥८१॥
स्नायुलोहाश्म चर्म्माणि वल्कारण्या विषाणि च। शस्त्रभावगतं यन्त्रं विषाणान्यग्नि मुक्तयः ॥८२॥
शरा धनूंषि प्रासाश्च कृतार्य्यः काण्डकल्पनाः । कचग्राहिण्यक्रुद्धानां वरत्रा शणरज्जवः ॥८३॥
दात्रिका दूतयः कुण्डा भूषुण्डयो दृषदस्तथा। व्याघ्री शतघ्नी रोषण्यो जलयन्त्राणि मुद्गराः ॥८४॥
इत्येवमाद्याः कार्य्या निचया दुर्गचिन्तकैः। पुराणमिति यद्द्रव्यं कीटाद्युपहतञ्च यत् ॥८५॥
एवं प्रक्षिप्य तावत् तद् व्ययं तस्यैव कारयेत् ।
तावता हि व्ययाभावे दृष्ट्वा काल सहिष्णुताम् ॥८६॥
नवानां परिवर्तेन क्षिपेज्जनपदेषु वा । रक्षेत् शतकुलीमेकस्ता रक्षेच्छतिको दश ॥८७॥
दशैताश्चिन्तयेदेकं चतुर्थांशं पुरस्य वा । समागमं मनुष्याणां निमित्तं स्थानमेव च ॥८८॥

---

१. सर्वशोक प्रकारिणाम् ग।
२. आत्मस्य ख।

कालमर्थप्रमाणञ्च विद्याद्दशकुलाधिपः । मानुषाग्रं कुटुम्बस्य विभवे याति जीवके ॥८९॥
व्ययं विवाह सम्बंधं दायग्राहञ्च तत्वतः । नापृष्ट्वा प्रविशेत् कश्चिददायान्तं वा प्रवेशयेत् ॥९०॥
कारणं मोक्षकालञ्च[1] विजानीयाद् द्वयोरपि । अभ्यागतोऽन्य देशीयो नैकरात्रात् परं वसेत् ॥९१॥
सुस्थवृत्तेऽन्यदा तस्य प्रवेशाभाव एव च । अन्यदेशागतं पण्यं प्रवेश्यन्तं निवासिभिः ॥९२॥
दातव्यं प्रतिपण्यञ्च तैरेव हि विनिःसृतम् । दुर्गोपयोगि यद्द्रव्यं धान्यं वा बल्कलादिकम् ॥९३॥
तस्य कुर्य्यादनिर्व्वाहं कीटाद्युपहताहृते । नानिवद्धो वसेत् कश्चिन्न लिङ्गी न च भिक्षुकः ॥९४॥

न शस्त्रिणां न चोन्मत्तो न वाग्मी न कुशीलवौ ।
प्रवेशयेन्न चाज्ञातान् प्राक्प्रविष्टांश्च शोधयेत् ॥९५॥

आयुधीयैरशून्यानि सदा द्वाराणि कारयेत् । आगामिनाञ्च नार्थाना[2]मुपभोगाय कल्पयेत् ॥९६॥
विक्रयं सर्व्वपण्यानां बहिः सूनासुगासु च । अद्वारेण प्रविष्टस्य द्वारेणांसमयेऽपि वा ॥९७॥

द्विपादग्निनिषेधार्थं सातत्यादवघोषणम् ॥९८॥

प्रक्षेप्य पटलेभ्यश्च तृणजातं धनात्यये । नोपहन्यादमेध्येन न गर्तैर्नाप्यपस्करैः ॥९९॥
गृहकाष्ठतृणैर्वापि विटमार्गं न रोधयेत्[3] । अन्योन्यालोकि कर्त्तव्यं स्थानकं स्थानकान्तरात् ॥१००॥
प्राकारबाहुमेकैकं चरेयुर्निशि रक्षिणः । तान्येव भयशङ्कायां राज्ञि दूरगतेऽपि वा ॥१०१॥

निरन्तराणि कुर्व्वीत स्थानकानि प्रयत्नवान् ।
व्यामिश्रास्तेऽपि कर्त्तव्याः सैनिकैः पुरवासिभिः ॥१०२॥

लेख्यका वत्सतज्जाति गोत्र संख्यादिलक्षिताः । प्राकाराधिष्ठितं पादं पादं सर्व्वत्रचारिणाम् ॥१०३॥
आवद्धकवचं मध्ये बलस्यार्द्धं निवेशयेत् । उष्ट्राश्वाश्वतरारुढैः शीघ्रदूर प्रयायिभिः ॥१०४॥
संशोध्य परितो भूमिं दुर्गस्य दशयोजनात् । यतो यतो भयाशङ्का तत्र तत्र महामतिः ॥१०५॥
चरैर्विज्ञाय वृत्तान्तं तस्य योग्यं समाचरेत् । भाण्डागारेषु यत्नेन कोष्ठागारेषु नित्यशः ॥१०६॥

---

१. ज्ञेयकालञ्च क ग ।

२. अगामिनां च साधनाम् ग . सर्वाणां क ।

३. घटनांकेन बोधयेत् क ग । घटमार्गं निबोधयेत् ग ।

जलशालासु चोद्युक्ताः प्रयोज्याः कुलजाः स्थिराः ।
भीता लुब्धास्तथा त्रस्ताः भृत्या व्यसनिनः शठा ॥१०७॥
द्यूतमद्यरता दुर्गे न कार्य्यास्त्वधिकारिणः । नित्यं मन्त्रिजनोपेतं भिषक्सांवत्सरान्वितम् ॥१०८॥
सूत्रधारगणोपेतं नानाशिल्पि समाकुलम् । ग्रहकृत्योपसर्गादि शमनेषु प्रतिष्ठितम् ॥१०९॥
विषभूतोपहारांश्च गारुडिकादिकाँस्तथा ।
द्विजान् वेदविदश्चैव कारयेत् सन्निधौ नृपः । श्वशृगालान् महादुर्गे गोपुरादिषु वर्ज्जयेत् ॥११०॥
एवं कृते सदा विप्र पुष्कलां लभते श्रियम् । पातिगां सबलोपेतां निरावाधां सुखेन च ॥१११॥

वसिष्ठ उवाच ।

गोपुरस्य प्रमाणन्तु श्रोतुमिच्छामि तत्त्वतः । कीदृङ्मानं प्रकर्त्तव्यं दिन ऋक्षेषु केषु च ॥११२॥

बृहस्पतिरुवाच ।

पूर्वादीन् कारयेद्द्वारान् महादुर्गेषु चोत्तमान् । द्वात्रिंशत् करकोत्सेधमर्द्धेनैव तु विस्तरम् ॥११३
द्वितीयं मध्यमं कार्य्यं करषोडशकोच्छ्रयम् ॥११४॥
तस्य चार्द्धेन विस्तारं तृतीयं मनुमानगम् । चतुर्थं भानुमानन्तु रुद्रमानन्तु पञ्चमम् ॥११५॥
षष्ठं दशकरं कार्य्यं सप्तमं ग्रहमानितम् । वसुमानं भवेद्विप्र द्वारतश्चाष्टमं मतम् ॥११६॥
उच्छ्रायाच्चार्द्ध विस्तारान् द्वारान् कुर्व्वीत बुद्धिमान् ।
शैलानि दृढ कोष्ठानि नाना हेतियुतानि च ॥११७॥
ऊर्ध्वमण्डप युक्तानि वीथिकोपवनादिभिः । राजस्थान समायुक्तान् वातायन समन्वितान् ॥११८॥
मतवारणविद्याद्यान् ध्वजकैरुपशोभितान् । गज व्याल कृतापीडान् पद्मपत्रमनोहरान् ॥११९॥
कारयेद्द्विविधान् द्वारान् यथाशोभं यथाक्रमम् । मध्यमं षोडशमानश्चार्यमानमथापि वा ॥१२०॥
द्वारं सर्व्वेषु दुर्गेषु प्रवदन्ति मनीषिणः । सकपाटार्गलोपेतं सकीलकमथापि वा ॥१२१॥
भुजगेन[1] सयन्त्राद्यान् नागवन्ध सुसञ्चितान् । आयसान्यष्टकीलानि यथाभागगतानि च ॥१२२॥
कारयेद् द्वारसंस्थानि द्वारे द्वारान्तराणि च । मण्डपं वीथिका चाथ यत्र शस्त्रभृतो नराः ॥१२३॥

१. भुजाकुल म ।

तिष्ठन्ति द्वारपालाश्च नित्यं सन्निहितायुधाः । दुर्गेषु कारयेद् दुर्गां महिषासुरघातिनीम् ॥१२४॥
द्वारस्थं गजवक्त्रं वा धनदं वाथ पद्मजम् । त्रिषूत्तरासु रोहिण्यां देवऋक्षेषु चाथवा ॥१२५॥
कारयेत् पुरद्वारादि सुलग्ने ग्रहवर्ज्जिते । यथा शुक्रयुते वाथ दृष्टे वा चोच्छ्रयेऽथवा ॥१२६॥

शिलान्यासे वलिः कार्य्यः प्रासादोक्तो यथाविधि ।
हेमं कुम्भं सरत्नं वा शाखाधः सन्निवेशयेत् ॥१२७॥
पूतना शकुनी तत्र जम्भादीन् पूजयेद् ग्रहान् ।
देवान् यज्ञान् ग्रहान् नागान् पूजयित्वा यथाविधि ॥१२८॥
दैवज्ञान् सूत्रधारांश्च वस्त्रहोम स्रगादिभिः ।
ब्राह्मणान् स्वस्तिवाच्यांश्च पशुं शान्तौ निपातयेत् ॥१२९॥

दध्यक्षतस्रजः कुम्भं भक्ष्य भोज्यं चतुर्विधम् । कारयेत् सर्व्वलोकादिमुत्सवं विविधं पुरे ॥१३०॥
शङ्ख भेरीनिनादेन कुर्य्याच्चोत्सवादिकम् । शाखोच्छ्रयं तथा कार्य्यं छत्रं श्वेत पताकिकम् ॥१३१॥
एवं समुच्छ्रयेच्छारवाः सर्व्वद्वारेषु वुद्धिमान् । पूर्व्वांशं शोधयेच्चास्य स्वाती पुष्यसमुद्गमे ॥१३२॥
तेन परापि संसिद्धाः शेषाः सिद्धाः परा मुने । दिङ्भ्रान्तैः सुमहद्दोषो नृपस्य तन्निवासिनाम् ।१३३।
उडुम्वरं समं कार्य्यञ्चोर्ध्वडिम्वरकं पिवा । सार्द्ध हस्तन्तु विस्तीर्णमुच्छ्रयं हस्तमानितम् ॥१३४॥
शाखां विशामहीनान्तु षोडशांशामथापिवा । त्रिशाखमपि कर्त्तव्यं मध्यद्वारं विपश्चिता ॥१३५॥
स्तम्भा वृत्ताश्च द्वात्रिंशत् षोडशाष्टाष्टमेव च[2] । चतुरस्राथ कर्त्तव्या यथाशोभं यथा पुरम् ।१३६॥
विचिन्त्यार्थं तथा शास्त्रं दुर्गद्वारं निवेशयेत् । ऋद्धिमाप्नोति येनासु भयशोक विवर्जितम् ॥१३७॥
राजा प्रजाश्च नन्दन्ति सम्यग्द्वारे कृते मुने । सामान्यं लक्षणं तासां सौत्रं[3] सर्व्वत्र शस्यते ॥१३८॥
पुरदुर्गेषु कर्त्तव्यं यथावत्[4] तन्निबोधत । नागोत्तम समारूढ सच्छत्रो विशते यथा ॥१३९॥
तथा प्रतोल्यः कर्त्तव्या दुर्गे धर्म्मार्थकामदाः । अथवा आयसं शुद्धाः शृणु विस्तरतः फलम् ॥१४०॥
नचोर्द्धं पञ्चविस्ताराः पूर्व्वादिव विवर्द्धिताः[5] । नराक्ष्या पञ्चविस्तीर्णा यद्वृद्धा दक्षिणा मताः ॥

१. साधयेत् ग ।
२. ग पुस्तके पद्यद्वयं नास्ति ।
३. शौक्र ग ।
४. यथावृक्षं क ग ।
५. विवर्जिता क ग ।

सप्त सप्त हता तोया पञ्चसप्तहतोत्तरा ॥१४१॥

पञ्चाङ्गुलस्य वृद्ध्या वा सदा कार्य्यास्तु गोपुराः ।

आयमान विहीनास्तु दुर्गा राज्ञो भयावहाः ॥१४२॥

नित्योद्वेग भयत्रस्त तन्निवासिजनान्तराः[1] । सम्पूर्णमान वास्त्वङ्ग सुखदा गोपुराः सदा ॥१४३॥

तासां नामानि वक्ष्यामि यथा वा परिकीर्तिताः ॥१४४॥

श्रिया कान्तिद्युतिर्लक्ष्मीर्जयाभद्रापराजिता । अनन्ता शोभना दुर्गाः पूर्व्वेण परिकीर्त्तिताः ॥१४५॥

शान्ति वृद्धिर्भवा देवी काली घोरा विमोहिनी ।

विमला चेति याम्येन प्रतोल्यः शुभदायिकाः ॥१४६॥

रोचना मङ्गला रौद्री उग्रा चण्डा यशोवती ।

प्राप्ति दीप्तीति वारुण्यां वीथिकाः सर्व्वकामदाः ॥१४७॥

इच्छा प्रीतिः शुभा माता यशोदा धनदा उमा । शरण्या चेति सौम्येन दुर्गे गोपुरिका मता ॥१४८॥

सुस्थिता सुषमा कार्य्या[2] अविद्धा सुमनोहरा । सर्व्वलक्षणसम्पूर्णा पञ्चसप्ताथ भूमिका ॥१४९॥

मूलाद्वा दशहोनानि माला[3]द्वाराणि कल्पयेत् । शैलानि काष्ठ वेष्ठानि वज्रसौधानि कारयेत्॥१५०॥

लेपानि सर्व्वगन्धानि प्रासादविभवानि च । एवं लक्षणसम्पन्नं दुर्गं यस्य महीपतेः ॥१५१॥

स पातीह भयात् सर्व्वान् लोकान् कोषसमन्वितान् । पद्म स्वस्तिक गोमूत्र वस्तु न्यासगतेऽपिवा ॥

मध्यामध्यगतैर्गेहैः पङ्क्तिवृत्तगतैः पिवा । पुरं दुर्गं पिवा कार्य्यं प्रासादगृहभूषितम् ॥१५३॥

इति श्री देवीपुराणे गोपुरद्वारलक्षणं नाम द्विसप्ततितमोऽध्यायः[4]॥

---

१. जलान्तटाः क ग ।

२. सुविद्रा ग ।

३. माना ग ।

४. गोपुर प्रारलक्षणम् क ग ।



# त्रिसप्ततितमोऽध्यायः ।

मनुरुवाच ।

अथातः संप्रवक्ष्यामि अधोदुर्गनिवेशनम् । यथा यस्य प्रकर्त्तव्यं नृपलोक सुखावहम् ॥१॥
यस्मिन् विश्वं[1] भवेच्चोर्द्धं दुर्गं दुर्गविशारदः । तदधोभागवासन्तु कुर्य्यात् सर्व्वसुखावहम् ॥२॥
पूर्व्वं निम्नं शुभं दुर्गं सर्व्वेषां पुरवासिनाम् । आग्नेय्यामग्निदाहस्तु याम्ये तस्करजं भयम् ॥३॥
नैर्ऋते निर्धना लोका भवन्ति तन्निवासिनः । निर्धना धनहीनास्तु अपरा मानते जनाः ॥४॥
नित्योद्वेगपरा वत्स वायव्यां सन्नते गिरौ । मुदिताः सर्व्वलोकाश्च दुर्गे सौम्यांशनामिते ॥५॥
ऐशान्यां धर्म्मनिरता धनधान्यसमाकुलाः । भवन्ति तन्निवासिनो दुर्गे निम्नगते मुने ॥६॥
पूर्व्वभागे नृपश्चाधो वसेन्निम्नं यदा भवेत् । आग्नेये तेजसा विप्राः सुखदा भयदास्तथा ॥७॥
याम्ये अन्त्यजना वास्या नैर्ऋते शस्त्रकारिणः । वारुणे जलद्रव्यादि तथा शूद्रजनादयः ॥८॥
गन्धगन्धर्व्वनिरता वायव्ये नदते जनाः । सौम्ये हट्टजलं कार्य्यमैशान्यां देवतादिकम् ॥९॥
विपरीते महान् दोषः पूर्व्वे हट्टं नृपान्तकम् । भवते सुखदं वत्स यथा संस्थान वासिनाम् ॥१०॥
दुर्गं पुरञ्च नगरं कर्त्तव्यं मङ्गलायुतम् । न च शून्यानि वासानि धारयेद्देवतादिषु ॥११॥
न गृहं वीथिका दुर्गं पुरे शीर्णं विधारयेत् । राजभागं भवेत् तच्च देवतादिषु विन्यसेत् ॥१२॥
देवश्च शङ्करः कार्य्यः सगणो मङ्गलायुतः । तस्मिन् नित्योत्सवाः सर्व्वे गृहप्रासाद भूषिताः॥१३॥
वसेयुरुर्द्धगा लोका बाधा शाश्वतवर्जिताः । अटव्यादिषु दुर्गेषु अधोवासं न कारयेत् ॥१४॥
वसंस्तृणादिगेहेषु भयादि परिवर्ज्जिताः । अधोभागेस मेघादीन् धारयेन्मुनिसत्तमः ॥१५॥
धारयन् महदाप्नोति भयं राजा अरातिजम् । राष्ट्रं रिपुवले[2] नैव राजा च परिपीड्यते ॥१६॥

---

१. निम्नम् क ग ।

२. विप्रबलेनैव ग ।

तस्माद् दुर्गं विवृद्ध्यर्थञ्चोर्ध्ववासो विधीयते ।
उर्द्धर्वं तु सुभृतावास्याः कुभृतास्तु निवासयेत् ॥१७॥

मत्तोन्मत्तान् प्रमत्तांश्च दुर्गे न वासयेन्नरान् । नैके कुर्य्यात् प्रभुत्वन्तु न शूद्रे न कुशीलवे ॥१८॥
न च वन्धकिने कुर्य्यान्न चोऽयसि नियन्त्रिते । कुर्य्याद् दुर्गं विशीर्येत् यथा गेहं शिरोहतम् ॥१९॥
ऐन्द्रेशस्तु शिवो दुर्गे अधोर्द्धे तन्निपीडयेत् । स्वकायपीडनाद्दोषं शिवे स्वामी विनश्यति ॥२०॥
जलजे गिरिदुर्गे च वाधो[1] वासो भयावहः । अटव्ये तु विशेषेण शाश्वतं वर्ज्जयेदधः ॥२१॥
अरण्येषु च दुर्गेषु ऊषरेषु विशेषतः । वाह्ये[2] वासं न कुर्व्वीत अरण्येषु[3] तथैव च ॥२२॥
अरण्ये धर्म्महानिः स्यादूषरेऽपि तथैव च । अटव्ये शत्रुजा शङ्का तस्माद्वासमधस्त्यजेत् ॥२३॥
कृषिकर्म्मांतु चर्म्मादि लोहितन्तु गणायसम् । शरयन्त्रौषधादीनां संग्रहाय अधो वसेत् ॥२४॥
वणिग्वीथिनिवासिन्यो धान्यमेया हिरण्येन । उर्ध्वे चास्या वशीकृत्य राज्ञा दुर्गहितैषिणा ॥२५॥
पङ्कुलं खेटकं पर्ण दुर्गाधः कर्षयेत् सदा । तन्निवासिजना सेवने कार्य्याः सवलाः सदा ॥२६॥
एवं न क्षीयते दुर्गं धनधान्येन संभृतम् । वर्द्धते च जनः कोषो राजा च सुखमेधते ॥२७॥
यथा यथा विवर्धन्ते दैवौकानि गिरौपरि । तथा तथा विवर्द्धन्ते राज्ञो धर्म्मयशश्रियः ॥२८॥
यथारण्यवासिनाञ्च धर्म्मो भवति देहिनाम् । एवं राज्ञः श्रिया धर्म्मो दुर्गे कालवशाद् भवेत् ॥२९॥
दुर्गाधः कृत्रिमं दुर्गं किञ्चित् कालं विवक्षया । विजयार्थं प्रकर्त्तव्यं यथावत् तान्निबोध मे ॥३०॥
दुर्गाश्रयं समालक्ष्य ऊर्ध्वं दुर्गं वलं तथा । जलेन्धनञ्च धान्यञ्च यवसमायुधादिकम् ॥
तथा कुर्य्यान्महावाहो कृत्रिमं विजयोत्तमम् ॥३१॥

काष्ठेष्टमथवा शैलं खातिकारचितं तथा । द्रुमवल्लीलतोपेतं गर्भं तोयसमन्वितम् ॥३२॥
वाह्यतोयं सुरक्ष्यं वा दुर्गयन्त्रोपलादिभिः । कर्त्तव्यं गृहप्राकारैस्तोरणैरुपशोभितम् ॥३३॥
वीथी पूरकसंयुक्तमथवा मण्डपान्वितम् । मण्डपं शतदण्डेन द्विगुणं त्रिगुणं पिवा ॥३४॥
मानादवृत्तमथ त्र्यस्रमायतेन्दु यथाशुभम् । अनेक गर्भगर्भाढ्यं देवता मातरान्वितम् ॥३५॥

---

१. राज्ये ग ।
२. राज्ये क ग ।
३. अटव्येषु ग ।

सुदुर्ग नायकं कार्यं नागयज्ञं उमान्वितम् । अनेक माण्डमेयादिभृतं कूपप्रपान्वितम् ।
सूर्य्याग्नी धर्म्मतो देयौ शुभे चापादि वर्ज्जिते ॥३६॥
एवं कालवशात् कुर्य्याद् विजयाख्यं महापुरम् । नीचोच्च विधिसंस्थानं लक्षयित्वा गृहं बलम् ॥३७॥
पुरं दुर्गं प्रकर्त्तव्यं महर्द्धिफलकाङ्क्षया । त्रित्रिकं गर्भगर्भन्तु दण्डैश्चान्द्रादिभेदितैः[1] ॥३८॥
पूर्व्वादिदेशऋक्षन्तु द्विगर्भन्तु द्विरष्टकम् । वाह्ये द्वादशकं देयं तत्र विद्याद् बलाबलम् ॥३९॥
प्रवेशे भयदाः क्रूराः सौम्याः सौम्यफलप्रदाः ।
निष्काशे शुभदाः सर्व्वे पुरे दुर्गे च कीर्तिताः ॥४०॥
एकं पत्नी विनाशाय द्वे च मित्रधनापहे । त्रीणि ज्येष्ठसुतं हन्युर्नीचस्थानस्थिता ग्रहाः ॥४१॥
न भानौ नीचगे कुर्यात् पुरप्रासादकल्पनाम् । स्वामी नाशमवाप्नोति तत् पुरं नैव सिध्यति ॥४२॥
सौम्यैश्चोच्चस्थितैः कुर्य्याद् द्रव्यार्थं विजयं पुरम् ।
दुर्गं क्रूरैः प्रकर्त्तव्यं शत्रुनाशाय बुद्धिमान् ॥४३॥
वलं चन्द्रार्कलग्नानां वुद्धावासं समं समम् । आयुर्दा यशदा पाकराजयोगाष्टवर्गकम् ॥४४॥
चन्द्र दृष्टिवलं कर्म्मं सदख्या प्रश्नसम्भवान् ।
सोत्पात दैव सत्त्वोत्थं ज्ञात्वा दुर्गे शुभाशुभम् ॥४५॥
राजयोगं समावेशं संवत्सरमतं स्फुटम् । क्रियासाधन सिद्ध्यर्थं चारभेदग्रहसंश्रयम् ॥४६॥
स्थान काल स्वभावाख्यं वलं मित्रगृहाश्रितम् । रश्मिजञ्च तथा चान्यद्वलानां प्रवरं वलम् ॥४७॥
वक्रैः सौम्यशतैः कुर्य्याद् ग्रहै दुर्गपुरादिकम् ।
नित्यञ्च ते ग्रहा दद्युर्ऋद्धिं स्वामिजनस्य च ॥४८॥
द्रेक्काणाशशिवेश च नवांशमुदये शुभे । त्रिंशद्द्वादशभागे च कारयेत् पुरकल्पनाम् ॥४९॥
क्रूरैः क्रूरं विजानीयात् सौम्यैः सौम्यं विधीयते । तवादि विग्रहैर्वत्स रिपुमित्रविवर्ज्जितैः ॥५०॥
अतीतैरस्तुलग्नैश्च न कुर्य्यात् सन्निवेशनम् ॥५१॥
न कीटारण्यलग्नेषु न च सन्ध्यागतै र्ग्रहैः । पुरं दुर्गं प्रकर्त्तव्यं शत्रुक्षेत्रसमाश्रितैः ॥५२॥

---

१. वनम् ग।

मित्रर्क्ष मित्र सम्पन्नैः पुष्टैरुच्चाभिलाषिभिः । स्वक्षेत्रेस्वत्रिकोणेषु स्थितैः कार्य्यं सदापुरम् ॥५३॥

दुर्गं दुर्गसमीपस्थं तस्य मित्रत्रिकोणजैः । ग्रहैश्चन्द्रवलोपेतैः कार्य्यं सर्व्वं शुभावहम् ॥५४॥

सौम्ये धर्म्मार्थकामानि शेषाः स्थान समागताः । अग्निदाहं भयं हानिं रिपुपीडां सदारतिम् ॥५५॥

आग्नेयादि विजानीयात् पूर्व्वदुर्गो कृते पुरे । नन्दते पूर्व्वभागस्थे ईशे धर्म्मो विवर्द्धते ॥५६॥

सर्व्वकामानवाप्नोति पूर्व्वेशानोत्तरेण तु । सरित्पूर्व्वे वलोपेतैः शुभा याम्येन सारतः ॥५७॥

तडागं सवनं पश्चात् सौम्ये चेन्दीवरं दलम् । पूजयित्वा हरं दुर्गां ग्रहान् मातृ विनायकान् ॥

प्रासादोक्तविधानेन वलिं दत्वा कुरु पुरम् ॥५८॥

इति श्रीदेवीपुराणे पुरदुर्गचिन्ताजातक्रिया नाम त्रिसप्ततितमोऽध्यायः ।



# चतुः सप्ततितमोऽध्यायः

मनुरुवाच ।

नित्यो विभुः स्थितः कालो अवस्था तस्य हेतुना । नैमित्तादि विशेषैस्तु लोके पुण्यफलप्रदाः ॥१॥
संक्रान्त्याख्य पुराख्यातं पुण्यं धारा शुभा मुने । ग्रहणादिफलं पुंसां तीर्थभेदं शृणुष्व तत् ॥२॥
गङ्गाद्वारं कुरूक्षेत्रं नर्म्मदामरकण्टकम् । यमुनासङ्गमं पुण्यं वेत्रवती विपाशान्विता ॥३॥
सरयुः कौशिकी विन्ध्या गण्डकी च सरस्वती । चन्द्रभागा महापुण्या नदी गोदावरी तथा ॥४॥
कावेरी गोमती तापी देविका वरूणापरा । एताः पुण्यतमा नद्यो ग्रहणादिषु कीर्त्तिताः ॥५॥
अन्याश्च वहवः पुण्या अन्यकाले च कामदाः ।
अयने विषुवे ख्याती व्यतीपाते तथैव च । ॥६॥
दिनच्छिद्रे अमावस्यां ग्रहाणां सङ्गमेषु च । सन्मोहेषु समाजेषु एकर्क्षे सप्तपञ्चधा॥७॥
एवंविधेषु पर्व्वेषु चन्द्रे सर्व्वकलाभृते । तृतीयायाञ्च वैशाखे अष्टम्यां कुजवासरे ॥८॥
चतुर्दश्याञ्च कृष्णायां भौमाहे पितृतर्पणम् । कर्त्तव्यं सर्व्वकामानां पूरणाय नरोत्तमैः ॥९॥
अमावस्यान्तु संक्रान्तौ शिवादित्यन्तु यो नरः । यजते भक्तिमान् पूतः स पूतो भवते मुने ॥१०॥
कार्त्तिके ग्रहणं श्रेष्ठं गङ्गा यमुना सङ्गमे । मार्गेतु ग्रहणं पुण्यं देविकायां महामुने ॥११॥
पुष्येतु नर्म्मदा पुण्या माघे सन्निहिता शुभा । फाल्गुने वरूणा ख्याता चैत्रे पुण्या सरस्वती ॥१२॥
वैशाखे च महापुण्या चन्द्रभागा सरिद्वरा । ज्येष्ठे तु कौशिकी पुण्या आषाढे भाविका नदी ॥१३॥
श्रावणे सिन्धुनामाच प्रोष्ठे श्रेष्ठा तु गण्डकी ।
अश्विने सरयुः श्रेष्ठा भूयः पुण्या तु नर्मदा ॥१४॥
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ॥१५॥

---

१. अन्त क ।

सूर्य्ये च शशिना ग्रस्ते तमोरूपे महामुने। नर्म्मदा तोयसंस्पर्शात् कृतकृत्या भवन्ति ते ॥१६॥
ये सूर्य्ये सैंहिकेयेन ग्रस्ते वैराजनं नराः। स्पृशन्ति अवगाहन्ति न ते प्राकृतमानुषाः ॥१७॥

स्नात्वा राजक्रतुं लेभे दृष्ट्वा गोदानजं फलम्।
स्पृष्ट्वा गोमेधतुल्यन्तु पीत्वा सौत्रामणि लभेत्।
स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारणात् ॥१८॥

रविचन्द्रोपरागे तु अयने चोत्तरे तथा। एवं गङ्गापि द्रष्टव्या तद्वद्देवी सरस्वती ॥१९॥
शिवादित्यफलं यच्च मण्डले समुदाहृतम्। सग्रहे मङ्गलायोगे तदपि प्राप्नुयान्नरः ॥२०॥
ऊषरारण्य-क्षेत्रेषु पुण्यं यत् समुदाहृतम्। तदत्र काल माहात्म्यादुपरागे समाधिकम् ॥२१॥
यो वा आहृत्य तोयेन विधिना अभिषेचनम्। समन्त्रेणैव पूतेन तस्य पुण्यं ततोऽधिकम् ॥२२॥
आत्म वित्तानुसारेण पात्रैस्तैजस पार्थिवैः। वार्क्षैः शैलैरथ विप्र फलं प्राप्नोत्यनिन्दितम् ॥२३॥
ये वा वै मृत्तिकां तस्मिंस्तीर्थे आहृत्य च मुने। प्रातः प्रातः समुत्थाय वन्दयन्ति नरोत्तमाः।

ते सर्व्वे पापनिर्म्मुक्ता भवन्ति विगतामयाः ॥२४॥

फल पुष्पोपहारेण यो वा तस्मिन् रवीश्वरम्। स्नात्वा संपूजयेद् विप्र स भवेद्विगतामयः ॥२५॥
मन्त्रपूतेन तोयेन कुम्भैः पुष्पफलान्वितैः। सफलैर्विधिना स्नातः सर्व्वकामाँल्लभेत सः ॥२६॥
यदेवं कथितं पुण्यं मया ब्रह्ममुखाच्छ्रुतम्। तत् समग्रं भवेत् तस्य अरण्येषूषरेषु च ॥२७॥

अरण्यानि प्रवक्ष्यामि यथा चैवोषराणि च
सैन्धवं दण्डकारण्यं नैमिषं कुरूजाङ्गलम् ॥२८॥

उपलावृतमारण्यं जम्बूमार्गोऽथ पुष्करम्। हिमवासस्ततोऽरण्ये उत्तमः परिकीर्त्तितः ॥२९॥
नवस्वेतेष्वरण्येषु यस्तु प्राणान् परित्यजेत्। ब्रह्मलोकातिथिर्भूत्वा स याति परमं पदम् ॥३०॥
कर्णिको शिव चाख्येति कालिकागणयो शिवे। कालञ्जरे महाकाले तुल्यञ्चैतेषु यत् फलम् ॥३१॥

इति श्री देवीपुराणे ग्रहणनद्यरण्ययोषर प्रशंसा नाम[1] चतु सप्ततितमोऽध्यायः।

१. अधिग्रहण नदी आरण्योषरप्रशंसा ग।



## पञ्चसप्ततितमोऽध्यायः ।

हिमवद्धेमकूटे च विन्ध्ये महेन्द्र पर्व्वते । वैदिशे उज्जयिन्ये वा महासेनेऽथ भूभृते ॥१॥
गोपगिरौ महापुण्ये चित्रकूटेऽथवा मुने । कालञ्जरेऽथवा काश्यां पुष्पाख्ये वेद पर्व्वते ॥२॥
उज्जयिन्यामयोध्यायां दापयेदथ महेश्वरे । एतेषु पुण्यदेशेषु विषुवायणसङ्क्रमे ॥३॥
पुष्करे नैमिषे वत्स देया पञ्चमुखेऽक्षये । गिरौ धारा प्रदानेन ग्रहपीडा न जायते ॥४॥
बहुवक्रगते[1] देहे वत्सवन्न भयं भवेत् । जन्माधानर्क्षपीडा वा दत्ता धारा व्यपोहते ॥५॥
जम्बूमार्गे सदा पूजा धारापातं विशिष्यते । सर्व्वकामानवाप्नोति नर्म्मदायां महामुने ॥६॥
धारादानेन गङ्गायां कालिन्द्याञ्च महाह्रदे । दत्त्वा विधानविहितां न भयं जायते क्वचित् ॥७॥
शनिसूर्य्यकृतां पीडां गुरुभौमां व्यपोहते । यथा पूजा विधानेन प्रति संवत्सरोत्थिताम् ॥८॥
पीडां निवारयेद्वत्स संवत्सरग्रहोद्भवाम् । मन्त्रजापात् सदा वत्स न भयं विद्यते क्वचित् ॥९॥
एकान्ते दुष्टरहिते पापजन्तु विवर्जिते । धारा होमं प्रकर्त्तव्यं यथोक्तं श्रियमिच्छता ॥१०॥
जिह्वायां पातयेद्धारां न द्रुतां न विलम्बिताम् । सावधानेन मनसा मृत्युञ्जय नियामिताम् ॥११॥
मन्त्रयोगाद्भवेत् सिद्धिर्द्दृष्टादृष्ट प्रसाधिका । ग्रहपूजा हरेत् पीडां त्रिविधामपि उत्थिताम् ॥१२॥
ग्रहाश्च त्रिविधाः प्रोक्ताः तेषां मन्त्रास्त्रिधामताः । अङ्गजा मूलमन्त्राश्च पिण्डाः पदगतास्तथा ॥१३॥
होमकाले प्रयोक्तव्याः पूजाकाले तथैव च । एवं सिद्धिमवाप्नोति इह स्वर्गापवर्गिकीम् ॥१४॥
भावकाले क्रियायोगाद्धारायां लभ्यते मुने ॥१५॥
धारादानं प्रकर्त्तव्यं यन्त्रपात्र घटादिभिः । नैमित्ते नित्यहोमे च पूर्वैश्च कथितो विधिः ॥१६॥

इति श्री देवी पुराणे निमित्तधारापरिच्छेदो नाम पञ्च सप्ततितमोऽध्यायः[2] ।

---

१. वह्नि क ग ।

२. निमित्तधारापरिच्छेदः क ग ।

# षट्सप्ततितमोऽध्यायः।

नारद उवाच।

नर्म्मदायां मया तात श्रुतं स्नानफलोदयम्। तीर्थयात्रा प्रसङ्गेन मार्कण्डेय-तपाश्रमम् ॥१॥

चतुर्म्मुखं महापुण्यं तथा माहेश्वरं वरम्। आमराकं गिरिश्रेष्ठं देवनद्याः फलोदयम् ॥२॥

वारणाख्यं महापुण्यं तथा पश्चिम सागरम्। जटा शैले महादेवं पञ्चमृत्युविनाशनम् ॥३॥

गङ्गाभाग्योदयं नाथ केदारं पर्व्वतोत्तमम्। नन्दादेवी गतन्देवं महादेवी महाफलम् ॥४॥

नैमिषं पुष्करं देवं तथा स्थानेश्वरं वरम्। कुरुक्षेत्रं महापुण्यं सर्व्व पाप प्रणाशनम् ॥५॥

घटेश्वरं महादेवं कौमारं दक्षिणार्णवे। रामेश्वरं शिवं देवं ब्रह्महत्याविनाशनम् ॥६॥

अविमुक्तञ्च काश्याख्यां मायापुर्य्यां सुरेश्वरम्। एवं तीर्थानि देवेश महापुण्यफलानि च।

श्रुतानि अघनाशाय शतशोऽथ सहस्रशः ॥७॥

अभिषेक प्रसङ्गेन कुमारस्य महात्मनः। कीर्त्तितं वैदिशे देशे भृङ्गारं दिवमुत्तमम् ॥८॥

जम्बूद्वीपस्य चैशान्यां तस्य पश्चिम दक्षिणे। वैदिशे चोत्तरे भागे सप्तगव्यूति संस्थितम्।

कुण्डं शैलद्वयास्थं च महापुण्यं महोदयम् ॥९॥

विनायकानां शान्त्यर्थं शक्रस्य च महात्मनः। पुण्याभिषेचनं चक्रे पुष्पदन्तो गणोत्तमः ॥१०॥

नन्दिने मृत्युनाशाय शतसाहस्रमुत्तमम्। लडडुकानां ददौ यत्र तत् तीर्थं कथय प्रभो।

लोकानां हितकामाय कलौ पापप्रणाशनम् ॥११॥

ब्रह्मोवाच।

शृणु वत्स प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि। हिताय सर्व्वलोकानां सर्व्वपापशमाय च ॥१२॥

पुष्पदन्तो गणोपेतस्तपस्तप्येत् सुदारूणम्। पुष्पकान्तं गिरिं वत्स अङ्गारेशस्य जायते ॥१३॥

पुष्पदन्तो गणोपेतस्तपस्तप्येत् सुदारूणम् । पुष्पकान्तं गिरिं वत्स अङ्गारेशस्य जायते ॥१३॥

यत्राण्डजः पुरा मग्नो गतो देवपुरं मुने। तस्य नाम्ना समाख्यातं तीर्थं पापप्रणाशनम् ॥१४॥

तस्मादुद्धृत्य यस्तोयं शिवलिङ्गाभिषेचनम् । करोति स पुमान् वत्स सर्व्वं कामानवाप्नुयात् ॥१५॥

मयापि तत्र देवेशः स्थापितश्चोत्तरेण तु । विष्णुना निर्म्मलेशस्तु पश्चिमे गुरुणा परम् ॥१६॥

दक्षिणेन तथा देवं कुजेन ईशगोचरे । मातृणां मण्डलं यत्र नन्दिना पूजितं पुरा ॥१७॥

अन्येऽपि ये महादेवं चर्च्चिकां वा महोदयाम् ॥१८॥

भानुं नारायणं वत्स मङ्गलान्तेन चाम्भसा । स्नापयन्ति महाभागा न ते प्राकृतमानुषाः ॥१९॥

ये पुनश्चर्च्चिकां कृत्वा प्रस्तरादि समुद्भवान् ।

तथा ये चाभिषिञ्चन्ति ते लभन्ते हितं फलम् ॥२०॥

मङ्गला रूपिणी देवी मातृभिः परिवारिता । ब्राह्माद्या दक्षिणे कार्य्या वैष्णव्याद्यास्तथोत्तरे ॥२१॥

ब्रह्मा विष्णुश्च रुद्रश्च प्रभामण्डल संस्थिताः ।

कुमारं गणनाथञ्च ग्रहान् पीठाधःसंस्थितान् ॥२२॥

एवं कृत्वा मुनिश्रेष्ठ यत्र तत्रेजिता शिवा । प्रयच्छति परं लोकं पुष्पाङ्के उभयात्मकम् ॥२३॥

तत्र भावानुरुपेण मृच्चित्रा धातु वार्क्षजाः । कृत्वा यस्तेन तोयेन स्नापयेत् स्वामात्मनः ॥२४॥

जपहोमरतो ध्यानी भिक्षाशी अथ क्षीरथः । एकान्तरेण भक्तेन उपवास अयाचितैः । ॥२५॥

स लभेत हितान् कामान् यदा गूढव्रतो भवेत्

विद्या जप्तेन तोयेन अयुतं वा प्रयच्छति ॥२६॥

शिवायाः संभवेद् वत्स सर्व्वपापविवर्ज्जितः । देव्याः पुत्रः सदा लोके दर्शनाच्चाघ नाशनम् ॥२७॥

कलशा हेमधातूत्था मृन्मया वा सुलक्षणाः लोक कुम्भ चतुर्थांशाः कर्त्तव्याः स्नापना शिवाः ॥२८॥

गृहे षोडशभागेन जपध्यानरतस्य च । आचार्य्यस्य सदा वत्स होमयुक्तिः प्रकीर्त्तिता ॥२९॥

नारद उवाच ।

विद्याहं श्रोतुमिच्छामि सर्व्वपाप प्रणाशिनीम् । यथा स्नानं प्रकर्त्तव्यं देवी देवस्य वा विभो ॥३०॥

ब्रह्मोवाच ।

कथयामि मुनिश्रेष्ठ न देया अदीक्षिते क्वचित् । विद्या मृत्युन्जया नाम दशावरणसंस्तुता ॥३१॥

ब्राह्मणः षष्ठ वर्णेन विष्णुनाः पचंम तथा । वाज्यनाद विलोमन्तु तेन तत् भेदयेन्मुने ॥३२॥

द्वितीयं भवते वर्णं विष्णु वर्णचतुर्थं तथा । व्रहम पंचमसंयुक्तं तृतीयं परिकीर्तितम ॥३३॥

बायुवर्ण गत वर्ण सविसर्गन्तु पंचमम् । चतुर्थः कीर्तितं वत्स सर्व्वकाम समृद्धये[1] ।।३४।।

वेदाढ्यो मतिमन्त्रस्था विद्या सावाख्यरा मुने । सकृदुच्चरिता वत्स मृत्युहा विधिना भवेत् ॥३५॥

अनया स्नापिता देवी सर्व्वकामान् प्रयच्छति । यागे वा रुद्रके याज्या पद्मे वा ग्रहनाशिनी ।।३६।।

प्रत्यनुगं षट्कंतु[2] द्व्यक्षरं प्रथमं हृदि । होमं समस्तमुच्चार्य कार्यं स्वाहांतिकं सदा ॥३७।।

नारद उवाच ।

कलशानां प्रमाणन्तु जपहोमेन कीर्तितम् । दिनेषु केषु कर्त्तव्यं कथयस्व प्रसादतः ।।३८।

मार्कन्डेय मुनिश्रेष्ठ पुराणे समुदाहृतम् । नर्मदायां सरस्वत्यास्तैर्दानक्षे मुनेऽत्र तु ।।३९।।

चर्तुदश्याममावश्या[ ]मष्टम्यां नवमी तथा । द्वादश्यां पौर्णमास्यान्च संक्रान्तौ ग्रहणादिषु ।।४०।।

व्यतीपाते दिनच्छिद्रे चैत्रादिषु च पर्व्वषु । मासान्ते ऋतूवर्षान्ते गूरुमन्ददिनेषु च ।।४१।।

तेषां सप्तमयोगेषु क्रतुवेदे करोति वा । सप्तम्यां सोपवासेन अष्टम्यां पूजनं महत् ।।४२।।

जपहोमं प्रकर्त्तव्यं पूजयित्वा तु मंगलाम् । क्षीरस्नानन्तु यः कृत्वा कुन्डतोयेन स्नापयेत् ।।४३।।

कूम्कुमागूरुकर्पूरमदेन च विलेपयेत् । सुगन्धधूपनैवेद्य वासांसि स्त्रजदर्पणम् ।।४४।।

दत्ता देव्यास्ततः पूजां सर्व्वकामानवाप्नुयात् । ईहलोके भवेद्धन्यो धनपूत्रायु संयुत ।।४५।।

देहान्ते शिवलोके तु मोदते चोत्तमं सुखम् । एवं च विधिना देवीं मन्त्र पूतेन वारिणा ।।४६।।

स्नात्वा स्नापयते विप्र स भवेदमरवल्लभः । यथा वयं यथा विष्णुर्यथा देवो महेश्वरः ।।४७।।

तथा संपूजनीयस्ते अविचारेण भावितः । तत्रस्ता देवताः सर्वा कुन्डे सन्तर्पिता सुराः ॥४८॥

पितृणां भवते प्रीतिस्तज्ज्वलने अनुत्तमा । यस्तत्र कुरूते श्राद्धं स्नात्वा पात्रविशेषतः ॥४९॥

स कृत्वा दश वर्षाणि तेन सन्तर्पिता पितॄन् । दत्वा दानं तथा कोटि गुणं फलमवाप्नुयात् ॥५०॥

जप होम फलं तत्र अनंतं भवते कृतम्
गव्यूतिमात्रं स्मृतं क्षेत्रं सर्वपाप प्रणाशनम् ॥५१॥
अथोत्तरं विशेषेन मदीय शिव सन्निधौ
यात्राकाले पुरावृत्तमितिहासं निवोधत ॥५२॥

---

१. प्रवृधिने ग ।

२. संज्ञकु क ।

वेत्रवत्यास्तटे रम्ये वटवृक्षो महामुने। तत्र कपोत संघानां राजा आसीन्महान् द्विजः ॥५३॥

वैदिशे ब्रह्महा वत्स सुहृत् स्त्री बालघातकः। महाकर्म विपाकेन दुष्कृतेन च आवृतः ॥५४॥

नानायोनिगतः पापी कथंचित् पापपर्ययात्। मृतो देहं गतं तस्य धात्री भूतं सुपर्णवत ॥५५॥

तेन पक्षी भवेद्राजा स कपोत शतावृता। कालेन स गतः श्रुत्वा पुष्पाख्यं गिरि पर्वतम् ॥५६॥

तत्र कुन्ड गते वृक्षं समारूह्य सखीवृतः। क्रीडमानोऽपतत् तोये पंचत्वमुपगतञ्च सः ॥५७॥

विधूत पापमज्जन्तु संभूतः स शुको मुनिः ॥५८॥

शुकी गर्भे महाबाहो सर्वशास्त्रार्थ पारगः। देवी पूजारतो वत्स देवस्नानरतः सदा ॥५९॥

कर्म यज्ञ समायोगाद्देवलोकं गतश्च सः। शिवं लोकं समासाद्य शिववन्मोदते सुखी ॥६०॥

इति श्री देवीपुराणे कपोतकीर्त्तनं नाम षट्सप्ततितमोऽध्यायः[1]।

---

१. इत्याद्ये कपोत कीर्त्तनं क ग।



# सप्तसप्ततितमोऽध्यायः ।

ब्रह्मोवाच ।

सर्वे शिवाश्रमाः पुण्या सर्व्वपाप प्रणाशनाः । सर्वस्नानोपवासादि फलदा भवते नृणाम् ॥१॥
अनाराध्य नृपं यद्वत् भूतिः पुष्टिर्न[1] लभ्यते । असंपूज्य शिवं विप्र तद्वत् पुण्यं न प्राप्यते ॥२॥
विशेषेण कलौ घोरे कृष्णरूपे तमोवृते । किं द्विजाः शिवपोतन्तु तेन पारं भवार्णवात्[2] ॥३॥
गच्छन्ति स्नापकाः पुण्या लड्डूकादि[3] प्रदानतः । यस्तु लिंगाकृतिं कृत्वा गृहे वा भावनायुतः[4] ॥४॥
लड्डूकादि[5] प्रदानं तु करोति सततं द्विजः । स गच्छति शिवं लोकमनौपम्यं मनोरमम् ॥५॥
सदा विभव संपन्नः सर्वद्वन्द्व विवर्जितः । तत्रस्थः सुखसम्पन्नः क्रीडते विविधैः सुरवैः ॥६॥
देवीरूपो हरो वत्स विष्णुर्देवा[6]वयं तथा । सर्वरूपी महाभागा सूर्यस्य रिपुनाशिनी ॥७॥
नागराजरूपिणी[7] देवी गोरूपा चर्चिकाम्बिका । मातरा भावगा वत्स नारायणी तथा मता ॥८॥
महाश्वेता[8] महादेवी रिपुहा सूर्यसन्निधौ । सर्वगा सर्वदेवानां वरदा सर्वतो जिता ॥९॥
त्रिमूर्त्तिस्त्रिगुणा देवी त्रिवेदा त्रिपदा धृतिः । त्रिकला त्रिशुभा शक्ति त्रिशूला शूलरूपिणी ॥१०॥
व्यक्ताव्यक्ताकृतिं कृत्वा हेमरूप्य मयी शुभाम्[9] । त्रिशूले पूजयेद्वत्स स्नात्वा कापोतवारिणा ॥११॥
चन्दनागुरू गन्धाढ्यां स्रजधूप सुधूपिताम् । सकृद्दृष्ट्वा[10] शुभं हन्यात् सप्त जन्म कृतं मुने ॥१२॥
पूर्वोक्ता ये महातीर्था तेषामेकतमोऽपि वा । माया[11] पुर्यञ्च वा काश्यां जम्बुमार्गेऽथ नैमिषे ॥१३॥
निवसन् पूजयेद्देवीं सर्वकामानवाप्नुयात् । द्विजो मुंडी शिखी वापि यत्र तत्र व्यवस्थितः ॥१४॥

---

१. पुंभिः न प्राप्यते ग । २. पंक्तिरियं क पुस्तके नास्ति । ३. गंडुकादि ग ।
४. भावनारतः ख । ५. गंडुकादि क । ६. देवीभयं क ग ।
७. नाग वा ग । नागर डू ख । ८. माहेश्वरी क ख ।
९. शिवाम् ख । १०. पुष्या क । ११. मया क ।

मंत्र जप्यार्च्चनासक्तो होमात् सर्वमवाप्नुयात्[१] ।

तिलाज्याहुति दानानि देवी कुंडेन भावतः[२] ॥१५॥

हुतं हुतं पयो वत्स सततं लभते फलम् । पोतं न[३]वाप्लवं ख्यातं पापकर्म शुभं मतम् ॥१६॥

तत्र वा आरते[४]लोकान् कपोतन्तु न धावति ॥

ओम् व्योम व्यापिने व्योमरूपाय । ओम् सर्वव्यापिने शिवाय ।

अनन्ताय अनाथाय अनाश्रिताय भवाय च । शाश्वताय योगपीठसंस्थिताय नित्यं योगिने ध्यानाहाराय ॥

ओं नमः शिवाय शर्वाय भवशिवाय नमः । सोममूर्ध्नि तत्पुरूषाय । अघोर हृदयाय नमः ॥

वामदेवगुह्याय सद्यो जातमूर्त्तये । नमो गुह्याति गुह्याय गोप्त्रे निधनाय नमः ॥

सर्वविद्याधिपति ज्योतिरूपाय परमेश्वराय नमः ।

अचेतन अचेतन व्योम व्योम अरूप अरूप प्रमथ प्रमथ तेज तेज[५] । ज्योति ज्योति अनाक्ष अनाक्ष[६]

चेतन चेतन नाना नाना धू धू धू धू । ओं भूर्भुवः स्वः ।

अनिधन निधने भव शिव शर्व[७]परमात्मने । महेश्वर महादेव सत् भावेश्वर महातेजः ।

योगाधिपतये—मुञ्च मुञ्च प्रथम प्रथम भव भव भवोद्भव सर्वभूत सुखप्रद ॥

सर्वसान्निध्य-कर ब्रह्मविष्णु रुद्र पर अर्चित । असंस्तुत । पूर्वस्थित पूर्वस्थित,

नाक्षि नाक्षि, क्षरू क्षरू, । पतंग पतंग, पिंग पिंगा, संग संग, सूक्ष्म सूक्ष्म ।

शिव सर्वाय सर्वपतये नमः । ओं नमः । ओं नमो नमः[८] ॥१७॥

शिवाय ओं नमो नमः । शिव भट्टारक आयाहि शिव सर्वदा अत्र सन्निधिं कुरू । त्विदमं अधिष्ठायाधिष्ठाय शान्तं शान्ततमम् । ओं नमो नम स्वाहा व्योमव्यापी । ईश्वराय मंत्रः ।

---

१. पद्यमिदं ख पुस्तके नास्ति । २. भरतः ग ।

३. योत ना वायु ग । ४. वातारते ग ।

५. प्रथम प्रथम रेज रेज ख ६. अनद्य अनद्य क । अनात्म अनात्म ख ।

७. सर्व्व क ग । ८. शिवाय क ग ।

ततः पंच ब्रह्माणि[1] सर्वात्मा स्वशिवम् । ज्वालिनी[2] पिंगलास्त्रं अघोरास्त्रम् ।
शिवांगानि विद्याधिपति ब्रह्म शिवा रुद्राणी पुरुष्टुतं पाशुपतास्त्रम् ।
योग विद्यांगानि योग विद्यांगानि विभुर्ज्ञानी क्रियाचरी वागेशी ज्वालिनी वामाद्याः शक्तयः ॥१८॥
विघ्नेश्वरा गणेश्वराः लोकपालाः वज्राद्यस्त्राः । अनन्ताद्याः नागाः । सूर्याद्या ग्रहाः ।

जम्भाद्याः बालग्रहाः । देवाद्या देवग्रहाः ।
शिवाद्याश्चित्राद्या विश्वाद्याः शिव उच्चारकपरिवाराः ॥१९॥

ओं नमो हिरण्यवर्णाय हिरण्यरेतसे नमो नमः ।
हिरण्य पतये नमः उमापतये नमः स्वाहा ओम् ॥२०॥

एष मंत्रः ।

दशात्मा व्योम व्यापी ओं आं ईं ऊं व्यां रां लां बां क्षम् । परमदशाद्या[3] विद्यांग शिवांगाश्च परापरविकल्पनाः । मुद्रादर्शनं पूर्व गंधधूप पुष्पनैवेद्यार्घ जप होम विधिः ॥२१॥
मंगला[4] नन्दिनी भद्रा लक्ष्मीः कीर्त्तिर्यशस्विनी । सर्वमंगलाया मंत्रपूजाविधानं लिख्यते ।

पुष्टिर्मेधा शिवा साध्वी यशा शोभा जया धृतिः ॥२२॥

आनन्दा च स्वनन्दा च देव्याः स्वोंऽश कीर्त्तितः ।
एकैकेन तु वर्णेन देव्यो मुद्राश्च दर्शयेत् ॥२३॥

ईशान्यादीनि देयानि स्वायुधानि यथाविधिः ।
योनिमुद्रा लिंगमुद्रा व्यापिनी छत्रं घण्टां मधुम् ॥२४॥

खेटकं च शूलचक्षुं पाशं खड्गं शरं धनुः ।
वीणा पद्म शंखमुद्रास्ता षोडशका भवन्ति ॥२५॥

---

१. अतः परं यद्ब्रह्माणि क ।
२. क ग पुस्तके नास्ति ।
३. दशात्मा ख ।
४. श्लोकोऽयं नास्ति ख पुस्तके ।

**मंत्रपदानि ।**

**ओं कालि कालि वज्रेश्वरि लौह दण्डाद्ये ठं ठं । मूल मंत्रः ॥२६॥**

**ओं कालि कालि ठं ठं हृदयम् । ओं कालि कालि वज्रिणि शिरः । ओं कालीश्वरि शिखा । ओं काली वज्रेश्वरि कवचम् । ओं कालि कालि लौहदण्डायै अस्त्रम् ॥२७॥**

**मूल मंत्रं नेत्रः[3]**

**अनेन न्यास । पंच ब्रह्माणी सर्वमंगलमंगल्येति पश्चात् क्षमापयेत् ॥२८॥**

इति श्री देवीपुराणे देव्यायोगविधानं नाम सप्तसप्ततितमोऽध्यायः[4] ।

---

३. क पुस्तके नास्ति ।

४. त्रैलोक्याभ्युदये देव्या योगविधानम् क ग ।



# अष्टसप्ततितमोऽध्यायः ।

मनुरुवाच ।

अतः परं महापुण्यं सर्व काम प्रसाधकम् । ब्रह्मणा सनकादीनां भक्त्या यत् प्रतिपादितम् ॥१॥
तदहं संप्रवक्ष्यामि व्रतानां प्रवरं व्रतम् । सर्व लोकोपकाराय शृणुध्वावहितो द्विज ॥२॥
उपवासात्परं भैक्ष्यं भैक्ष्यात्परमयाचितम् । अयाचितात्परं नक्तं तस्मान्नक्तेन वर्त्तयेत् ॥३॥
देवैस्तु भुक्तं पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा । अपराह्णे पितृभिर्भुक्तं संध्यायां गुह्यकादिभिः ॥४॥
सर्ववेलामतिक्रम्य नक्ते भुक्तमभोजनम् । वामाचारो महादेवो[1]नक्ते नोर्ध्वरते पुमान् ॥५॥
हविष्यं भोजनं स्नानं सत्यमाहारलाघवम् । अग्निकार्यमधः शय्या नक्तभोजी समाहरेत्[2] ॥६॥
एवं विधिः सदाचारो देवदेवी प्रपूजकः । कृष्णाष्टम्यां प्रयत्नेन कृत्वा नक्तं विधानतः ॥७॥
मासस्य मार्ग शीर्षस्य शंकरं देव[3]मर्चयेत् । पीत्वा शक्त्या[4]च गोमूत्रमनाहारो निशि स्वपेत् ॥८॥
अतिरात्रस्य यज्ञस्य फलमष्टगुणं लभेत् । एवं पौषेऽपि संपूज्य शंभुनामानमीश्वरम् ॥९॥
कृष्णाष्टम्यां घृतं प्राश्य वाजपेयाष्टकं लभेत् । माघे महेश्वरं नाम कृष्णाष्टम्यां प्रपूजयेत् ॥१०॥
निशि[5]पीत्वा तु गोक्षीरं गोमेधाष्टकमाप्नुयात् । फाल्गुने च महादेवं सम्पूज्य प्राशयेत्तिलान् ॥११॥
राजसूयस्य यज्ञस्य फलमष्टगुणं लभेत् । चैत्रे तु स्थाणुनामानं कृष्णाष्टम्यां प्रपूजयेत् ॥१२॥
यवाँश्च भर्जितानद्यात्[6]सोऽश्वमेधफलं लभेत् । वैशाखे शिवनामानमिष्ट्वा रात्रौ कुशोदकम् ॥१३॥
पीत्वा पुरुषमेधस्य फलमष्टगुणं लभेत् । ज्येष्ठे पशुपतिं पूज्य गवां शृंगोदकं पिबेत् ॥१४॥
गवां कोटिप्रदानस्य यत्पुण्यं तदवाप्नुयात् । आषाढे चोग्रनामानं पंचगव्यं तु प्राशयेत् ॥१५॥

---

१. वामचारी महादेवी क ।
२. समाचरेत् क ।
३. ह्यवम् ख ।
४. शांत्वा क ।
५. अति मंत्रस्य यज्ञस्य ख ।
६. यावाश्च भूजितान् क .

सौत्रामणि सहस्रस्य फलमष्टगुणं लभेत् । श्रावणे[1] शर्व नामानमिष्ट्वार्कं निशि भक्षयेत् ॥१६॥
वर्ष कोटिशतं साग्रं रुद्रलोके महीयते । मासे भाद्रपदेऽष्टम्यां त्र्यम्बकं नाम पूजयेत् ॥१७॥
प्राशनम्बिल्वपत्राणां मंत्रदीक्षा[2] फलं लभेत । ईश्वरमाश्वयुजे मासि पूज्यान्ते तन्दुलोदकम् ॥१८॥
पौण्डरीकस्य यज्ञस्य[3] फलमष्टगुणं लभेत् । कार्त्तिके रुद्रनामानं संपूज्य प्राशयेद्दधि ।
अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत ॥१९॥
वर्षान्ते भोजयेद्विप्रान् कन्यका अबलास्तथा । पायसं घृतसंयुक्तं मधुना संपरिप्लुतम् ॥२०॥
शक्त्या हिरण्यवासान्सि भक्त्या तेभ्यो निवेदयेत् ।
निवेदयीत रुद्राय गाञ्च कृष्णां पयस्विनीम् ॥२१॥
वर्षमेकं चरेद्भक्त्या नैरन्तर्येण यो नरः । कृष्णाष्टमी व्रतं भक्त्या तस्य पुण्यफलं शृणु ॥२२॥
सर्वपापविनिर्मुक्तः सर्वैश्वर्य समन्वितः । वसेच्छिवपुरे दिव्यं न चेहायाति कर्हिचित् ॥२३॥
पुण्येष्वेतेषु सर्वेषु विषुवद्ग्रहणादिषु । दानोपवास होमाद्यमक्षयं जायते कृतम् ॥२४॥
इति श्री देवी पुराणे कृष्णाष्टमीव्रतं नामाष्टसप्ततितमोऽध्यायः । [4]

---

१. श्लोक चतुष्टयं नास्ति ख पुस्तके ।
२. मद्व क ।
३. यज्ञस्य प्रोतुमष्टां क ।
४. आद्ये देवीपुराणे कृष्णाष्टमीव्रतम् क ग ।



# एकोनाशीतितमोऽध्यायः ।

गौरी काली उमा भद्रा दुर्गा कान्तिः सरस्वती ।
मंगला वैष्णवी लक्ष्मीः शिवा नारायणी क्रमात् ॥१॥
मार्गतृतीयामारम्य पूर्वोक्तं लभते फलम् । अर्धनारीश्वरं रुद्रमथवा उमाशंकरम् ।
पूजयेद्विधिवन्नारी न वियोगमवाप्नुयात् ॥२॥
अथवा विष्णुरूपेण पूजयेच्चेश्वरं सदा । शंकरं[1] वामभागस्थं सर्व्वकाममवाप्नुयात् ॥३॥॥
मार्गशिरादौ[2] केशव नारायण माधवान् पूजयेत् ।
धूप स्रग्दीपाद्यै रुपोष्य सम्पूज्य दक्षिणाभि र्नामभिः ॥४॥
अश्वमेध नृपसूयवाजपेयमतिरात्र उक्तमथाग्निष्ठोमो गवांमेधः पुरुषमेध सौत्रामणि ।
पञ्चयज्ञा हेमगोलक्षं सर्वे मखा स्थाप्यन्ते नित्यं स्मरणार्च्चनात् नाम द्वादशी ॥५॥

इति श्री देवीपुराणे नामद्वादशी[3] ।

मनुरुवाच ।

यदीच्छति शुभं[4] नारी ईहजन्मे परत्र च । तदा कुर्याद्द्विज श्रेष्ठ विष्णुना कथितं व्रतम् ॥१॥
सर्व्वपापहरं पुण्यं सर्व्वकाम फलप्रदम् । उमामहेश्वरं नाम कर्त्तव्यं विधिना यथा ॥२॥
प्रौष्ठाश्विनेऽथवा माघे भाग्ये मृगेऽथवा[5] मुने । मंत्रे शाक्रेऽथवा[6] कार्यमष्टम्यां वाथ शांकरे ॥३॥
पूर्वेऽहनि सपत्नीकं दाम्पत्यं सुखसंगतम् ।
एकभार्यं नरं वत्स सर्वधर्मव्रतान्वितम् । आमन्त्र्यममरोमेशं प्रातः कार्यमनुग्रहम् ॥४॥
मुदान्वितस्तदा कुर्यात् कलि द्वन्द्व विवर्जितः । मधु चान्नेन भोज्यं तु क्षीरेज्य यवशालिजम् ॥५॥

---

१. शंकरे क ।
२. उमार्ध शिवाधांन् क ग ।
३. इत्याद्येन महादशी क ।
४. शुभान् ग ।
५. मासे मृगे ख ।
६. वक्रे ख ।

सितश्लक्ष्णे[1] तथा रक्ते शुभे कार्ये तु वाससी । न केशे स देशे वत्स देवदेवीप्रसादके ॥६॥
स्नात्वा उमेश्वरं पूज्यं स्थण्डिले प्रतिमासु वा । हुत्वा दिशो बलिं दत्त्वा वितानादथ कारयेत् ॥७॥
चतुरस्त्रं चतुर्द्वारं गोमयेनोपलिप्यते । चतुष्कं शालिगोधूमै वर्णकैरुपशोभ्यते ॥८॥
दीपमालान्वितं कृत्वा दाम्पत्यं भोजयेत् ततः । शंकरोमां सदाध्याय शक्राद्यं शुभचर्चितम्[2] ॥९॥
मृदचन्दन काश्मीर कर्पूरागुरुधूपितम् । जाती पुन्नागमन्दार शतपत्रेक्षुमालितम् ॥१०॥
क्षमाप्य युग्मं संवीतं त्रिधा कृत्वा प्रदक्षिणम् । सुखालापेन सम्पूज्य ध्यायन्ती तमुमेश्वरम् ॥११॥
आचम्यार्ध्यपाद्यं[3] ते ददयात् गंगोदकं[4] तथा । सहिरण्यं सरत्नं च पुनर्दत्त्वा क्षमापयेत् ॥१२॥
प्रीयतां मे उमेशं तु सर्वदेवपतिं पतिम् । अनेन प्राप्नुयान्नारी अवियोगं सुरेश्वर ॥१३॥
सौभाग्यमिहजन्मेऽपि पुत्र[5] राज्यसुखानि च । मृता याति परं स्थानं शंकरोमा अधिष्ठितम् ॥१४॥
तत्र भोगान् महान् भुक्त्वा चेहायाता महाकुले । समृद्धं वृद्धिसम्पन्ने पतिं विन्दति शोभनम् ॥१५॥
लावण्यरुपसम्पन्ना भर्तुः[6] श्रेष्ठा सदा भवेत् । श्लाघनीया समस्तस्य विभवान्तः पुरस्य च ॥१६॥

सुपुत्रा जीववत्सा च आधिव्याधिविर्वज्जिता ।
भुक्त्वा यथेप्सितान् कामान् वृद्धत्वे पतिपूर्विकाम् ॥१७॥
दिवं याति सुरश्रेष्ठ शंकरोमार्च्चिका स्त्रियः ।
नरो वानेन[7] विधिना नारीनां भवते पतिः ॥१८॥

समृद्धः सर्वभूतानां पतित्वमुपगच्छति । शंकरोमाव्रतं शक्र लक्ष्म्या पूर्वमनुष्ठितम् ॥१९॥
रत्या देव्या अरुन्धत्या रोहिण्या सुरसत्तम । कृतमासीत् सुखार्थन्तु ताश्च भुञ्जन्ति तत्फलम् ॥२०॥
उमामन्त्रेण चोमेशं ईशमन्त्रेण शंकरीम् । पूजिता सर्व्वकामानि प्रयच्छत्यविचारणात् ॥२१॥

इति श्री देवीपुराणे उमामहेश्वर व्रतम्[8] ।

---

१. शुभमंगलम् ग । २. सिते शुक्ले ग ।
३. पात्रं ग । ४. गंधोदकम् ग । ५. धन ग ।
६. भाग्य श्रेष्ठा क । ७. नारायणेन क । ८. उमामहेश्वर व्रतम् क ग ।

इन्द्र उवाच ।

कथितं शंकरोमाख्यं व्रतं मे मनतुष्टिदम् । श्रोतुमिच्छाम्यहं तात विष्णु शंकर संज्ञितम् ॥१॥

मनुरुवाच ।

यथा उमेश्वरं तात तथा कार्यमिदं व्रतम् । किन्तु पीतानि वासांसि केशवाय प्रकल्पयेत् ॥२॥

गन्धं पुष्पं तथा धूपं सुगन्धञ्च जनार्दने । कार्यं पूजानुसद्भावं लड्डूका दधिपायसम्[1] ॥३॥

एवं तौ पूजयित्वा तु प्रतिमौ स्थण्डिलेऽपि वा । आहूय ब्राह्मणौ वत्स वेद सिद्धान्तपारगौ ॥४॥

यती वा व्रतसम्पन्नो जटा काषायधारिणौ । पूजयित्वा विधानेन[2] शूलपाणि-जनार्दनौ ॥५॥

क्षमाप्य विधिना वत्स सर्व्वकामप्रसाधकौ । हेमं तु दक्षिणां विष्णो मौक्तिकं शंकराय च ॥६॥

दत्त्वा[3] प्रव्रजतो लोको क्रमाद्देहक्षये व्रजेत् । भुक्त्वा भोगाँस्तथा शक्र इहायातो नृपेश्वरः ।

कुले भवति भूपालः सुखपुत्रायुसंयुतः ॥७॥

पूर्वभावाद् भवेद्भक्तिः शिवविष्णुप्रसाधकी । योगं प्राप्य परं याति यत्तु स्थानमनामयम् ॥८॥

इति श्री देवीपुराणे शंकर नारायणव्रतम्[4] ।

अनेनैव विधिना कार्यं लक्ष्मी नारायणव्रतं[5] । ब्रह्म गायत्र्यजं[6] तात चन्द्ररोहिण्यजं पिवा ।

भाववित्तानु रुपेणसत्त्व[7] मात्रफलं लभेत् ॥१॥

शक्र उवाच ।

सम्मार्जनफलं देव सूचितं न प्रकीर्त्तितम् । तदहं श्रोतुमिच्छामि मानवानां हिताय वै ॥२॥

ईश्वर उवाच ।

वाराहे तु पुरा कल्पे[8] मनो रैवतके तथा ।

तस्मिन्नासीत् महीपाल चन्द्र मित्र[9] नृपोत्तम ॥३॥

पत्नी च कुंकुमा नाम अयुतं त्रय चोत्तमा । लावण्यरुपसम्पन्ना चन्द्रकान्तिसमप्रभा[10] ॥४॥

---

१. शंकरम् ग
२. भोजयेद्विधानेन ग ।
३. दत्त्वाऽनुप्रपतो क ।
४. शंकर नारायण व्रतम् क ग ।
५. लक्ष्मीपर्णी व्तम ख ।
६. सावित्राजं ख ।
७. सत्य क ग ।
८. काले ख ।
९. चन्द्रमिन्द्रे नृपोत्तमे ख ग ।
१०. शतप्रभा ग ।

सानुदिनं सदा भक्त्या देव्याः सम्मार्जने रता । द्वार शोभां पथिशोभां देव्यामुद्दिश्य कारयेत् ॥५॥
सम्प्रपच्छ तद राज्ञीं किमेतद्देवि त्वं सदा ।
सम्मार्ज्जनपरा नित्यमन्यकर्म पराङ्मुखा । एतन्नो ब्रूहि तत्त्वेन राज रुपं पतिप्रिया ॥६॥

कुंकुमोवाच ।

न हि मेऽस्त्यपरा भक्तिर्यथा संमार्ज्जने शृणु । तथाहं कथयिष्यामि पुराकर्म्म कृतं मया ॥७॥
पूर्वंमासं ह्यहं विल्वा पतन्ती वियच्चारिणी । तत्राहं भ्रममाणा तु गता किष्किन्ध्यपर्वतम् ॥८॥
तत्र देवी निराधारा ह्याकाशे तिष्ठते सदा[1] । केनापि पूजने दत्तं भक्तं पात्रं सुपूजितम्[2] ॥९॥
मयापि क्रममादाय[3] गृहीतुमुद्यमः कृतः । क्रमान्नतं गृहीतन्तु पक्षैः पांशु निवारिता ॥१०॥
पूर्णदत्तक्रमान्नेव ग्रहीतुं पांशु मार्ज्जिता । तावत् तस्मिन् समायातः पूजको देवलो द्विजः ॥११॥
वयं नष्टा भयात्[4] कालान्मृता जाता वसोर्गृहे । चन्द्रमित्रस्य तेनैव दत्ताहं प्रथमा वधूः ॥१२॥
राज्ञी त्रिंशत्सहस्रानामभूदहं तत्प्रभावतः । अकामा देवतागारे पक्षपातस्य मार्ज्जनात् ॥१३॥
तेन राज्ञी चेयं याता कामान् सम्मार्ज्जनेन किम् ।
फलं भवति यद्देव्या तन्न वेद्मि यथोच्यताम् ॥१४॥
एवं पूर्व्वं कथेच्छम्भु भार्गवस्य प्रपृच्छतः । ब्रह्मणा देवराजस्य मयापि च तवाखिलम् ॥
कथितं जीर्ण संस्कारे सम्मार्जनफलं नृप ॥१५॥

इति श्री देवीपुराणे सम्मार्ज्जनमाहात्म्यं नाम एकोनाशीतितमोऽध्यायः[5] ।

---

१. महा ग ।
२. सुपूरितम् क गपुस्तकेनास्ति ।
३. भ्रममादाय ग ।
४. वयं वसुमपा कालात् क ।
५. आद्ये सम्मार्जन महात्यम क ग ।

# अशीतितमोऽध्यायः।

विद्येश्वर उवाच[1] ।

कथं देव्याः सदा पूजा तद्भक्तैं गृंहपालकैः । कर्त्तव्या सिद्धिमिच्छद्भिः दृष्टादृष्टफलार्थिभिः ॥१॥

अगस्त्य उवाच ।

साध्विदं यत्त्वया प्रश्नं कृतं वत्सेश्वरप्रियम्[2] । तदहं निखिलं वक्ष्ये तव भक्तस्य विद्यया ॥२॥

देव्या भक्तैः सदा देवी सर्वगा सर्वसंश्रिता[3] । दृष्टव्या नागगुल्मेषु तृणपक्षिसरीसृपे ॥३॥

द्विज-अन्त्यज जातिषु दुःखितेषु सुखेषु च । सूक्ष्मासूक्ष्म विशिष्टेषु सुरभीष्वसुरभीषु च[4] ॥४॥

न क्रुष्टः क्रोधमागच्छेन्न च पूजा सुकृष्यते । तृण हेम विशेषेण न लोभो न च कामिता ॥५॥

परदार परस्वादेर्वाच्या मनकर्मभिः । यस्य नोत्सहते राजन् तस्य देवी न दूरतः ॥६॥

भूषितोऽपि वरं देवं किं वने निवसन् नृपः । सकामेनैव सिद्धिः स्यान्निष्कामस्य गृहं वनम्[5] ॥७॥

यस्तु सर्व्वप्रजापालः सर्ववर्णाश्रमेज्यकः । स्वेन वर्त्मनि[6]वर्त्तेत स दुर्गां शक्यमोजितुम् ॥८॥

राजोवाच ।

यद्येवं वर्णजातीनां देवी सर्वत्र संस्थिता । तदहं श्रोतुमिच्छामि आश्रमाणां च पालनम्[7] ॥९॥

अगस्त्य उवाच ।

पूर्वं देवेन ब्रह्माय शूलिना कथिता किल । श्रुता ते मनुदक्षाद्यै-र्भृगुमित्रोऽथ काश्यपैः ॥१०॥

तथा मयापि तेभ्यश्च यथा प्राप्ता तथा तव । कथयामि महाराज देव्या भक्तिपरो भवान् ॥११॥

यथा आसीत्पुरा राजन् महाकल्पे नराधिपः[8] ।
तथा पालय प्रजाः सर्व्वा स्वे स्वे धर्मे व्यवस्थिता ॥१२॥

---

१. विश्वेश्वर उवाच क ।
२. क पुस्तके नास्ति ।
३. सर्वसंस्तुता ग ।
४. ग पुस्तके नास्ति ।
५. गृहे बलम् ख । तृणं धनम् ग ।
६. धर्मनि ग ।
७. काननम् ख । पेलनम् ग ।
८. सुराड् प्रियः ख सुधाधिपः ग ।

तस्य राजस्य देवेन्द्रः पृच्छते गरुडध्वजम् । रक्षणाय समस्तस्य दिव्यस्य स हिते रतः ॥१३॥

प्रणम्य तं जगन्नाथं विष्णुं कमललोचनम् । प्रपृच्छति समस्तस्य ब्रह्माद्यस्य च कारणम् ॥१४॥

शक्र उवाच ।

जयानन्तु महाबाहो सर्वदेवनमस्कृत । एकमूर्त्तिस्त्रिमूर्त्तिस्तु पीतवासो जगत्प्रियः ॥१५॥

सर्व्वव्यापि महाकाय स्थलभावानुचारकः[1] । परावर परावस्तु कारणात्मन् नमो नमः ॥१६॥

प्रकृतिस्थं च भावेश विकृतिख्ययः प्रभुः । चिन्त्याचिन्त्यप्रमेयश्च कालकालनहेतवः ॥१७॥

धर्माधर्ममहाभाग[2] भावाभावनमो नमः । महदादि गुणावास सर्वगुणविवर्जितः ॥१८॥

श्रूयसे स्तवसे त्वञ्च वेदसे वेदको भवान् । सम्पूज्यसे पूजको नाथ सर्वगः सर्वकृत्तिभूः[3] ॥१९॥

अविनाश विनाशित्वे पार्थिवादिप्रयोजने । त्वं भवान् कारणाभाव परापर नमोस्तु ते ॥२०॥

हृषीकेश गदाधारिन् महादनुकुलान्तक । महागदासिधाराय पृच्छामि जगद्धेतवे[4] ॥२१॥

एवं स्तुतस्तदा राजन् विष्णुः प्रोवाच याच्यताम् ।
यत् ते मनसि वर्त्तेत ददामि ब्रूहि वासव ॥२२॥

शक्र उवाच ।

भगवन् किं परा भक्तिः कस्य वा क्रियते सदा ।
कस्मिन् द्वीपे स्थितौ पुंभिर्यष्टव्या सा परापरा ॥२३॥

श्री भगवानुवाच ।

एकस्मिन् मे दिने शक्र ब्रह्मा यान्ति चतुर्दश । तिसृणां त्वं च तत्संख्या ब्रह्माहेन पुरन्दर ॥२४॥

एवं वर्ष शते पूर्णे योगनिद्रा परापरा । तस्मिन लीलयाम्यहं शक्र पुनरेतत् सृजामि च ॥२५॥

एवं ते च दिनाः पक्षाः मासार्त्तव तथायने । स ते कालं च कल्पं च महाकल्पं तथैव च ॥२६॥

---

१. आमुभव ग । २. महामाप ग ।
४. ग जद्धे तवे ग । ३. सर्वक्षत्प्रभु ग सर्वकृत्प्रभुः क ।

भवते सृजते शक्र या सा परमकारिणी[1]। योगनिद्रा महामाया सर्वाद्या न व्यवस्थिता ॥२७॥
स्थापिता परमेशेन यस्मिन् काले तदुच्यताम्। लब्धं त्रिंशत् सहस्राणां शतानि नव एव च॥
तस्य मां भूतभूतस्य कालस्य सुरसत्तम ॥२८॥
तस्मिन् सा पूजिता देवी ब्रह्मणा मनुरूपिणा। स्वायंभुवतनुर्भूत्वा जगतः स्थितिकारणे ॥२९॥
तेन ज्ञातानि नामानि ते च द्वीपा सरिद्वरा। पातालस्थितयः शक्र भवन्ति च व्रजन्ति च ॥३०॥
तथापि मां कृता माया मोहनी सुरजन्तुषु। अनेककालभूतं यदद्यैव प्रतिभाषते ॥३१॥

इति श्री देवीपुराणे देव्यवतारे कालभावव्यवस्था नामाशीतितमोऽध्यायः[2]।

१. परमकारण क। २. आद्ये देव्यवतारे कालभाव व्यवस्था क ग।



# एकाशीतितमोऽध्यायः ।

शक्र उवाच ।

भगवंस्तव वाक्यानां न तृप्तिर्भवते मम । कालाग्निपार्थिवं मानं श्रोतुमिच्छामि तत्त्वतः ॥१॥

भगवानुवाच ।

नहि पार्थिवद्वीपेषु मेरुपृष्ठेऽपि वासव । भोगाह्लादकता नृणां यथा पातालवासिषु ॥२॥

येषु न कालरुद्रस्य नानास्त्रीशतसंकुलाः । विचित्रहर्म्यविन्यासाः कूटस्य मेरुपृष्ठतः ॥३॥

सा एवं कालरुद्रस्य तनुरुपेण[1] संस्थिता । सा परा शिवभावेन परमपददायिका ॥४॥

तस्य युगसहस्त्रान्ते[2] ब्रह्माद्यानां भयंकरम् । तं विद्धि कालरुद्रेति सौम्यरूपं सदा शिवम् ॥५॥

कालाग्नि धामनं लक्षं योजनानां प्रमाणतः । अर्धेन उच्छ्रयस्तस्य पादाः पादेन वासव ॥६॥

सिंहरूपा महाघोरा महानक्रा महाबला । कालाग्निरुद्ररूपो यो बहुरुद्र समावृतः ॥७॥

अनन्त पद्मरुद्रश्च धातारः कारणीश्वरः ॥८॥

दारुणोऽग्निरुद्रश्च च यमहन्ता भयान्तकः । लोहितः क्रूरतेजात्मा घनो वृष्टिबलाहकः ॥९॥

विद्युतश्च न शीघ्रश्च प्रसन्नः शान्तिसौम्यदृक् ।

सर्वज्ञो विविधो बुद्ध्या द्युतिमान् दीप्तिसुप्रभः ॥१०॥

एते रुद्रा महात्मानः कालिकाशक्तिबृंहिता । संहरन्ति समस्तेदं ब्रह्माद्यं सचराचरम् ॥११॥

कालग्निभुवनीशोऽयं शतकोटिभिरावृतम्[3] । तस्या पुरस्य विस्तारः शतकोटिसुवर्तनम्[4] ॥१२॥

देवगन्धर्वसिद्धानां तत्र भोगाः सुदुर्लभाः । पूर्वोत्तरपरा भक्तिर्याम्यान्तरस्थिता परा ॥१३॥

अनलानिल वाच्या च निर्ऋताशा न चापरा । एतेषां मध्यतो राजन् कालरुद्रस्तु शोभते ॥१४॥

पंक्त्याकारैः पुरैः सर्वं कटकं तस्य संस्थितम् । समन्तादिष्टिधवलं[5] प्राकारात्तोलगोपुरैः ॥१५॥

---

१. तत्त्वरूपेण क । २. तस्य यद्धसहं तेजो ब्रह्माद्यानां क्षय कारणम् क ग ।
३. बहुकोटिभिरावृतं क ग । ४. सुवर्धनम् क ग । ५. तं भुवनं क ग ।

वज्रेन्द्रनील वैडूर्य-प्राकारैः सर्वतोऽन्वितम् । कालाग्निनरकान्ते तु पुरं कालस्य संस्थितम् ॥१६॥

पंचाशल्लक्ष विस्तारं समन्तात् परिवर्तुलम् । जाम्बुनदमयैर्हर्म्यैः खचितं रत्नधातुभि ॥१७॥

प्रमदा जन संहृष्टं नानावर्णसमावृतम्[1] । कामोन्मत्त प्रमत्तैश्च तज्जातीजनसंकुलम् ।

कालस्य भुवनं दिव्यं वृत्ताकारं मनोहरम् ॥१८॥

वेष्टितं हेमप्राकारै-र्योजनायुतमुच्छ्रितम् । प्राकारा बहिर्दण्डान्ते अक्षयं[2] योजनायतम् ॥१९॥

अग्निजालैश्च निविडैर्भयदैः किंशुकप्रभैः । हरितालनिभा ज्वालाः सिन्दुरा गैरिकप्रभाः ॥२०॥

अत ऊर्ध्वं प्रजज्वालाः सुवातोद्धूत[3] भास्वराः । वीचितरन्ग कल्लोल ज्वालामालाकुलान्वरम् ॥२१॥

प्रविस्तार[4] प्रमाणेन योजनद्वयकोटयः । अष्टानवतिलक्षानि ज्वाला ऊर्ध्वं ततः शिलाः ॥२२॥

वज्रभूता महातप्ता तस्य तेजोनियामिका । चत्वारि कोटिमानेन कारणेन तु स्थापिता ॥२३॥

तस्योर्ध्वेन भवेत् किंस्वित् कोटयश्चत्वारि वासव ॥२४॥

एवं कामाग्निरुद्रस्य माहात्म्यं कीर्त्तितं मया । श्रवणात् सर्वपापानि शमन्ते कालजान्यापि ॥२५॥

इति श्री देवीपुराणे कालाग्निरुद्रमाहात्म्यं नामैकाशीतितमोऽध्यायः[5] ।

---

१. ख पुस्तके नास्ति । २. अन्तरं ग । ३. सुवा चोद्धूत ग ।
४. प्रवृत्तास्ता ग । ५. आद्ये देव्यवतारे कालाग्नि रुद्रपुर कथनम् क ग



# द्वाशीतितमोऽध्यायः ।

शक्र उवाच ।

कालाग्निभवनस्यार्धे वज्रपाषाणमूर्धनि । ये स्थितास्तत्र देवेश तान् कथयस्व प्रसादतः ॥१॥

श्रीभगवानुवाच ।

यथा पृच्छति मां शक्र ऊर्ध्वं कालपुरस्य तु । तथा ते कथयिष्यामि शृणुष्व वदतो मम ॥२॥
ऊष्मोदके नरकाः शक्र कोट्यः पंचाशन्मानतः । चत्वारिंशच्छतं तेषां प्रधानं तन्निबोधत ॥३॥
अवीचिः कृमिभक्ष्यश्च तथा वैतरणी महान् । कूटं शाल्मलिगुच्छासं युग पर्व्वतरौरवम् ॥४॥
निरुच्छ्वासः पूतिमांसं तप्तलाक्षास्थितञ्जनः । क्रकचच्छेदस्तथा पंकः कण्टायससुतापितम् ॥५॥
पूतिपूर्णस्तथा भेदः स्तम्भं च रुधिरं वसा । तामिस्त्रमपतुण्डश्च तीक्ष्णासिश्च नपुंसकः ॥६॥
लोहितन्तु स्त्रिया भीमा अंगारराशिरिवोपरि । कुम्भीपाकः क्षुरमध्यः सञ्जीवनसुतापकम् ॥७॥
कालसूत्रं महापद्मं शीतोष्णं क्षतुरमेव च । अम्बरीषं तथा घोरं महारौरव सम्पुरम्[1] ॥८॥
सूचीमुखेषु यन्त्रश्च तैलतप्तत्रपुस्तथा । असिपत्रं तथा पीनं करपत्रं च वासव ॥९॥

चत्वारिंशत् शतं घोरं तेषां त्रीणि परान् शृणु ।
अवीचीरौरव कुम्भीपाकाः पच्यन्ति पापकान् ॥१०॥

देवद्विजगुरुद्रोहा बालस्त्रीवधवञ्चकाः । सद्वृत्तमाचरन् शक्र विघ्नकाः पाचयन्ति ते ॥११॥
देव्या दिवं तथा वस्त्र-भूमी-राज्यापहारकाः । पाचयन्ते नरकै ह्येतै वंणाश्रमविघातकाः ॥१२॥
कूष्माण्डी सर्वमेतेषां रक्षकः सन्नियोजितः । पादेन कालरुद्रस्य तस्याश्रमस्य संस्थिते[3] ॥१३॥
अनन्तरूपशोभाढ्या वयं मूर्ध्नि व्यवस्थिताः । पाताला पृथिवी शक्र मम मालेव मस्तगाः ॥१४॥

---

१. सम्पुतम् क ग ।  २. वाद्यापहा क ग ।  ३. तस्य वा सख्यसे स्थितिः ग ।

वयं कालग्निरुद्रस्य शतांशेन प्रमाणतः । ममोपरि स्थिताः सप्त पाताला मनकामदाः[1] ।
यत्र नागाः शूराः रक्षाः तिष्ठन्ति मम पूजकाः ॥१५॥
रुद्रभक्तास्तथा चान्ये ब्रह्मदेवीज्यकाः परे । परं तत्त्वमजानन्तः पृथग्भावेन भाविताः ॥१६॥
अन्ये सर्वगतान् सर्वान् देव्याः शक्त्यावलोकिताः । पश्यन्ते मम सद्भावा मुमुक्षुः परगामिनः ॥१७॥
यस्मिन् ये संस्थिताः शक्र तान्निबोध समासतः । आभासं करतालं च शर्करं च गभस्तिमम् ॥१८॥
महातालं सुतालं च सप्तमं च रसातलम् । सौवर्णमष्टकं शक्र न प्रसीध्यन्ति चागमैः ॥१९॥
देव्या रुद्रपरा लोका मन्त्रतन्त्रविशारदाः । स्वदेहान्ते प्रविशन्ति नागकन्याः रमन्ति च ॥२०॥
अष्टमं तद्विजानीयाद् वसुरत्नोपशोभितम् । विभूति क्रीडं संक्षेपात् कथयामि सुराधिप[2] ॥२१॥
प्रथमं भासमानन्तु तत्र हेममयी मही । नानारत्नसमाकीर्णं प्रासादं स्फटिकोज्ज्वलम् ॥२२॥
रत्नैश्च खचिताः स्तम्भा द्वारबन्धाश्च वासव । स्त्रीसहस्रसमाकीर्णं लक्षकोटिभिरेकधा ॥२३॥
आवृतं कोटिकोटीनां प्राधान्यात् कथयामि ते । नमूचिः शंकुकर्णश्च महानादस्तृतीयकः ॥२४॥
अनन्तः कूलिको नाग एलापत्रश्च नागकाः । राक्षसाः शूलदन्तश्च रक्ताढ्यो विकटस्तथा ॥२५॥
सुखभाग् दुःखसन्तप्ता देव्या भक्तिसमन्विताः । स्त्रीसहस्रमदंष्ट्रा आभासेषु कृताः जनाः ॥२६॥
शतकोटिप्रविस्तारं वरताले निबोधत । पद्मरागमयी भूमि रत्नैः खचितमन्दिराः ॥२७॥
तत्र[3] हर्म्योच्छ्रिता तुंगा इन्द्रनीलैर्विभूषिताः । द्वारे[4] बन्धाश्च प्रवला मुक्ता रुक्माश्च तोरणाः ॥
अनेककोटयो यत्र राक्षसासुरपन्नगाः ॥२८॥
प्रह्लादो अग्निजिह्वश्च अनुह्लादोऽसुरास्त्रयः । वासुकिः शंखपालश्च धृतराष्ट्रस्त्रयोरगा ॥२९॥
विद्युन्माली हिरण्याक्षो विद्युज्जिह्वश्च राक्षसाः । चलचकितवितस्तै र्धूपयक्षसु चायतैः ॥३०॥
तासां दृष्टिनिपातेन सविकारामलेन च । विस्रम्भाला[5] पभावेनविभासोत्फुल्लितेन च ॥
स्मरोऽपि स्मरगाच्चैता गतासूरिव लक्ष्यते ॥३१॥

---

१. मलकामोदाः ख ।
२. सुरेश्वरम् क ग ।
३. तात क ।
४. द्वारबन्धास्तु प्रावाराः क ग ।
५. चित्र मालापभातेन ग ।

शिखिझंकारशब्देन स्तोककैर्णादितेन च । अलिभिर्गीतशब्देन कोकिला कूजितेन च ॥
उद्दीपयति चानंगं विखिन्न मनचेतसाम् ॥३२॥

नानामद्यविशेषाणि पिबन् पानानि वासव । असुरानेन भावेन देवीं पूजयते सदा ॥३३॥

करताले स्थिता ह्येवं श्रीताले च निबोधत । ताराख्य शिशुपालश्च अमयश्चासुरास्त्रयः ॥३४॥

कम्बलस्तक्षकः पद्मो नागराख्यस्त्रयस्तथा । यमदन्तोग्रदन्तश्च[1] विशालाख्यश्च राक्षसाः ॥३५॥

चतुर्थं सम्प्रवक्ष्यामि दैत्याश्च महिषोपमाः । तृतीयः कालपृष्टश्च नागाः कर्कोट पंकजाः ॥३६॥

शंकुकर्णस्तृतीयश्च राक्षसाश्च निबोधत । महादेवं[2] महाकायं तृतीयन्तु महाभुजम् ॥३७॥

शर्करे ते विजानीयाः पंचमन्तु निबोधत । अमरः शंभुस्तापाख्यो असुरास्ते त्रयः स्मृताः ॥३८॥

सुपर्णः कूलिको नागस्तृतीयश्च धनंजयः । अस्थिभद्रो विरुपाख्यो उग्ररूपाश्च राक्षसाः ॥३९॥

गतस्ते ते समाख्याता पृष्ठे वैरोचने शृणु । कालनेमि हिरण्याख्यो निशुम्भश्च त्रयोऽसुराः ॥४०॥

अत्रैव यत् पुरावृत्तं कथयामि सुरोत्तम । दाक्षिणात्ये महाराष्ट्रे कुलदेवस्तु ब्राह्मणः ॥४१॥

तस्य पुत्रः समुत्पन्नो नाम्ना तस्करवल्लभः । स च कालेन महता नामरूपं प्रवर्त्तितः ॥४२॥

मित्र देवद्विजातीनां महद्द्रव्यापहारकः । कदाचित् कालपर्यन्ते मलये पर्व्वते गतः ॥४३॥

तत्र कन्याभिधाना तु भवति जलसम्वृता[3] ॥४४॥

बहुद्रव्य सुसम्पूर्णा नगरद्वारसंस्थिता । स च द्यूतं रमित्वा तु नाम्ना तस्करवल्लभः ॥४५॥

रात्रौ प्रविष्ट्वांस्तस्मिन् उत्सृष्टो द्रव्य हारकः ।
यावद्दीपः समप्राप्तस्तैलस्तेनाभवत्[4] किल ॥४६॥

तावत् तेन तथा तैले द्रव्यान्वेषणकारिणे । दत्ते प्रबुध्यवाँस्तत्र देवलो देविपूजकः ॥४७॥

स च प्राणभयान्नष्टः कालान्मृत्युरभूत् पुनः ।
काञ्चीराजाधिपः शक्र नाम्ना खड्गकरोद्यतः ॥४८॥

देवी भक्तवरो नित्यं मद्यमांस—वसाप्रियः । देवब्राह्मणद्रोही च देवभू-ग्रामहारकः ॥४९॥

---

१. दण्डोग्रदण्डश्च ग ।
२. महादेवं ख ।
३. तत्र कक्षाभिधाना तु भवती जनसंस्कृता ग ।
४. तैलछेदात् ग ।

कालेन मृत्युमापन्नो रोचनो राक्षसाधिपः। पिंगाख्यो दशकोटीनां महाबलपराक्रमः ॥५०॥
अजरो अमरः शक्र ब्रह्मकल्पायुजीवितः। तेन दीपप्रभावेन शर्कराधिपतिर्महान् ॥५१॥
दुष्टभावोऽपि सञ्जातः किं पुनस्तत्समाश्रिताः। भवन्ति तत्र राजेन्द्र ब्रह्म लोक निवासिनः ॥५२॥
एतत्ते सर्व्वमाख्यातं प्रसंगेन सुराधिप। शेषान् नागाँश्च वक्ष्यामि पाताले ये तु कीर्त्तिताः ॥५३॥
पौण्डरीकञ्च दुष्प्रेक्ष्यं श्वेतभद्रं वयोरगाः। पिंगाख्यो मेघनादश्च तथा घोरश्च राक्षसाः ॥५४॥
रसातले जरासन्धो वैरोचनो वलिस्तथा। कोटिधा यो मया बद्धस्तव कार्येषु सत्वरी[2] ॥५५॥
पुनः स्वर्गं गमिष्यामि पुनस्त्वं शंसिता प्रभुः। ऐरावतो महानागः पिंगमश्वतरं तथा ॥५६॥

मारीचः कुम्भकर्णश्च माल्यवाँस्त्रय राक्षसाः।
पातालाः सप्त विख्यातास्त्रिषष्टिभुवनेश्वराः ॥५७॥

वृत्ताकारानि पातालाः शत कोटिप्रविस्तराः। वृत्त त्रयविभक्तास्ते दैत्य पन्नग राक्षसाः ॥५८॥

कल्पे कल्पे विनश्यन्ति तन्नामानो भवन्ति च।
न हि संख्या भवेच्छक्र मृता जाता पुनः पुनः ॥५९॥

उपपातालमष्टन्तु सौवर्णं तु निबोधत। यत्रासौ भगवान् देवो अर्धनारीश्वरः प्रभुः ॥६०॥
वयं च तत्र क्रीडामो ब्रह्मा वेदविदांवरः। द्वितीय इव कैलाशे यत्र भोगा मनोरमाः ॥६१॥
यत्रासौ भगवान् देवो वरदो हाटकेश्वरः। तत्र हेममयी भूमि र्वज्रवैदूर्य चित्रिता ॥६२॥
विचित्रा धातुभिर्भाति देवासुरमनोहरा। सर्व्व-वृक्षसमाकीर्णा सदार्त्तववनस्पतिः[3] ॥६३॥
सुगन्धफलपुष्पाणां गन्धद्रव्यसमन्विता[4]। सुगन्धिः शीतलो वार्युविहरेन्मनतुष्टिदः ॥६४॥
हेम प्रासाद प्राकारास्तरवोद्यानकाननाः। सरित्सर्व्वतडागैश्च दीर्घीकैरुपशोभितम् ॥६५॥
स्फटिकैः शैलसोपानै र्मुक्ताफलसमन्वितम्। भान्ति अंभांसि तान्द्रै स्तु नीलरक्ताम्बुजैः सितैः ॥६६॥
कुसुमोत्पलसंच्छन्नं ते च कार्त्तस्वराम्बुजा। तटे वृक्ष लतागुल्म कोषोत्पलपक्षिणः ॥६७॥

---

१. शंकराधिपति ख।
२. सत्त्वधी ग।
३. मकार्त्तत्रवनस्पति ग।
४. सर्वद्रव्य समन्विता क ग।

सर्व्वे कार्त्तस्वराः शक्र पातालं तेन शोभितम् । तत्रांगना मदोन्मत्ताः क्रीडन्त्युद्यान कन्दरैः ॥६८॥
वनोपवनउद्यानै दीर्घिकासरमध्यगाः । क्रीडन्ति जल क्रीडाभिर्दोलान्दोलनतत्पराः ॥६९॥
रति[१]प्रमत्ता निश्चेष्टा सर्वदुःखविवर्जिताः । अशेष सुखतृप्तासु दुःखैक स्मरक्रीडनम् ॥७०॥
विचरन्ति महाभागै सर्वाभरणभूषिताः । विन्यस्तकेश भारास्ताः कवरीधम्मिल्लमुक्तकैः ॥७१॥

अलंकारालयस्तासां पृष्ठगाः कुसुमन्त्रिताः ।
मूर्ध्णि च स्त्रज्गता भान्ति संशिताग्रैः प्रलम्बिताः ॥७२॥

शाखापत्रविशेषेण[२] ललाटतिलकेन च । यत्रापरविशेषेण इन्द्वर्केण विराजते ॥७३॥
कर्णौ विन्यस्तपत्रेण कुण्डलैर्भाति चापरा । सितासितारूपै दीर्घैस्त्रस्त बालमृगा इव ॥७४॥
यासां नेत्रा विराजन्ते[३]पुरे श्रीहाटकेश्वरे । एवंविधैः सदास्त्रीभिर्नित्यः स्मर निपीडिभिः ॥७५॥

रमन्ति सुरता भोगाः सुतृप्ताः शिवभाविताः ॥७६॥

इति श्री देवीपुराणे हाटकेश्वरपुरवर्णनं नाम द्वाशीतितमोऽध्यायः[४] ।

---

१. बहुप्रमत्त क ग ।   २. शिखि क ग ।   ३. विभाव्यन्ते ग ।
४. आद्ये हाटकेश्वरपुर वर्णनम् क ग ।



# त्र्यशीतितमोऽध्यायः ।

शक्र उवाच ।

सर्वत्र च श्रुता देव वेदवेदार्थ पारगैः । पुराणमितिहासं च सप्त एव न चाष्टमम्[1] ॥१॥

त्वं पुनः कथ्यसे चाष्ट उत्तमं तच्च सर्वसु । कथं तत् केन वा सृष्टमेतदिच्छामि वेदितुम् ॥२॥

श्रीभगवानुवाच[2] ।

कैलासशिखरासीनं देवदेवं त्रिलोचनम् । तिष्ठन्तमुमया सार्धं ऋषिदेव नमस्कृतम् ॥३॥

तं द्रष्टुं भगवान् ब्रह्मा वयं शक्रबृहस्पती । तथा च क्रीडते स्कन्दो बर्हिणारुण नित्यशः ॥४॥

ब्रह्मस्य ह्यासनं हंस शिखिना चञ्चुना हतः । रुराव करुणं शब्दं देव्या तं च निशम्य च ॥५॥

विहस्य ब्रह्मामालोक्य ब्रह्मा तञ्च तथा शिखीम्[3] ।

दण्डेनाताडयत् किञ्चित् शिखिना सह वारितम् ॥६॥

तञ्च श्रुत्वा तथा देव्या दुःखायमनुचिन्तयत्[4] । तथा मेघसमाकारं घोरं घोर पराक्रमम् ॥७॥

निष्क्रान्तं शिखिरावस्य ब्रह्मयानस्य वारकम् । तं दृष्ट्वा सहसा देवी शंकिता ब्रह्मव्रीडया ॥८॥

शंकरेणापि सम्प्रोक्तो ब्रह्मणोऽस्य स्तवं कुरु ॥९॥

करोति शम्भुना उक्तः स्तवेदं कमलोद्भवम् ।

देवानां परमं देवमुत्पत्ति-स्थिति कारकम् ॥१०॥

तथा देशं समास्थाय देवदेवस्य शूलिनः । स्तवेन स्तवते रुरुर्ब्रह्माणं परमेष्ठिनम् ॥११॥

रुरुरुवाच ।

जय देवातिदेवाय त्रिगुणाय सुमेधसे । अव्यक्तजन्मरुपाय कारणाय महात्मने ॥१२॥

---

१. चाषर ग ।

२. श्री क ग पुस्तके नास्ति ।

३. विहाय ब्रह्मलोकस्य ब्रह्मादंडेणाताडयत् क ।

४. सरवायम् क ग ।

एततृत्रिभावभावाय[1] उत्पत्तिस्थितिकारक । रजोरूपगुणाविष्ट सृजसीदं चराचरम् ॥१३॥
सत्रपाल[2] महाभाग तमः संहरसेऽखिलम् । गुणसंतानमूर्तिस्त्वं ददसे परमेश्वर ॥१४॥
वेद वेदान्तगर्भाय नमामि च त्वां ब्रह्मणः । यस्य नित्यं श्रुति शब्दं चत्वारो वरमाननात्[3] ॥१५॥
ऋज्यजुसामाथर्वाणो वा निष्क्रमन्ति पदक्रमाः ।
शिक्षाकल्पानिरुक्तानिच्छन्दो ज्योतिषि चागमाः ॥१६॥
चक्षुभूता अशेषस्य जगतोऽस्य सुखप्रदाः[4] ।
त्रयः कालास्त्रयोदेवास्त्रयो विष्णू[5]स्त्रयः क्रियाः ॥१७॥
यस्य सम्भवनामस्य तं नमामि पितामहम् । इन्द्र चन्द्रहरि यक्ष रक्ष हुतवहस्तुतम् ॥१८॥
तं नमामि सदा देवमव्यक्तं व्यक्तकारणम्[6] । एवं स्तुताः रुरोः पूर्व्वं ब्रह्मा वरप्रदोऽभवत् ॥१९॥
ब्रह्मोवाच ।
याच वत्स वरं मह्यमसुराधिपते शुभम् । ददामि सप्तलोकानां त्वं प्रभुरजरोऽक्षयः[7] ॥२०॥
एवं तु भगवाँस्तेन कस्मिंस्तिष्ठामि सत्तम । मयान्तर पाताले तु भक्षणाद् विनिवेशितः ॥२१॥
स च देव्या मुखालोक हृष्टः किंचिन्निरीक्षते । शम्भुना च तथा उक्त इयमेनं वधिष्यति ॥२२॥
तथा चोक्ते पुनः शंका उज्झिता सुरसत्तम । सच अवान्तरं गत्वा पातालं चक्रे हृदा नवः[8] ॥२३॥
सर्वलक्षणसम्पन्नं सर्वकामफलप्रदम् । सर्वर्त्तुकगुणोपेतं सर्वरत्नविभूषितम् ॥२४॥
तत्रस्थस्य ततस्तस्य कालनेमिसुतादयः । आगत्य प्रीतिभावन्तु भुवनमिष्टदर्शनम्[9] ॥२५॥
हाटकेश्वरदेवस्य यदा पूजा निर्वत्तिता । तदा तेन प्रतिज्ञातं मम साहाय्यतां भवान् ॥२६॥
तथा कालेन महता प्रीत्या दैत्या वशं गताः । ते सर्वे कन्यका दध्यूः कुलजोऽयं महाबलः ॥२७॥
तथा सबल सम्पन्नो जित्वा पृथ्वीं सकाननाम् । सद्वीपां सबलोपेतां सर्वशैलसरोपगाम् ॥२८॥
देवानां विग्रहं चक्रुस्तेन ते विजिताभवन् । ब्रह्मणो वरदानेन[10] देव्याभाव समुद्भवः ॥२९॥

---

१. त्रिभागभावाय क ग । २. सत्त्वपात ग सत्वतान् क । ३. चरगाननात् ख ।
४. शुभप्रदा क ग ।
५. त्रयो वह्निः क ग । ६. क ग पुस्तके नास्ति । ७. अजयो क ग ।
८. च हृदा नरः ख ।
९. इद्र दर्शनम् ग । हृट्ट दर्शनम् क । १०. दीनेन ग ।

न जेतुं शक्यते देवैर्ब्रह्माद्यैस्तु पुरन्दरः । तथा स बलवान् मत्त शक्र देवाँस्तु मामपि ॥३०॥
प्रजानां वासवो ब्रह्मा यत्राहं सुरसत्तम । त्रिकूटे शैलराजेन्द्रे वयं सत्त्वसमाधिगाः[1] ॥
तिष्ठामः स्तूयते ब्रह्मा शक्रचन्द्रादिभिस्तथा ॥३१॥

देवा ऊचुः ।

नमः पंकजनेत्राय विष्णवे जिष्णवे नमः । नमो देवातिदेवाय देवतारिहने नमः ॥३२॥
नमस्त्वाश्रम धर्माय विघ्नहन्ताय वै नमः । नमः सर्व्वसमर्थाय सर्व्वधर्मरताय च ॥३३॥
देव दानवयक्षाणां त्वं रक्षापालकः प्रभो । अस्माकं त्वं गतिर्देव रुरुणा त्रासिता वयम् ॥३४॥
त्राता नस्त्वं भवान् एको मज्जमानान् महोदधौ । रुरुसागर घोरेऽस्मिन् दैत्यग्राहे महाजले ॥३५॥
इषु चक्रासिमकरे त्वं पोतो भव अच्युत । एवं यावत्समस्तानामभयेदं समुद्यतः ॥
तावत् स दनुराजेन्द्रस्तत्रैव सहसागतः ॥३६॥
तथा स युध्यमानस्तु मया च सह वासव । सर्व्वदेवैः समारब्धो योधितुं दनुपुंगवः ॥३७॥
तथा ते बलसम्पन्ना असुरा बलदर्पिताः । हताश्चक्रासिशारङ्गैः निपतन्ति महोदधौ ॥३८॥
तथाऽन्ये भिद्यमानास्तु गता पारं तथा परे । प्रविष्टाश्चैव पातालं केचिन्नष्टा रसातलम् ॥३९॥
एवं तं दानवं सैन्यं मम चक्राहतं महत् । दृष्ट्वा दैत्यपतिः शक्र महामायां प्रवर्त्तितः ॥४०॥
तेन ते दैत्यमरुता वसु वासव चन्द्रमाः । यम नैर्ऋतिधर्म्माद्याः क्षणमात्रेण निर्ज्जिताः ॥४१॥
तथा ब्रह्मा सशक्रश्च वृहस्पतिर्महामतिः । वयं च सहसा याता यत्र देवस्त्रिलोचनः ॥४२॥
स च देव्या सह शक्र एकोऽनेकाऽभवन्मुदा । चित्तं न लक्ष्यते तस्य न च भावो न कारणम् ॥४३॥
स च मां शक्र भावेन कारणेव व्यवस्थितः ॥४४॥
स एव शक्तिरुपत्वात् स च ब्रह्मस्वरूपिणः । मया च सह ब्रह्मेण स्तोतुमारब्ध तद्विधम् ॥४५॥
एवं विधं तदा ज्ञात्वा शिवशक्तिमयं जगत् । मया च सह ब्रह्मेण स्तोतुमारब्ध तद्विधम् ॥४५॥

ब्रह्माकेशवावूचतुः ।

नमस्ते भगवन् देव दिग्वासाः कृत्तिवाससे[3] । तमहं संप्रवक्ष्यामि सा तु सर्व्वसुखप्रदा ॥४६॥

---

१. सुख ग । २. सदने नमः ख ।
३. क्षत वाससे क ।

जय त्वं सर्वमंगल्ये सर्वकारणकारण । श्मशानवासि देवेश निरावासे नमोस्तु ते ॥४७॥
कपालहस्तमीशानं कपाल कृत भूषणाम् । सर्वलोकप्रणेतारं सर्व्वेश्वरि नमोऽस्तु ते ॥४८॥
जये भुवन कर्त्तारी त्वं सर्व भुवनाधिपे । कपालमालिनं देवं महाकाल नमोऽस्तु ते ॥४९॥
चन्द्रमूर्ध्नि कृतं नित्यं चर्म्मवासः सदाप्रियम् । भूत भव्य भवं सौम्ये भुवनेश्वरि नमोस्तुते ॥५०॥

त्वं हि योगात्मिके योगे सर्व्वयोग प्रदायिके ॥
गजचर्म्मधरं देवं चण्डरावे[1] नमोऽस्तुते ॥५१॥

त्रिशूलपाणिनं नित्यं त्रिनेत्रं त्रिदशेश्वरम् । दिव्ययोगोद्भवे दिव्ये योगेश्वरि नमोऽस्तुते ॥५२॥
त्वं हि रौद्री महारौद्री नित्यं रौद्रपराक्रमा । त्रिमूर्त्ति च परं देवं[2] त्रिपुरान्त नमोस्तुते ॥५३॥
सर्व्वेश्वरं सर्वगतं सर्वज्ञं सर्व्वतोमुखम् । त्वं च रुद्रात्मिके देवी रुद्रेश्वरी नमोस्तुते ॥५४॥
जय देवि सुरश्रेष्ठे त्वं सर्वसुरपूजिते । सर्वत्रावस्थितं शान्तं सर्वव्यापिन् नमोस्तु ते ॥५५॥
यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः । सुराणामधिपे देवि सुरेश्वरि नमोस्तु ते ॥५६॥
जय विद्यात्मिके विद्ये विद्याभरण भूषिते । यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः ॥५७॥
स्थूलसूक्ष्मविभागेन व्याप्तं येन चराचरम् । सर्वविद्याप्रदातारि विद्येश्वरि नमोस्तु ते ॥५८॥
त्रिदशैस्त्वं स्तुता दिव्ये त्वं त्रिलोचनवासिनी[3] । अनादिमादिमं रुद्रं व्यक्तातीतं नमो नमः ॥५९॥
अनन्तं शाश्वतं विश्वं ध्रुवं नित्यमुमापतिम् । त्रिशूलपाणिस्त्वं देवी गणाध्यक्षे नमोस्तु ते ॥६०॥
श्रीकण्ठं श्रीधरं श्रीशं नीलकण्ठ नमोस्तु ते । विद्यामयी तनुर्यस्य विद्यातीतं च संस्थितम् ॥६१॥
गणानां नायिका त्वं हि गणेश्वरी नमोस्तु ते । त्वं हि दुर्गे महावीर्य्ये दुर्गे दुर्गपराक्रमे[4] ।

सकलो निष्कलश्चैव कलातीत नमोस्तु ते ॥६२॥

योगाधिपो योगगम्यो योगात्मा योगसम्भवः । रमसे देवि दुर्गेषु दुर्गेश्वरी नमोस्तु ते ॥६३॥
त्वं चण्डा त्वं प्रचण्डा च त्वं ब्रह्माण्डविदारिणी । महायोगधरं नित्यं योगेश्वर नमोस्तु ते ॥६४॥
ओमित्येकाक्षरं ब्रह्म प्रख्यातं भुवनत्रये । चण्डरूपा महाविद्या चण्डेश्वरि नमोस्तु ते ॥६५॥

---

१. चण्डनाथ ग । २. महात्मानम् क ग ।
३. त्रिलोकनिवासिनी ग । ४. पद्यमिदं क पुस्तके नास्ति ।

त्वं देवी उग्रसञ्चारी त्वमुग्रव्रतधारिणी। तस्यार्धन्तु शिवो नित्यं सदाशिव नमोस्तु ते ॥६६॥

अर्धमाना परा या तु तस्यार्धस्य परापरम्। त्वमुग्रशूलहस्ता च उग्रेश्वरि नमोस्तु ते ॥६७॥

त्वं हि क्रोधात्मिके देवि क्रोधभावेन संस्थिता। परात्परतरं शान्तं शांतातीत नमोस्तु ते ॥६८॥

अकारोकारमूर्धश्च मकारो बिन्दुरेव च। दानवानां वधार्थाय क्रोधेश्वरी नमोस्तु ते ॥६९॥

त्वं हि नारायणी देवी कौमारी[1] ब्रह्मचारिणी। निर्वाणं परमातीतं नित्यातीत नमोस्तु ते ॥७०॥

चित्तवेत्ता तथा चित्तं[2] वेद्यो निश्चित्यकस्तथा। सर्व मंत्रमयैर्दिव्यैः स्तूयसे त्वं नमोस्तु ते ॥७१॥

त्वं जया विजया नित्या अजिता चापराजिता।
असञ्चित्तं सचित्तञ्च चित्तातीत[3] नमोस्तु ते ॥७२॥

बालार्कशतभागस्य शतधा कल्पितस्य च। त्वं सिद्धिः साधकानान्तु सिद्धेश्वरि नमोस्तु ते ॥७३॥

द्युतिर्दीप्तिः कान्तिश्च कीर्त्तिः श्रद्धा त्वमेव च।
त्वं अनौपम्यभासश्च शिवः शान्त नमोस्तु ते ॥७४॥

अनन्तं शाश्वतं विश्वं देहस्थं देहवर्जितम् मेधा। सरस्वती त्वं हि त्वं श्रीर्देवि नमोस्तु ते। ॥७५॥

त्वं हि वृष्टिः स्वयं देवि त्वं सृष्टिश्च प्रजापतिः।
हृदिस्थं सर्वभूतेषु व्योमस्थन्तु नमोस्तु ते ॥७६॥

अग्राह्यमिन्द्रियैर्वापि सर्ववर्णविवर्जितम्। त्वं वणिक्कृषिकर्माणि त्वं सीता च नमोस्तु ते ॥७७॥

धरणी धारणी त्वं च त्वं वेला सागरेषु च। स्वतेजोगूढमात्मानं गुहावास नमोस्तु ते ॥७८॥

गूढातीतञ्च गूढात्मा गूढानां गूढगोचरम।
त्वं दिशो विदिशश्चैव त्वं सन्ध्या च नमोस्तु ते ॥७९॥

त्वं मातृका च देवेशि स्वरव[4]र्णविभूषिता। गुहाकासप्रदा नित्यं पूजार्था नमोस्तुथं[5] ते ॥८०॥

महात्मानं महादेवं महामाया परापरम्॥
सर्वशास्त्रेषु वेदेषु गीयसे त्वं नमोस्तु ते ॥८१॥

---

१. कौशिकी ब्रह्मचारिणी क ग।
२. चित्तं चेता तथा चिंता चित्योऽकाश्चितकस्तथा ग
३. चित्यातीत ग।
४. शिरवर ग।
५. गूढार्थार्थि ग गूहात्का क।

त्वं गायत्री सदा देवी वेदमाता स्वयंभुवा।
महाज्ञान परा नित्यं ज्ञानगम्य नमोस्तु ते ॥८२॥
ईशानमीश्वरं ब्रह्म सदाशिवाशिवं तथा। देवर्षिपितृभिर्नित्यं स्तूयसे त्वं नमोऽस्तु ते ॥८३॥
पद्मासना चतुर्वक्त्रा अक्षपाणिश्चतुर्भुजा।
पञ्चानां[1] परतो नित्यं निरालम्ब नमोस्तु ते ॥८४॥
सद्यो[2] वा अघोरश्च तत्पुरुषेशानमेव च। हंसयान समारूढा त्वं ब्रह्माणी नमोस्तु ते ॥८५॥
त्रिनेत्रा शूलहस्ता च जटामुकुटधारिणी। पञ्चब्रह्म कलातीत षष्ठ ब्रह्म नमोस्तु ते ॥८६॥
कालः कालाग्निरुद्रश्च आदित्योदयमेव च। वृषस्कन्धसमारूढा त्वं रुद्राणी नमोस्तु ते ॥८७॥
त्रिजटा बालरूपा च शक्तिहस्तारुणा स्वरा।
पंचधावस्थिता नित्यं पंचावरणं[3] नमोस्तु ते ॥८८॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च। मयूरासन समारूढा कौमारी त्वं नमोस्तु ते ॥८९॥
पद्म[4] चक्र गदाहस्ता पीताम्बरविभूषिता।
निर्वाणं परमातीतं निरञ्जन नमोस्तु ते ॥९०॥
क्षराक्षर विनिर्मुक्तं स्वरव्यञ्जन वर्जितम्। त्वं गरुडासना देवी वैष्णवी त्वं नमोस्तु ते[5] ॥॥९१॥
रक्तनेत्रे सुदंष्ट्रे च कालरूपे भयंकरे।
कला कलंकरहितं निष्कलंक नमोस्तु ते ॥९२॥
आकृतिं नैव जानामि गतिमुत्पत्तिमेव च। मेघवर्णे महाघोरे त्वं वाराहि नमोस्तु ते ॥३९॥
वज्रपाणि सहस्राक्षे छत्रध्वज मनोरमे। स्वयम्भुवं महात्मानं महादेव नमोस्तु ते ॥९४॥
भावैर्बन्धयसे विश्वं भावैर्मोक्षयसे पुनः। ऐरावतसमारूढे त्वमिन्द्राणि नमोस्तु ते ॥९५॥
त्वं निर्मासि महादेहे मांसोदन बलिप्रिये। स्वभावभावमात्मानं भवोद्भव नमोस्तु ते। ॥९६॥
यो भवः सम्भवश्चैव भयंचाभयमेव च। कपालखट्वांगकरे त्वं चामुण्डे नमोस्तु ते ॥९७॥

---

१. पञ्चालम् ख। २. सत्यो ग।
३. पंचाचरण ग। ४. शंख चक्र क।
५. श्लोकत्रयं नास्ति ग पुस्तके।

त्वमेका सप्तधा देवी बहुधा च विराजसे ।
भावयेत् प्रणिधानेन योऽसि सोऽसि नमोस्तु ते ॥९८॥

स्तवोऽयं तव देवेशि सशिवाय महात्मने । तोषणीया च त्वं देवि सर्वासुरनिबर्हणि ॥९९॥

घण्टानिनाद शब्देन छत्रध्वज समाकुले । शार्दूलेन च यानेन शोभसे त्वं नमोस्तु ते ॥१००॥

क्रमसि त्वं क्षणार्धेण भुवनानि महातले । भूर्लोकञ्च भुवर्लोकं स्वर्लोकञ्च नमोस्तु ते ॥१०१॥

त्वमोकार व्यवस्थिता देवि अकारादिविसर्गतः । त्वं स्थिता सर्ववर्णेषु पृथग्रूपे नमोस्तु ते ॥१०२॥

त्वं वामाद्या स्वयं देवि शक्तिव्यूहे व्यवस्थिता । विभुराद्या तथैव त्वं महादेवि नमोस्तु ते ॥१०३॥

त्वं रात्रिस्त्वं दिनं देवि ऋतवो वत्सरानि च ।
निमेषश्च मुहूर्त्तश्च त्वं संक्रान्तिर्नमोस्तु ते ॥१०४॥

त्वं काली कालरात्रि च कृतान्ती च सुदारुणा ।
त्वं भीषणी महारौद्री महाकाली नमोस्तु ते ॥१०५॥

दक्षयज्ञविघाती त्वं यमशीर्षनिकृन्तनी । त्वं देवि वीरमाता च उग्रकाली[1] नमोस्तु ते ॥१०६॥

त्वमेव देवि आकाशो त्वं च पाताल गोचरा ।
त्वं स्वर्गे चापवर्गे च मुक्तिदा त्वं नमोस्तु ते ॥१०७॥

त्वं हि सर्वात्मिका देवि सर्वमूर्त्तिषु संस्थिता । स्थूलसूक्ष्मविभागेन योगनी[2] त्वं नमोस्तु ते ॥१०८॥

यं यं पश्याम्यहं देवि स्थावरे जंगमेषु च ।
तं तं व्याप्तं त्वया सर्वं कात्यायनि नमोस्तु ते ॥१०९॥

त्वञ्च शक्तिक्रिया देवि नादविन्दु कलात्मिका ।
त्वं शिवा परभावेन ज्ञानशक्तिर्नमोस्तु ते ॥११०॥

त्वया देवि प्रसन्नाया शिवः प्रत्यक्षतो मम । तथा त्वं रूरुबन्धाय प्रसादं कुरू शांकरि ॥१११॥

वासव ब्रह्म सूर्य्याणां ह्रियमाणे त्रिविष्टपे । दैत्यौघमज्जमानानां त्वं पोता भव शूलिनी ॥११२॥

---

१. रुद्रकाली ग भद्रकाली क ।

२. व्यापनी क ग ।

एवं स्तुतः पुरा शम्भु देवीं तस्य तनौ स्थिताम् ।
तुतोष तावुभौ शक्र सहब्राह्मेण माधवः[1] ॥११३॥
वरं यथेष्टचित्तेन दत्तवान् शंकरः शिवा । इत्येवं देव देव्यायाः ब्रह्माद्यैः पठितं स्तवम् ॥११४॥
यथेष्टफलकामानां पूरकं श्रद्धयान्वितम् । चिन्तितं पठिताधीतं श्रुतं लेखकृतञ्च वा ॥
ददाति सर्वकामानि वाङ मनः काय बुद्धिजान् ॥११५॥
आर्त्तानां भव[2]भीतानां शत्रुभिरावृतानपि । करोति परमां रक्षां वनसरिन्नगेषु च ॥११६॥
व्याघ्रसिंह वराहेषु तस्करे चाष्टमीषु च । स्मरणादेव स्तोत्रस्य स्रंशते महदापदा ॥११७॥
ब्रह्महा गुरुघाती च सुरापः पितृघातकः । पठनान्मुच्यते शक्र अश्वमेधफलं लभेत् ॥११८॥

इति श्री देवीपुराणे रुरुवधोपाये देवदेवीस्तवो नाम त्र्यशीतितमोऽध्यायः[3] ।

---

१. सम्भव ख । २. भयभीतानां ग ।
३. इत्याद्ये देवी रुरुवधोपाये देव्यादेवस्तवः क ग ।



# चतुरशीतितमोऽध्यायः

शक्र उवाच ।

भगवन् भवतो ख्यातिमरातिक्षयजां कथाम् । सुमनाकृष्टिजननीं श्रोतुमिच्छामि तत्त्वतः ॥१॥

कथं स दैत्यराजेन्द्रो महाबल पराक्रमः । अजयः सर्वदेवानां भवान् चावहितो वद ॥२॥

श्रीभगवानुवाच ।

शृणु ते कथयिष्यामि देव्याः कीर्ति रुरोर्वधम् । यथा पृष्टं त्वया शक्र तथाहं ते निबोधत ॥३॥

दत्त्वा शक्ति स्वकोशेभ्यो[1] देवदेवेन वासव । गच्छध्वं सगणाः सर्वे विष्णुब्रह्मपुरन्दराः ॥४॥

तदादेशाद् वयं सर्वे गता यत्रासुराधिपः । तथा तेन जितास्तस्मात् पुनस्तत्रैव आगताः ॥५॥

स च क्रोधसमाविष्टः शम्भुं घाताय आगतः ।

तं दृष्ट्वा सहसा शम्भुर्गणान् सर्वान् समादिशत् ॥६॥

योधध्वं दानवेन्द्रेण देवानां हितकाम्यया । तथा स गजसंघेन वेष्टमानोऽपि वासव ॥७॥

निर्जित्य सहसा देवान् शिवोपरि व्यवस्थितः । एतस्मिन्नन्तरे देव रूपं कृत्वा तु भैरवम् ॥

किल विध्वंसयिष्यति न च भीतः प्रहर्षितः ॥८॥

ततस्तस्याहवं घोरं सह देवेन शम्भुना । सञ्जातं सह देवानां दानवानां भयंकरम् ॥९॥

कथञ्चित् सुप्रयत्नेन वीर्य वन्तश्च वासव । छिन्नं तस्य तदा कंठं धारासृग् भूतलं गता ॥

असंख्या रुधिरास्तत्र[2] निर्गताः काश्यपीतलात् ।

भूतार्थं भूतिरूर्ध्वन्तु कवचिनः सोत्तर[3]च्छदाः ॥१०॥

सुरक्त राग पट्टैस्तु आपीडितोऽपि ताडिताः । विकाशोद्यता निस्त्रिंशास्तडिद्धस्ता सखेटकाः ॥११॥

---

१. कायेभ्यो ग ।

२. असंख्याता रुरुस्तत्र ग ।

३. गदाम् ग पदा क ।

आयाम्मित शिरोत्कम्प विषाणाकरकार्म्मुकाः । प्रभा[1]पातालमाकार-रथाङ्घ्रिकरभीषणाः ॥१२॥
प्रपीडिताग्रसंवर्त्त-क्षुभिताम्बररागिणः । प्रदेशिनी सनासाक्षि वर्त्तितोष्ठद्विजा मता ॥१३॥
वैजयन्तीधराः रौद्राः परिघशक्तिपाणयः । ज्वलन्ताग्नि नभाकार पट्टिशोद्यत शक्तिभृत् ॥१४॥
कटंकटकराः केचित् पाशांकुशकरास्तथा । भल्लीकर्णीकचन्द्रार्ध कुठार करभासुराः ॥१५॥
मुञ्चन्त्यस्त्रमहौघानि वलान्ते बलदर्पिताः । भय व्रीडोज्झितमनाः शौर्य वीर्य बलान्विताः ॥१६॥
केचित् स्यन्दनमारूढा मृगराजस्थिताः परे । गजवाजिस्था ऋक्षस्था पदस्थामोघवीर्ययः ॥१७॥
लक्षकोटिविभागैश्च वेष्टितस्तैर्महावलैः । लिह्यन्ति भेदमायान्ति[2]निवर्त्तन्ते शिवायुधैः ॥१८॥
विशीर्यन्तोऽपि वाणोघैः सन्मुखं प्रवहन्ति च । रक्तमेदेन गोः पूर्णा तेषां कोशोद्भवेन च ॥१६॥
ततो ब्रह्मादयो देवा भयं जग्मुः सवासवाः । यदि स्यान्निर्जितो देवः क्षयः सर्वदिवौकसाम् ॥२०॥
एतस्मिन्नन्तरे शक्र ब्रह्मा चिन्तयते क्रियाः । स्त्रीरूपधारिणी भूत्वा सहायत्वं महेश्वरे[3] ॥२१॥
क्षिप्रं कुर्युः स्वकार्येदं एवं विश्वेश्वरे रणे । तत्रोत्पादितवान् ब्रह्मा स्वशक्तिं किरणोज्ज्वलाम् ।
कमण्डलुकरां देवी शरासनकरां तथा ॥२२॥
एकैकां कोटिरूपेण सर्वायुधधरां स्थिता । निघ्नन्ति न च हन्यन्ते पातयन्ति सहस्रशः ॥२३॥
ब्रह्मरूपधरां किन्तु ललनाकारविग्रहाम् । हंसस्यन्दनमारूढां स्वकीयायुधधारिणीम् ॥२४॥
तर्ज्जयन्ती महौजेन दानवानां भयंकरी । तस्य घोरानि कर्माणि दृष्ट्वा स विस्मयन् शिवः ॥२५॥
का पुनः स्रष्टा सुस्नेहा सदा ते प्रतिपक्षजित् । अस्या शक्तिर्द्वितीयायां सृजामि अपराजिताम् ॥२६॥

इति श्री देवीपुराणे रुरुवधे ब्रह्माण्युत्पत्तिर्नाम चतुरशीतितमोऽध्यायः[4] ।

---

१. पुत्रा ग, पात्राणि क ।
२. तत्र आयान्ति क ग । ३. महेश्वरी ग ।
४. इत्याद्ये देव्यवतारे रुरुवधे ब्रह्माण्युत्पत्ति क ग ।



# पञ्चाशीतितमोऽध्यायः ।

भगवानुवाच ।

तथा युद्धं समालक्ष्य ब्रह्माणी दनुजैः सह । शंकरेणादि सा शक्तिः ध्याता उत्पत्तिकारणैः ॥१॥

परस्परन्तु संरुध्य युध्यन्ति विजयन्ति च । एवं स्मृत्वा तु स्वां मूर्ति स चक्रे त्रिदशेश्वरः ॥२॥

ध्यात्वा हृदाम्बुजावस्थां शशांक शतनिर्मलाम् । पीनस्कधसमारूढां शूल खट्वांगधारिणीम् ॥३॥

एवं गृहाण छिन्धि एवं[1] रौद्रालापां सुरासुराम् ।
तां दृष्ट्वा रिपवः[2] सर्वे विद्रुताः भयविह्वलाः ॥४॥

षण्मुखेनापि दृष्टेन ध्यात्वात्मस्थ मरीचिनी । उत्पादिता महावीर्या शतपत्र समास्थिता[3] ॥५॥

शक्तिघण्टाधरा भीमा शर[4]शृंगारनामिताः । हंसस्वरसमेणैव ध्वनिना पूरयद्दिशः ॥६॥

चल विद्युन्नवाकारा दैत्याना पतितां वने[5] । मया शक्र स्वतेजोत्था विसृष्टा कारणेच्छया॥७॥

द्विजेन्द्रसंस्थिता भीमा केयूर कटकोज्ज्वला । शारंगघोर घोषेण शंखनादेन भूरिणा[6] ॥८॥

हेलाहुङ्कारशब्देन दानवेन्द्रनिषूदिनी । वैवस्वतेन स्वां मूर्त्ति श्रुत्वा समुपपादिता ॥९॥

अभेद्य कर्कशेणैव घोरदण्डेन दंष्ट्रिणा । महामहिषमारूढां पाशदंडायुधोद्यता[7] ॥१०॥

घर्घरेणाति शब्देन प्रलयाम्बुदनिस्वना । कालजिह्वे च दुष्प्रेक्ष्या क्षया[8]र्चिरिव निर्मला ॥११॥

शक्रोप्येवं स्वकीयार्चि तप्तचामीकरप्रभाम् । मत्तद्विरदमारूढां सहस्रनयनोज्ज्वलाम् ॥१२॥

---

१. हलम् ग । गृह्णन्ति नद्ये क ग ।
२. पशवः क ग ।
३. शतपत्रासनस्थिता क म ।
४. शव क ग ।
५. बने क ग ।
६. भूरिणी ग ।
७. अधोद्यता ।
८. कृपार्चि क ।

वज्रांकुशकरां देवीं शरासनकरां तथा । एकैक्यं कोटिरूपं तु सर्वायुधधरां स्थिताम्[1] ॥१३॥
निघ्नन्ति[2] न च हन्यन्ति पातयन्ति सहस्रशः । महास्त्रैर्भेदयन्त्याशु दानवानां वरुथिनीम् ॥१४॥
गतागताक्षयं शक्र वेलामम्भोनिधेरिव । प्लावयन्ती च मेदिन्यां तद्वद्दैत्यवरुथिनीम्[3] ॥१५॥
तृप्तास्ता मांस भेदेन न जितो[4] दानवेश्वरः । प्रलम्बासिगदापाणिः परं विस्मयमागताः ॥१६॥
विषादभयशंकार्ता देवदेव पुरोगमाः । स्तुवन्ति ताः सदा शक्र शिवं सर्वा मरीचयः ॥१७॥
पतिता बाहुदण्डा नो[5] चलन्ति दानवा प्रभो । तदा ब्रह्मादयो देवाः परां शंकामुपागता ॥१८॥
स्तुवन्ति देवदेवेशं कालरुद्रं परापरम् । श्रुत्वा वाक्यं तत शम्भुः शक्तीनामच्युतस्य च ॥१९॥
महत्क्रोधं ततोत्पन्नं क्रोधाद्वह्नि[6] समुत्थितः । वह्निज्वाला सुदीप्तास्तु तिर्यगूर्ध्वमधोगताः ॥२०॥
ज्वालाकलापमध्यस्थां सूर्यायुतसमप्रभाम् । कालरुद्रस्य या शक्तीः शिवसाहाय्यतः स्थिताम् ॥२१॥
अदतीव च जगत्सर्वं कालरात्रिर्भयानना । दंष्ट्राला पिंगलाक्षी तु प्रलयाम्बुदनिस्वना ॥२२॥
वज्रांकुशकरा देवी दण्डासिपाशमुद्यता । गदाशक्तिविहस्ता तु त्रिशूलायुधधारिणी ॥२३॥
तर्ज्जयन्ती दिशः सर्वा देवदेवपुरः स्थिता । उवाच त्वरितां वाणीं किं करोमि सुरेश्वर ॥२४॥
ततो देवेन सा उक्ता कृष्णेन चापराजिता । यदि मे वत्सला देवि रुरुं त्वं हि निपातय ॥२५॥
एवं करोमि देवेश यत्त्वया च सुभाषितम् । सृष्टं च शम्भुना तस्मान्महोदधिसमाशयम्[7] ॥२६॥

त्वं च साहसशक्तिभि[8] पीत्वा क्रोधवशं गता ।
तदा तु दानवी सेना कोटिधा वर्धिता पुनः ॥२७॥
तद्वीर्यहृष्टकाम्यास्ताः भक्ष्यं प्रार्थयन्ति कृत्स्नशः[9] ।
बुभुक्षिता स्म देवेश भक्ष्यमस्माकं प्रयच्छत ॥२८॥

---

१. एकैकाः कोटिरूप्यैंस्तु सर्वाम्बरधरा स्थिता क ग । २. हिनस्ति ग ।
३. देव वरुथिनीम् ख । ४. निर्जितो क ।
५. बाहुदण्डानि न चान्त क ग ।
६. बाहू क । ७. समाभवेत् ख ।
८. इतं सहसा ग । ९. कृत्यय क ग ।

ततः शिवेन ताः सर्वाः अनिवारिततेजसः । निवेदितं मया तुभ्यं रुरुं त्वं हि घातय[1] ॥२९॥
ततः कलकलारावं कृत्वा देवीं[2] सुदारुणम् । दानवीं चतुरंगेण पातितान्तु महौजसा ॥३०॥
ततः परस्परालापं कृत्वा धूर्यमिवाकुलम् । घर्घरारावघोरेण स्यन्दनानां जवस्थिताम् ॥३१॥
वज्रपट्टशिलासंघैः स्फालनैः स्ववलितोत्थिताम् । अक्षणाभिकषोत्पन्नैः क्वणद्भिः पूरितं नभः ॥३२॥
आलोकालोकपर्यन्तं ब्रह्माण्डं स्खलितं पुनः । प्रतिशब्दं[3] महाघोरं श्रवणे कातराकरम् ॥३३॥
जनान् जनस्थितानान्तु नखरैर्न्निष्ठुराः हता । चूर्णयन्ति[4] पतन्तीव रुक्ममाणिक्य संचयाः॥३४॥
सौर्यवर्णाङ्घ्रिपालैस्तु[5] सनाथा भूधरोपमा । भग्नांकुशाः समुत्पत्तिः प्रतिगन्धविरोषिताः ॥३५॥
दुर्दिनं मेघधारैव दन्तिनां शीकरैर्घनैः । न परं नापरं शक्र जनयन्ति जनैषिणः ॥३६॥
आलोकस्थं समुत्सुकयं व्याहरन्तं[6] परस्परम् । सदा नित्यैवमेकन्तु सान्द्रीभूतोऽमयं बली ॥३७॥
कपोलपुलितं हेमं[7] रोमार्धतनु कर्कशम् । सुकठोरप्रहारैस्तु निरपेक्षन्तु निष्ठुरम् ॥३८॥
उरसि यत्र कलितं[8] हुङ्कारसहितारवम् । उच्छूनं तु बलं तन्तु वमन्तं रभसा बलम् ॥३९॥
भग्नवृन्दं करिमिश्रं रथरुध्वं प्रवर्त्तितम् । भ्रमन्तावर्त्तकुटिलं चलदृष्टिरकातरम् ॥४०॥
रक्षन्तमेकमेकं तु सर्वायुधविशारदम् । शिलीमुखै[9]र्बहुदन्तैश्च षष्टिवक्त्रैः सुसंकटम् ॥४१॥
तनुत्राणं सुसंघट्ट रणत्कर्णिवराकुलम्[10] । स्फोटं वज्रायुधानाञ्च अरिप्रतिरवाकुलम् ॥४२॥

क्वचित् पतन्ति च गजा दारिताः सुप्रहारिभिः ।
क्वचित् तुरंगगात्राणि भग्नवज्ररथाः क्वचित् ॥४३॥

दंडवज्रगदा शूल शक्ति खट्वांगभेदितम् । गणाधिपेन बलिना क्वचित् परशुसूदितम् ॥४४॥
क्वचित्प्रयान्ति संमोहं कर्कशाहतमस्तकम् । क्वचित्पतन्तमुत्थन्तं दंशिताधरभास्वरम् ॥४५॥
क्वचिन्नमितमातंगं ऐरावत द्विजापहम् । क्वचिन्महिषशृंगैश्च नागकूटैर्निपातितम् ॥४६॥
वृषश्रंगै क्वचित् प्रोक्तं क्वचिच्छिखिसमाहतन् । क्वचिद्वज्रनरवैर्भिन्नमुरुगरूडचंचुना ॥४७॥

---

१. शिशु धातय । पगु ग ।
२. घोरम् क ग ।
३. प्रतिराष्ट्रम् ग ।
४. वृत्तेतोति ग ।
५. शौर्यवता क्रियाजैश्च ग, पानैश्च क ।
६. व्यबहरन्तम् ग ।
७. हर्म्यैक प्रनिंत प्रहसं ग ।
८. असिपत्र क्वणितं ग ।
९. श्रीमुखैः ग ।
१०. रिबाकुलम् क ग ।

क्वचिद् वृषप्रहारैस्तु विह्वलमवनीगतम् । क्वचिच्छिवाभिर्भक्ष्यान्तः ज्वालालङ्कृतदेहजम् ॥४८॥
क्वचिद् दुर्गन्तु नृणां मन्त्रमालाविभूषितम् । इत्थम्भूतं बलं तेषां शक्तिभिः कुलितायुधम्[1] ॥४९॥
सम्वर्त्ताम्बुजपत्राढ्यां कृत्वा बीणां[2] सुवर्चसाम् । पिनाकाकारमार्गं च भ्रूलतां भूललाटगाम् ॥५०॥
कुन्तकर्पूरयष्टीभि र्भुशुंडीहलमुद्गरैः । वत्सदन्तैः कुठारैश्च झषदंशैः सिताम्भरैः ॥५१॥
शलाकैः शिलीमुखैः शूलै पट्टिशैमूसलैर्हलैः । वसुनंदैः करालैश्च विकरालैः सखेटकैः ॥५२॥
वारणैर्विविधाकारैः पाशांकुशमृगाननैः । नाराचै कनकदण्डैश्च कार्मुकैर्वृक्षपर्वतैः ॥५३॥
शिलालोष्टैः कपालैश्च वज्रशक्ति गदाकुलैः । खट्वांगपरशुपट्टैश्च क्रकचैश्चक्रसर्वगैः ॥५४॥
शस्त्रसंहातसंजातं शिखिध्वजसमाकुलम् । आतपत्रानि दीव्यन्ति सायुधस्पंदनानि च ॥५५॥
क्षयानलेव दृश्यन्ते प्रकीर्णास्तु युगक्षये । घोरं प्रवर्त्तितं युद्धं सुराणां भयकारकम् ॥५६॥
चंडाग्निधारदलिताश्चण्डघाताः करोत्थिताः । करवालाः पतन्त्याधः क्षये च रविरश्मयः ॥५७॥
शक्र चापेन चापानि सदा मण्डलितानि च । गजझंकारमुखरां बाणावलि परिश्चलम् ॥५८॥
कुन्तदारितदेहास्तु सावष्टम्भमयैर्भुजैः । दन्डस्थापि न लक्षन्ति न युध्यन्ति गतासवः ॥५९॥
क्षुरार्धचन्द्रचन्द्रासि विनिर्वतित सकर्कशा । पतिताश्चोत्थाय धावन्ति सलक्षाः सुप्रहारिणः ॥६०॥
छिन्नबाहूकरकंठशिरोरु विनिसुस्थिताः । उज्झन्ति शक्तिसंघानि कुटिलेक्षणवर्जिता ॥६१॥
द्विधरापि समुत्थन्ति बहवः शौर्यमुज्ज्वलाः । ततोज्झितापि दृश्यन्ति भ्राम्यमाणा व्यवस्थिता ॥६२॥
आधूय वारुणान्तस्था घनस्थेव तडिल्लता । सम्मुखीकृतसारंग[3] कोटिमालोक्यमुद्यताः ॥६३॥

ज्यातलानां रवाश्चण्डा गता[4]भिन्दन्ति रोदसी ।
तद्वत् शराणि लक्षानि विनिशीर्य द्विधां तनुम्[5] ॥६४॥

पतिताः संविलक्ष्यन्ति छिन्नपक्षेव पर्वताः[6] । प्लवन्तासृक् प्रवाहिणी गन्धं जम्बूनदी यथा ॥६५॥
आतपत्रसिताम्भोज कुमुदोत्पलवाहिनी । झषनक्ररथाश्चित्र करिमकरसमाकुलाम् ॥६६॥

---

१. कुलितायुधः ग । २. कृत्वारीणाम् क ।
३. शारंग । ४. गदा क ग ।
५. तनुः ख । ६. पर्वतां कृत सारंगम् ग ।

वसुनन्द सुभृत्कायं कृषिकूर्मञ्च सञ्चराम् । भूपृष्ठं प्लावितं सर्वं तेषां कायसमुद्भवैः ॥६७॥
अनेकाकाररूपैस्तु दिक्पालानान्तु मूर्त्तयः । तस्मिन् जाता महाघोराः संहारार्थं शिवेच्छया ॥६८॥
सुग्रीवं कुम्भकर्णञ्च नन्दिञ्चैव महाबलम् । प्राग्निगन्तानि भाषन्तो दिक्पालास्त्वरितागताः ॥६९॥
तथा दृष्ट्वा तु ते शक्र पूर्व[1] देवैः पराजिताः । पिंगलाख्यं महाघोरं नंदिकं च गजाननम् ॥७०॥
भृकुटीमुखं च चत्वारो दक्षिणेन समागता । पूजिता धर्मराजेन सर्वान्तकनिवारणाः ॥७१॥
करालं तालजंघं च कैलाशं च महाबलम् । गोकर्णसहिताः पाला[2] शोणितासवलोलुपाः ॥७२॥
पश्चिमां दिशमुद्घोष्य आगताः कोटिभिर्वृताः । ते दृष्ट्वा मेघयानेन पूजिता संस्तुताः सदा ॥७३॥
दंतरं लोहजंघश्च ऊर्ध्वकेशं महामुखम् । उत्तरेणागताः क्रूरा मांसशोणितभोजनाः ॥७४॥
सोमेन पूजितः शक्र आत्मरक्षार्थिना सदा । त्रिलोचनाश्चतुर्वक्त्रा अग्निर्ज्वलिततेजसः ॥७५॥
खट्वांगशूलहस्तास्तु कपालकृत शेखराः । आमर्दकाग्निकालाद्या[3] एकपादादयस्तथा ॥७६॥
एवम्भूतगणाश्चान्ये देवीनां परिचारिकाः । चतुर्विंशतियोगिन्यः चतुर्दिक्षु उपस्थिताः ॥७७॥
एवं कोटिविभागैश्च किंकरीभिः समावृताः । किंकरैश्च महाघोरैः रौद्ररूपैः स्वतेजसैः ॥७८॥
एवंविधैस्तदा शक्र[4] रुद्रचित्तोद्भवैर्गृहैः । आब्रह्मस्तम्ब पर्यन्तं व्याप्तं तैः सचराचरम् ॥७९॥
यथा स्वच्छन्दरूपेण भैरवेण महात्मना । देवानामुपकाराय असुराणां वधाय च ॥८०॥
तथा संक्षेपतः शक्र मया च तव कीर्त्तितम् । विस्तरं ब्रह्मणस्येदं गुहेन कथितं पुरा ॥८१॥
शिवेन शक्र देव्यायाः स्कन्देन अवतारितम् ॥८२॥

इति श्री देवीपुराणे रुरुवधे ग्रहोत्पत्तिर्नाम पंचाशीतितमोऽध्यायः ।[5]

---

१. पुनर ग ।
२. पाना क ग ।
३. मालाद्या ख ।
४. शक्ति ख ।
५. आद्ये देव्यवतारे रुरुवधे ग्रहोत्पत्तिः क ग ।



# षडशीतितमोऽध्यायः ।

श्रीभगवान्[1] उवाच ।

ततो निर्जित्य तैः सर्वैः शिवाज्ञाचार वर्तिभिः । सवाजिवारणरथाः कवचिनः सोच्चरंहसा[2] ॥१॥
ततः सा दानवी सेना भक्षिता तैर्महाबलैः । शक्तिभिस्तु अमोघाभिः शिवतेजोपबृंहितैः ॥२॥
ततोऽसौ दानवेन्द्रस्तु प्रविष्टो वसुधातलम् । कांचनी च पुरी यत्र चित्रा चित्रवतीति च ॥३॥
तत्र हाटकरूद्रस्तु विद्यैर्विद्येश्वरैर्वृतः । तत्रापि सा महाभागा वृता पातालमातरैः ॥४॥
मण्डलीकृतसारंग कर्णान्तागतपत्रिण । ज्याघोषे घोरमुखरा तर्जयन्ती पुरःस्थिता ॥५॥
दृष्ट्वा तालप्रविष्टोऽसौ[3] यत्र शंकर चर्चितम् । अथर्वरुद्रसंयुक्ता वृता सा योगमातरैः ॥६॥
दृष्ट्वा घोरेण रूपेण प्रनष्टस्तु शिलोच्चये । यत्र रूप्यमयी भूमिः पुरी चन्द्रमा स्मृता ॥७॥
कपालरुद्रसहिता वृत्ता सा ह्यग्नि मातृभिः[4] ।
दृष्ट्वा घोरेण[5] सौभग्नो गतः शीघ्रं गभस्तिमान् ॥८॥
पुरी सूर्यवती नाम ताम्राभा भाति सर्वतः । तत्रापि पश्यते देवी वृता किम्पुरुषादिभिः ॥९॥
कपालमातरैर्युक्तां खट्वांगकरभासुराम् । तां दृष्ट्वा वेपमानस्तु गतः श्रीतालसंज्ञकम् ॥१०॥
यत्र विद्युन्मती नाम पुरी चैत्रमयी[6] शुभा । पिंगरुद्रैर्वृता देवी तथा चोत्पलमातरैः[7] ॥११॥
तर्जयन्ती महाक्रूरा तां दृष्ट्वा तु अधोगतः । यत्र सा स्फाटिका भूमिः सुतलं नाम भूतलम् ॥१२॥

---

१. भगवानुवाच क ग ।
२. सोतुरांगदा क ।
३. तले क ग ।
४. पंक्तित्रयं ख पुस्तके नास्ति ।
५. तत्राप्य ग
६. चैत्यमयी क ।
७. तथा चापि न मातरैः घ ।

पुरी कान्तिमती भीतः प्रनष्टस्त्वसुराधिपः। तत्रापि शक्र देवेशी गणरुद्रैः समावृता ॥१३॥

भगिन्या मातृसहिता खड्गपाशाँकुशोद्यताः।
वीर्य शौर्योज्झिता त्वेषां गतस्त्वाभास संज्ञिताम् ॥१४॥

पुरी भस्मवती यत्र तत्रोष्म समन्विता। ऊच्छुष्म मातरैर्युक्ता तत्र सा पुरतः स्थिता ॥१५॥

क्रूरालापा महाक्रूरा तर्ज्जयित्वाब्रवीदिदम्। तिष्ठ तिष्ठ महामूढ त्वयि क्रुद्धः पिनाकधृक् ॥१६॥

कुत्र वा गच्छसे पाप यत्र नाहं कुतोऽत्र तत्[1]। कारणानल मध्यस्थं ममेदं वक्त्रगं जगत् ॥१७॥

एतच्छ्रुत्वा वचोत्युग्रं पुनर्योद्धुं समुद्यता। जीवितुं भयमुत्सृज्य शरासनकरः शरैः ॥१८॥

ज्याघातघनघोषेण वर्षयन्नशनिरिव। प्रचक्रिरे महामाया मायां कृत्वा सहस्रशः ॥१९॥

चतुरंगं रचित्वा तु रथतुरगगजाकुलम्[2]। विभिन्नकोटरैर्दन्ति रुक्मपुंखैश्च पत्रिभिः[3] ॥२०॥

चंडघातशरैर्भेद्यं पातयन् मातृमातरा। घण्टाडमरुशब्देन वाहिनी वधिरीकृता ॥२१॥

पाटवं जनमुख्येन विद्युत्कोटिनिभेक्षणी। निहत्य तस्य मायान्तु शस्त्रछेदं प्रचक्रिरे ॥२२॥

वाणैर[4]प्रतिवीर्यैश्च छिन्दयित्वा शरासनम्। कृत्वा सर्वास्त्ररहितं दानवेन्द्रं सुगर्वितम् ॥२३॥

हतवीर्यं हतशौर्यं[5] हिंसयित्वा महेश्वरी। आकृष्टान्ती सरक्तौघं मेदमज्जास्थिमांसवम् ॥२४॥

तस्य चर्म च मुण्डं च गृहीत्वा तु विनिर्गता।
समवायं ततः कृत्वा प्रत्यंगिरमभाषत[6] ॥२५॥

तासामिच्छास्तु विज्ञाय भीताः सर्वे दिवौकसः। ऊचु किं कुर्म हे रुद्र घोररूपा मरीचयः ॥२६॥

ततो ब्रह्मादयो देवाः शिवेनोक्ताः पुरन्दर। मन्देव मन्दमानाया स्वस्वामिनि पुरोगता ॥२७॥

दूरं भवधवं संक्षिप्तं बभूवुः सुरपुंगवाः। ब्रह्मा प्रोवाच शक्त्यात्मा स्तवं[7] मे दद अम्बिके ॥२८॥

एवं शिवो वयं शक्र प्रार्थयित्वा पुरस्थिताः। शम्भुनापि तथा गृह्य सप्तस्वरविभूषितम् ॥२९॥

वीणावाद्यं समारब्धं सारावित सकौशिकम्। ग्राम-मूर्च्छन-तानाद्यैः कृत्स्नं जगदपूरयत् ॥३०॥

नृत्यते परमो देवो अस्माकं सह वासव। मया गीतं समारब्धं स्तवं ब्रह्मादिभिस्तथा ॥३१॥

---

१. कृत्वा वां जसे पाप यत्र नादं गतौ ब्रतत् क।
२. अथाकुलम् ख।
३. क पुस्तके पद्यमिदम् नास्ति।
४. महामायीति क।
५. गतासौर्य्यं ग। सुतशौर्यं क।
६. प्रत्यंगिरसः मातरः क।
७. स्थलं क स्तनं ग।

विकसित कर्णिकार–कमलोत्पल ललाटजम्[१],
जटामुकुट निघृष्टगंग शशिपन्नग विचित्रतनुम् ।
त्रिदशविलासिनी वदन पंकजगीत वरम्[२],
ध्रुवमिह तन्नमामि चंडेशं शिवं शिरसा ध्रुवकम् ।।३२।।
प्रणतजनसितमसुरबलहरं त्रिदशाधिपते चण्डेश्वर नमोस्तु ते ।
सदा गिरिदुहितृपते वरवृषभगते नमाम त्वां पशुपते ।।३३।।
देवाधिदेव वरदं[३] पुरुषाधिपुरुषसुखदम् । भूताधिभूत गुहजननं वन्दे हरिरविशशिनयनम् ।।३४।।
वेदैर्मन्त्रैश्च परिपठितं विविधैः स्तोत्रैः ततः परमम् ।
वीणावेणुमृदंगैः शंखैर्बहुविधवाद्यै दुन्दुभिर्नादै ।
दिव्यैर्गेयैः गीत रवं पद–शत–ताल प्रमाणयुतम्,
ललितैः करणैः नृत्यरतं जय जय देवं चण्डशिवम् ।।३५।।

इति श्री देवीपुराणे रुरुवधे चण्डेश्वरवर्धनं नाम षडशीतितमोऽध्यायः[४] ।

१. लोलजम् ख; जटम् ग ।
२. जीत रवम् क ग ।
३. वरवरदम् ख ।
४. रुरुवधे चण्डेश्वरवर्धमानम् क ।



# सप्ताशीतितमोऽध्यायः ।

भगवानुवाच ।

एतस्मिन्नन्तरे शक्र चन्द्रकोटिसमप्रभाः । सदाशिव समुद्भूताः शांतरूपा मनोहराः ॥१॥
रोदसीं चतुरोद्भाष्य[1] वीणाहस्ताः समागताः । शम्भुना सहिताः शक्र नानाभाव समन्विताः ॥२॥
सरोजाद्यै विचित्रैश्च वर्त्तनीभिः सुवर्त्तितैः । फलतोक्षे[2] पवित्राक्षैश्चलत्तारैः[3] रसान्वितैः ॥३॥
नानाविहारललितैश्चतुरस्रैः सरक्षगैः । उत्फुल्लाद्यैर्द्रुतैर्भेदैः स्त्रिरुन्नतरसान्वितैः ॥४॥
ऊर्ध्वाध्व वलितापाठ वेपाद्धन[4] नमागतैः । बाहुभिर्वातप्रक्षिप्ताः प्रयान्ति शिविकादिशाम् ॥५॥
दृष्ट्वा समाथमाकाराः कराम्भोज विनिर्मिताः । पूरयन्तमम्बरं शक्र चारुचारी नताननाः[5] ॥६॥
उत्क्षेपं दण्डपादाब्जैर्भानोः सान्द्रैर्नभस्तले । निरुद्धं स्पन्दनं साश्वं विपरीतगतिस्थितम् ॥७॥

कर्णस्थान[6] सूचिभिर्नागाः नागाः पदतलेस्थिताः ।
गुरुः पीडन्ति फलिनो वमन्ति गरलमसृक् ।८॥

समानं भोगभावञ्च भिषजानां विवर्णितम् । नागराज कुलान्यष्टौ स्वस्थानानि विहाय तु ॥९॥
विद्रुतानि युतस्तानि भीतानि तरलानि तु । इतश्चैतश्च गच्छन्ति मूर्च्छाकुलितमानसाः ॥१०॥
शेषो गुरुर्भराक्रान्तो याति मोहं मुहुर्मुहुः । तथा मेघानि ऋक्षाणि ग्रहाणि विविधानि च । ११॥

स्थानच्युतानि सर्वाणि तान् दृष्ट्वा हर्षितानि च ।
नभःस्थितानि मुञ्चन्ति स्रग्मालानि नित्यशः ॥१२॥

---

१. च भुवोद्भाष्यं ग ।
२. भ्रूलताविक्षेप विभ्रान्तैः क ।
३. चलत्तालैः ख ।
४. रोगाद्घमन ख ।
५. लतालता ख ।
६. चरणं ख, ककज ।
७. विषजालम् ख ।

नृत्यारम्भे स्थिताः सर्वे परमानन्दमागताः । एवं नाना प्रकारैस्तु भावाभावविलासजैः[1] ॥१३॥

गणैः रुद्रैः समुत्पेताः योगिनीभिः समन्विताः ।

वेतालैः राक्षसै र्गुह्यैः क्रीडयित्वा गतस्तु यः[2] ॥१४॥

रुद्रं संपूजयित्वा तु पुरतः संव्यवस्थितः । तदा तुष्टेन देवेन पूजयित्वा तु शक्तयः ॥१५॥

एवमुक्तास्तु ता देव्याः सर्वलोकस्य मातरः । पूज्याः सर्वेषु कार्येषु ब्रह्माद्यै र्मनुजैरपि ॥१६॥

जगतः[3]पालनार्थाय निर्मिताः कारणेच्छया । कारणं तत्पराशक्ति र्यासावाद्या अनामया ॥१७॥

ब्रह्माद्यान् असृजन् शक्र वयं रुद्रास्तथैव च । उत्पत्तिस्थिति नाशाय क्रमशः सा नियोजयेत् ॥१८॥

अकामेन तु देवेश यथा सूर्यस्य अंशवः । पुण्डरीकविबोधाय[4] क्रमसंकोचनाय च ॥१९॥

एवं सा सर्वकार्याणां प्रवृत्तये[5] च निवृत्तये । न चादि न च मध्यान्ता वस्तुमात्रेण संस्थिता ॥२०॥

तुस्येच्छा शंभुना उक्ता पूज्या मर्त्ये भविष्यथ । इप्सितांश्च तथा कामान् भक्तानां संप्रदाष्यथ ॥२१॥

तदा या यस्य[6] चोत्पन्ना तेन सा स्तविता विभो । ब्रह्मणा शिवस्कन्देन मया वैवस्वतेन च ॥२२॥

इन्द्रेण सर्वदेवैस्तु रुद्रो देव्यास्तु पूजिताः । लोकपालैर्ग्र हैर्नागै र्दानवैश्च प्रपूजिताः ॥२३॥

तथा शक्रादिभिर्देवैरेतन्मातृस्तवं कृतम् ॥२४॥

प्रचण्डमणिकुण्डलं भृकुटिभासुरोग्राननम्,[7] करालमतिभीषणं विकृतवेषमुल्वणम् ।

ज्वलत्परशु वल्लकी डमरु मुण्डखट्वांगिनम्, नमामि वृषभस्थितां त्रिनयनां महाभैरवीम्[8] २५॥

सितप्रवरपंकजे भ्रमर वृन्दनादाकुले, सदा विमलविस्तृते विपुलराजहंसस्थिताम् ।

स्थितिं[9] प्रवरविराजते ऋषिकुलोपसंसेविताम्, नमामि शिरसा पितामहसमुद्भवां मातरम् ॥२६॥

शरच्छशिशतोज्ज्वला[10] तुहिनशंखकुन्दप्रभाम्, स्फुरत्किरणभाविता सितवृषासनस्थिताम् ॥

---

१. विनाशजैः क ।
२. गतस्तलः क ख ।
३. जपतः क ।
४. विरोधाय क ।
५. प्रवृत्ताय क ग ।
६. यथा पापस्य ग ।
७. भास्मरोग्राननम् क ।
८. त्रिनयनं महाभैरवम् क ग ।
९. स्थिताम् क ग ।
१०. करोज्ज्वलाम् क ।

जटाविकटजूटके दधाति चन्द्रलेखां तु याम्; नमामि त्रिशिखाभूतां प्रमथनाथदेहोद्भवाम् ॥२७॥

मयूरवरगामिनीं दरदशुद्ध वर्णोत्कटाम्, वर्णश्च चरणं कलितघण्टिकां निशित शक्तिहस्तोद्यताम् ।

प्रभा निकररश्मिभि ऋग्गायमानांशुकाम्, नमामि गुहसम्भवां त्रिदशशत्रु निर्वाहिणीम्[1] ॥२८॥

तसोप्रचय चान्द्रप्रभूतकुसुमां[2] पुंजोपमाम्, गदामुसलधारिणीं धनुशंख चक्रा[3]युधाम् ।

गरुत्मरथसंस्थितां विपुलपुण्डरीकेक्षणाम्, नमाम्यजितसम्भवां विमलसिद्धिदां वैष्णवीम् ॥२९॥

प्रभिन्नघनकज्जलच्छविं वराहरूपाननाम्, कृपाणकरभासुरां परिघकालपाशोद्यताम् ।

कृतान्ततनुसम्भवां प्रलयमेघघोषस्वराम्, महामहिषवाहिनीं शूकरीं[4] नमाम्यादरात् ॥३०॥

विशुद्धकनकप्रभां चकितविद्यु ल्ललितोपमाम्; करीन्द्र[5]वरसंकुलां विविधभूषणैर्भूषिताम् ।

स्फुरत्कुलिशधारिणीं सुरसमूहसंपूजिताम्, नमामि वरदायिकां विपुलभोगदां शक्रजाम्[6] ॥३१॥

दिवाकरशतप्रभां सितकपालमालाधराम्, करालदशनाननां प्रलय रवीव[7]पिंगेक्षणाम् ।

रुरुतनुघातिनीं रुधिरमांस मेदप्रियाम्; नमामि शिवसंस्थितां[8] शरणदां महोग्रायुधाम् ॥३२॥

चलच्छ्रवणचामर प्रहृष्टषट्पदाराविताम्, कपोलमदवारिणा दशदिशान्तरं मोदयन् ।

गजेन्द्रवदनां शुभां सकलविघ्नविध्वंसनीम्, नमामि गणनायिकां प्रमथनाथ देहोद्भवाम्[9] ॥३३॥

स्फुटप्रकटविक्रमं सकललोकपालार्चितम्, सुरारिकुलनाशनं प्रणतपाप दुःखापहम् ।

नरो नमति मातरं स्तवति सर्वदेवस्तुताम्, अवाप्य विपुलं सुखं व्रजति मातृलोकं परम् ॥३४॥

इति श्री देवीपुराणे रुरुवधे मातृस्तवो नाम सप्ताशीतितमोऽध्यायः[10] ।

---

१. निर्णासनीम् क ख

२. प्रभूतकुसुमातसौ क ग ।

३. चन्द्रायुधाम् ख ।

४. शुभंकरीम् क ग ।

५. कवीन्द्र क ।

६. विपुल भागभवां शत्रुजाम् क ग ।

७. प्रलयवह्निपिंगेक्षणाम क ग ।

८. शवसंस्थिताम् क ।

९. गजेन्द्रवदनं शुभं सकलविघ्नविध्वसंनम्, नमामि गननायकं प्रमथनाथ देहोद्मवम क ग ।

१०. इत्याद्य देव्यवतारे रुरुवधे मातृस्तवः क ग ।



# अष्टाशीतितमोऽध्यायः।

भगवानुवाच ।

देवैः शिवागमै[1]स्त्वेताः पूजिताश्च मुमुक्षुभिः । गारुडे भूततंत्रे च कालतन्त्रे[2] च पूजिताः ॥१॥
साध्यन्ते सर्वमन्त्राणि[3] चिन्तामणि समा शिवा । पाषण्डिभिर्भविष्यैस्तु बौद्धगारुडवादिभिः ॥२॥
स्वधर्मनिरतैर्वत्स स्वेन ध्यानेन पूजिताः । येन येन हि भावेन पूजयन्ति मनीषिणः ॥३॥
तेन तेन फलं दद्युः द्विजानामन्त्यजामपि । विवाह मंगलैः कार्यैर्देवगन्धर्व किन्नरैः ॥४॥
मर्त्यलोकेऽपि पूज्यन्ते दृष्टादृष्टफलार्थिभिः । यत्किंचित्वाङ्मयं[4] लोके दृश्यादृश्यं चराचरम् ॥५॥
तत्सर्वं शक्तिभिर्ज्ञातं शक्र नास्त्यत्र संशयः । देवतानां पितृणां च मनुष्याणां च वासव ॥६॥
योन्यस्त्वेताः समाख्याताः शिवेनानन्तरूपिणा । उत्पत्तिस्थितिसंहार–बन्धमोक्षविचेष्टितम् ॥७॥
स्वर्गापवर्गनिरयं सर्वमस्मात् प्रवर्त्तते । अनन्तमादितः कृत्वा यावत्पादाक्षगोचरम्[5] ॥८॥
शक्तिभिस्तु ततः सर्वं घृतेन तु पयो यथा । तस्मात् त्वमपि देवेन्द्र कर्मयज्ञेन पूजय ॥९॥
हेमरुक्म–प्रवालोत्थ चित्रकाष्ठे तु शैलजाः । पूजिता विधिना वत्स सर्वकाम फलप्रदाः ॥१०॥
यो देवं मातरोत्पत्ति शिवशक्तिविजृम्भितम् । रुरुदैत्येन्द्र–मथनं भक्त्या संकीर्त्तयिष्यति ॥११॥
शृणुयाद्यः पठेद्वापि तस्य पुण्यफलं शृणु । सर्वबाधाविनिर्मुक्त सर्वकामसमन्वितः ॥१२॥
इहैव जायते शक्र अन्ते च परमं पदम् । श्रवणाच्च अवाप्नोति सर्वदानव्रतादिकम् ॥१३॥

इति श्री देवीपुराणे रुरुवधसमाप्ति र्नामाष्टाशीतितमोऽध्याय[6] ॥

---

१. समागमैः ग ।
२. बालतन्त्रे ग ।
३. सर्व कार्याणि क ख ।
४. यत्किंचिद्भयं क ।
५. यावत्स्यादक्षिगोचरम् क ।
६. इतिरुरुवधः समाप्तः क ग ।



# एकोननवतितमोऽध्यायः ।

शक्र उवाच ।

येनोपायेन सर्वेषां देवि सर्वफलप्रदा । तदहं श्रोतुमिच्छामि नवम्यामाश्रितं[1] फलम् ॥१॥

ब्रह्मोवाच ।

आश्विने वाथ माघे च चैत्रे वा श्रावणेऽपि वा । कृष्णादारम्य कर्त्तव्यं व्रतं शुक्लावधि हरे ॥२॥

अष्टमी चाश्विने कृष्णा एकभक्तेन कारयेत् । मंगलारूपिणीं देवीमथवा रुरुघातिनीम् ॥३॥

पूजयेन्नवभेदेन[2] गंधमाल्यनिवेदनैः । कन्यकाः भोजयेद्वत्स देवीभक्तांश्च मानवान् ॥४॥

नक्तेन नवमी कार्या अयाचन्दशमीं क्षपेत् । उपवासमेकादश्यां पुनरेवं विधिर्भवेत् ॥५॥

यावच्छुक्लाष्टमी शक्र उपवास्या विधानतः । स्नानहोमजपं पूजा कन्याभोजन्तु प्रत्यहम् ॥६॥

कर्त्तव्यं द्विजद्वन्द्वेन[3] देव्या भक्तिरतेन च । नवम्यां[4] पशुघातन्तु महिषादि अजाविकम् ॥७॥

कर्त्तव्यं भूतवेताल न च आत्मनः काम्यया । कन्याः अलंकृता[5]स्तत्र द्विजाः देव्याः परायणाः ॥८॥

नटनर्त्तकप्रेक्षाश्च रथयात्रां सजागराम् । दानं देयं यथा शक्त्या सर्वेषामपि भक्तिना ॥९॥

महाभैरवरूपाणां अस्थिमालाधराः नराः । पूजनीया विशेषेण वस्त्रशोभाधरादिषु ॥१०॥

कर्त्तव्या सर्वकामार्थ प्रापणाय सुरोत्तम । अनेन विधिना शक्र यदृच्छं लभते फलम् ॥११॥

मंगला भैरवी दुर्गा वाराही त्रिदशेश्वरी । उमा हैमवती कन्या कपाली कैटभेश्वरी ॥१२॥

काली ब्राह्मी माहेशी च कौमारी मधुसूदनी ।
वाराही वासवी चर्च्चा नामान्यन्यानि जपेन्नरः ॥१३॥

---

१. वद आत्माश्रितं फलं ख ।
२. नरमेदेन क ।
३. जिततत्त्वेन क । द्विजवृन्देण ग ।
४. नवधा क ग ।
५. असंस्कृतास्तत्र क ।

पूजयेद् भोजयेत् कन्याः शास्त्रदृष्टेन कर्मणा । वस्त्रालंकारकाञ्च्यादि कटकाः कटिसूत्रकाः ॥१४॥
दातव्या आत्मनः शक्त्या देवीभक्तैः सुखार्थिभिः । अथवा नव रात्राणि सप्तपंचत्रिरेकधा ॥१५॥
एकभक्तेन नक्तेन अयाचन् उपवासनैः । क्षपयेदाश्विने शक्र यावच्छुक्ला तु अष्टमी ॥१६॥
पूजयेन्मंगला तत्र मण्डले विधिकल्पिते । सर्वसद्भावसम्पन्ने सर्वाविधिविधायिके ॥१७॥
सर्वकामप्रदे शक्र सर्वकामानवाप्नुयात् । अर्थकामस्य अर्थं तु राज्यकामस्य राज्यदम् ॥१८॥
पुत्र आरोग्यदं वत्स महापातकनाशनम् । सर्ववर्णैश्च कर्त्तव्यं पुंस्त्रीबाल नपुंसकैः ॥१९॥
सर्वगा सर्वदा देवी यस्माच्छक्र महाफला । अनया विधिना वत्स ददते अविचारणात् ॥२०॥
सर्वेषां व्रतयोनीनां[1] सर्वव्रतमहाफलम् । नवम्याख्यं महापुण्यं तव सम्यक् प्रकाशितम् ॥२१॥
नाख्येयं[2] भक्तिहीनस्य मूर्खस्याहेतुवादिने । देयं भक्ताय शान्ताय शिवविष्णुरताय च ॥२२॥
देवीभक्तः सदाचारः कन्यापूजारतो नरः । इहैव सर्वकामानि लभते अविचारणात् ॥२३॥
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् । सङ्गरे विजयो नित्यं महानेकोऽपि जायते ॥२४॥
श्रवणात्सर्वकामानि लभते अविचारणात् ॥२५॥

इति श्री देवीपुराणे अष्टमी नवमी व्रतं नामैकोननवतितमोऽध्यायः[3] ॥

---

१. योगानां ख क ।

१. भक्तिमुक्तिहीनस्य क ।

३. अष्टमी नवमी व्रतम क । मंगला अष्टमी व्रतम् ग ।



# नवतितमोऽध्यायः ।

शक्र उवाच ।

यद्येवं सर्वदेवानां परमा मातरा विभो । तदहं श्रोतुमिच्छामि तेषाञ्च विधिपूजनम् ॥१॥
कानि पुष्पाणि दानानि व्रतानि नियमास्तथा । येन सम्पूजिता देव्यः क्षिप्रं सिद्धि[1] फलप्रदाः ॥२॥
लोकानामुपकाराय अस्माकं च विशेषतः । एतदेव यथादेशं कथय नः प्रसादतः ॥३॥
एवं पूर्वं नृपश्रेष्ठ विष्णुः शक्रेण पृष्टवान् । तत् समाज्ञाय शक्रस्य ब्रह्मणा कथितं यथा ॥४॥
तथाहं ते प्रवक्ष्यामि विद्यातत्त्वार्थपारग ।

अगस्त्य उवाच ।

पुरे वा यदि वा ग्रामे नगरे खेटकेऽपि वा ॥५॥
दृष्टादृष्टफलार्थिभिः पूजनीयास्तु मातरः । एकलिंगे नदीतीरे द्रुमशैले वनेऽपि वा । ॥६॥
पूजिताः सर्वविघ्नानां साधनाय फलप्रदाः । गृहे चत्वरे हट्टान्ते पूजिता धनपुत्रदाः ॥७॥
नगरद्वार पूर्वाद्या वृद्धिराज्य सुखार्थदाः । गंगातीरेऽथवा विन्ध्ये सर्वकामफलप्रदाः ॥८॥
वेद पर्वत श्रीशैले किष्किन्धा[1] पर्वतादिषु । मोक्षदा दिवदा वत्स निष्कामाः फलवाञ्छिताः ॥९॥
एते स्थानाः समाख्याता आशु[2] फलसमीहकाः । कालान्तरफला देव्यः सर्वाः सर्वत्रपूजिताः ॥१०॥
कालाग्निशिवपर्यन्ता येषां व्याप्तिमहात्मनाम् । ता यत्र यत्र पूज्यन्ते तत्रैव फलदायकाः ॥११॥
सर्वदेवनुता देव्यः सर्वदेवप्रसूतयः । शिवाद्या याभिर्जायन्ते कस्ताः न प्रतिपूजयेत् ॥१२॥
या सूते प्रथमं शम्भुर्ब्रह्मविष्णुविवस्वतः । आदित्यवरुणचन्द्रार्कः कस्तां न प्रतिपूजयेत् ॥१३॥
तासाञ्च शुभऋक्षाहे दारुमानीय बुद्धिमान् । मणिमौक्तिकवैडूर्य काष्ठचन्दन चन्दनाः ॥१४॥

---

१. शीघ्रफलप्रदाः ग ।
२. अर्बुदादिषु क ग ।
३. अश्वफल ग ।

मधूकपार्थविल्वाम्र[1] अशोकतिन्दुकशिंशपाः । शैलपार्थिव हेमोत्थास्तावद्धातु[2] शुभप्रदाः ॥१५॥
तद्विदैर्घटिता वत्स तद्वेदिभिः प्रतिष्ठिताः । ताश्चोत्तराननाः स्थाप्याः सर्वकामफलेप्सुभिः ॥१६॥
सर्वशैलैष्टकाष्टोत्थं गृहं वास्तुविभाजितम् । वलभी मण्डपं वत्स मठं वा स्थापने शुभम् ॥१७॥
गन्धं नैवेद्य धूपेन वलिमाल्यविभूषणैः । अधिवासन पूर्वास्तु स्थापनीया यथा क्रमम्[3] ॥१८॥
वेदध्वनि महाघोषैः स्त्रीसंगीतोपशोभितम् । कर्त्तव्यं स्थापनं तेषां बहुवादित्रनादितम् ॥१९॥
रात्रौ जागरणं तत्र देव्या पूजार्थवृद्धये[4] । आख्यानैर्मातरा शास्त्रैः रुद्रक्रीडाकरैः शुभैः ॥२०॥
दशावतारपूर्वास्तु कथा वाच्या यथाक्रमम्[5] । एवं प्रत्यूषसि सम्प्राप्ते बलिं संध्यासु दापयेत् ॥२१॥
यथा मातृगणं पूज्यं देवभैरवरूपिणम् । स्त्रीसंघाः कन्यका विप्रा पूजनीयाः स्वशक्तिना ॥२२॥
मठश्च कारयेत्तत्र देव्याः पूजार्थवृद्धये । सर्वलक्षणसंपूर्णं सर्वोपकरणान्वितम् ॥२३॥
वापीकूपं तडागं वा वाटिकावन शोभितम् । वेश्यातूर्योपसम्पन्नं ध्वजछत्र विभूषितम् ॥२४॥
घण्टादर्पणदीपाद्यं देयं द्रव्यानुरूपतः । घटिकायन्त्रयष्ट्यादि दिनसंख्यार्थसिद्धये ॥२५॥
कर्त्तव्यानेकमेकं वा यथाकालपरिच्छदे । अनेन विधिना वत्स मातराः स्थापयेन्नरः ॥२६॥

इहैव[6] पूजनीयास्तु मृतो याति परां गतिम् ।
ये तस्य दासकर्माणि[7] दास्यो वेश्यादिका गृहे ।
तेऽपि यान्ति दिवं वत्स किं पुनस्तस्य बान्धवाः ॥२७॥

इति श्री देवीपुराणे मातृप्रतिष्ठा महाभाग्यं नाम नवतितमोऽध्यायः[8] ।

---

१. मधूकपार्थविन्नाम्र क ।
२. स्तवे ऋक्ष क ।
३. तथा कार्या यथा क्रमम् ख । स्थापनीयास्तु तद्विधैः ग ।
४. कर्त्तव्यं शुभमंगलै ग ।
५. पंक्तिद्वयं खपुस्तके नास्ति ।
६. इहात्र क ग ।
७. स शेषे तस्य स्वकर्मान्ते ख ।
८. इत्याद्ये मातराप्रतिष्ठामहाभाग्यम् क ग ।



# एकनवतितमोऽध्यायः ।

अगस्त्य उवाच ।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वा स्त्रियः । पूजयेन्मातरो भक्त्या स सर्वाँल्लभतेप्सितान् ॥१॥
मृण्मयीं प्रतिमां कृत्वा विन्ध्ये वा यस्तु पूजयेत् । आत्मवित्तानुसारेण स लभेन्मौक्तिकं[1] फलम् ॥२॥
एकां वा यदि वा[2] देवी देवं वा वल्लकीकरम् । गजाननयुतं स्कन्दं सर्वकामफलप्रदम् ॥३॥
ब्राह्मी च वैष्णवीं देवीं कौमारीं शक्रधर्मजाम् । पूज्यमानो अवाप्नोति ऐहिकं फलमुत्तमम्[3] ॥४॥
वृषारूढां महादेवीं त्रिनेत्रां शूलधारिणीम् । पूज्यमानो लभेद्वत्स यद्यत्फलमीप्सितम् ॥५॥
यां पूज्य पूज्यतां यान्ति सर्वलोकस्य विद्यते । तां पूजय सदा मातृं ब्रह्मविष्णु नमस्कृताम् ॥६॥
ब्रह्मापि पूजयते यां विष्णुर्देवस्त्रिलोचनः । तां पूजय सदा देवीं सुरशत्रुनिर्वाहिणीम् ॥७॥
देव्यावतार–शास्त्राणि रुद्रविष्णुभवानि च । वाचयन् चिन्तयन् वत्स ईप्सितं लभते फलम् ॥८॥
यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्त्तयेत् । स भवेत्सर्वलोकानां पूज्यः पूजापदं व्रजेत् ॥९॥
मातरा पुरतो यस्तु वसोर्धारां प्रपातयेत् । पृथिव्यामेकराड् वत्स इह चैव भवेन्नरः ॥१०॥
छत्रं वाथ प्रपां वह्निं प्रावृड्ग्रीष्महिमागमे । कारयेन्मातृपुरतः सर्वकामानवाप्नुयात् ॥११॥
विद्यादानं प्रवक्ष्यामि येन तुष्यन्ति मातरः । लिख्यते येन विधिना दीयते तत् शृणुस्व नः ॥१२॥
सिद्धान्त मोक्षशास्त्राणि वेदान् स्वर्गादिसाधकान् । तदंगानीतिहासानि देया धर्मविवृद्धये ॥१३॥
गारुडं बालतन्त्रं च भूततन्त्राणि भैरवम् । शास्त्राणि पठनाद्दानात् मातरः फलदा नृणाम् ॥१४॥

ज्योतिषं वैद्यशास्त्राणि कला काव्यं शुभागमान्[4] ।
दानादारोग्यमाप्नोति गान्धर्वं फलते पदम् ॥१५॥

---

१. मौक्तिकं फलम् क ग ।
२. एकप्रत्यूषसि प्राप्ते वा ग
३. पद्यमिदं क पुस्तके नास्ति ।
४. सुतागमान् क ।

विद्याम्भो वर्त्तते लोको धर्माधर्म च विन्दते । तस्माद्विद्या सदा देया दृष्टादृष्टफलार्थिभिः ॥१६॥
महीदानं च गोदानं हेमवस्त्रतिला जलम् । धान्यदीपान्नदानं च महादानानि दानसु ॥१७॥
इह प्रक्षीयते दानं दीपदानं[१] नराधिप । विद्या बृद्धिमवाप्नोति दीयमानापि नित्यशः ॥१८॥
एकोच्चारेण भूदानं दत्तं भवति भूमिप । न हि तद्विद्यते भूय देहपातादनन्तरम् ॥१९॥
विद्यादानं ददद्वत्स एकधा दशधा भवेत् । शतधा कोटिधा गच्छेदिहापि विद्यापारगः ॥२०॥
राज्ञा तस्कर दायादैर्जल वह्नि सरीसृपैः । सर्वदानानि क्रियन्ते विद्या केनापि न क्रियते ॥२१॥
विद्यादानेन दानानि नहि तुल्यानि बुद्धिमान् । विद्या एव परं मन्ये यत्तत् पदमनुत्तमम्[२] ॥२२॥
शृण्वन्नुत्पद्यते भक्तिर्भक्त्या गुरुमुपासते । स च विद्यागमान् वक्ति विद्या ग्रन्थाश्रिता नृप ॥२३॥
विद्याविवेकबोधेन शुभाशुभविचारिणः । विन्दते सर्वकामाप्ति तस्माद्विद्या परागता ॥२४॥
विद्यादानात्परं दानं न भूतं न भविष्यति । येन दत्तेन चाप्नोति शिवं परमकारणम् ॥२५॥

विद्याविचारतत्त्वज्ञो राज्ञः सन्मार्गगामिनः[३] ।
भुञ्जतेऽपि हि भोगानि गच्छन्ति परमां गतिम् ॥२६॥

अन्त्यजा अपि यां प्राप्य क्रीडन्ते ग्रहराक्षसैः । सा विद्या केन मीयेत यस्याः सर्पाः न सर्पिणः ॥२७॥
यवेन कुञ्जरं हन्ति सर्षपेन तुरंगमम् । मक्षिकापदमात्रस्य विषस्य विषमा गतिः ॥२८॥
एवंविधं विषं वत्स विद्यामन्त्रप्रभावतः । जीर्यते भक्षितं पुम्भिस्तस्माद्विद्या परापरा ॥२९॥
न हि विद्या कुलं जातिं रूपं पौरुषपात्रताम् । एषा ते सर्व लोकानां पठिता उपकारिका ॥३०॥
भूतैर्ग्रहीता विध्वस्ता दष्टा वा महापन्नगैः । विद्या उत्थापयेद्वत्स अन्त्यजस्यापि संस्थिता[४] ॥३१॥
सर्वेषामेव वृद्धानां विद्या वृद्धे हि मान्यता । वयोवृद्धो हि शूद्राणां विशानां धनधान्यतः ।

क्षत्रियाणां तु वीर्येण विप्राणां शास्त्रपारगः ॥३२॥

वित्तं बन्धुर्वयश्चैव तपो विद्या यथाक्रमम् । पूजनीया हि सर्वेषां विद्या तेषां गरीयसी ॥३३॥

---

१. दीयमान क । २. अन्नमयम् क
३. तत्त्वं शारद्वि सन्मार्ग्कारिणः क ।
४. हृत्स्थिता क ।

गुरु शुश्रूषया विद्या पुष्कलेन धनेन वा। विद्यया लभते विद्या चतुर्थी नोपलभ्यते ॥३४॥

यः कृत्स्नां तु महीं दद्यान्मेरुतुल्यं तु काञ्चनम्।
स यद्यन्यायतः पृच्छेन्न तस्योपदिशेत् क्वचित्[1] ॥३५॥

एवं विधो महाभाग विद्यायामुपवर्णितः। संक्षेपान्न च विस्तारात् तस्य दानफलं शृणु ॥३६॥
श्रीताड पत्रजे संवे[2] समे पत्रसुसंचिते। विचित्र पट्टिकापार्श्वे[3] चर्मणां संपुटीकृते ॥३७॥
रक्तेन अथ कृष्णेन मृदुना वर्धितेन[4] च। दृढसूत्रसुबद्धेन एवं विध कृतेन च ॥३८॥
यस्तु द्वादशसाहस्रीं संहितामुपलेखयेत्। ददाति चाभियुक्ताय स याति परमां गतिम् ॥३९॥
पूर्वोत्तरप्लवे देशे सर्वबाधाविवर्जिते। गोमयेन शुभे लिप्ते[5] कुर्यान्मंडलकं बुधः ॥४०॥
चतुर्हस्तप्रमाणेन शुभं तु चतुरस्रकम्। तस्य मध्ये लिखेत् पद्मं सितरक्तरजादिभिः ॥४१॥
सर्वर्त्तुकशुभैः पुष्पैर्भूषयेत्सर्वतोदिशम्। वितानं दापयेन्मूर्ध्नि शुभचित्रविचित्रितम् ॥४२॥
पार्श्वतः सित वस्त्रैश्च सम्यक्शोभां प्रकल्पयेत्। कन्दुकैरूर्ध्वचन्द्रैश्च दर्पणैश्चामलै[6]स्तथा ॥४३॥
घण्टाकिंकिणी शब्दैश्च सर्वत्र उपकल्पयेत्। तस्य मध्ये लिखेद् यंत्रं नागदन्तमयं शुभम् ॥४४॥
अधः कस्मिन् विवर्धन्तु पार्श्वतो हरिदन्तिभिः। शोभितं दृढबन्धेन बद्धं सूत्रेण बुद्धिमान् ॥४५॥

तस्योर्ध्वं विन्यसेत् देव्याः[7] पुस्तकं लिखितं शुभम्।
आलेख्यमपि तत्रैव पूजयेद् विधिना ततः ॥४६॥

निरुदकैस्तथा पुष्पैः कृमिकीटविवर्जितैः। चन्दनेन सदर्भेण भस्मना चावधूनयेत् ॥४७॥
धूपं च गुग्गुलं देयं[8] तुरुष्कागुरुमिश्रितम्। दीपमालां तथा चाग्रे नैवेद्यं विविधं पुनः ॥४८॥
खाद्यं पेयान्वितं लेह्यं चोष्यं वापि निवेदयेत्। पूजयेच्छिशिपालाँस्तु लोकपालान् यथाक्रमम् ॥४९॥
कन्या स्त्रियस्तु संपूज्य मातराः कल्पयेच्च ताः। पुस्तकं देवदेवीश्च विप्राणां दक्षिणा तथा ॥५०॥
स्वशक्त्या चैव दातव्या नृपं पौरांश्च पूजयेत्। तथा सम्पूजयेद्वत्स लेखकं शास्त्रपारगम्[9] ॥५१॥

---

१. पङ्क्तिरियं क पुस्तके नास्ति।
२. श्री ताडीपत्र जैनाञ्च ख।
३. कमिका पार्श्वे क ग।
४. रगितेन च ख ग।
५. शुभेनैव क ग।
६. चामरैस्तथा क।
७. विद्या ख।
८. त्वापमानास्तथा ग।
९. धर्म मानकम् क।

छन्दोलक्षणतद्वंगं सत्कावि मधुरस्वरम[1] । प्रणष्टं स्मरते ग्रन्थं श्रेष्ठः पुस्तकलेखकः ॥५२॥
नाप्तिसन्ततविच्छिन्नैर्न शुक्लैः[2] न च कर्कशैः । नन्दि नागरकैर्वर्णैः लेखयेच्छिवपुस्तकम् ॥५३॥
प्रारम्भे पंचश्लोकानि पुनः शान्ति तु कारयेत् । रात्रौ जागरणं कुर्यात् सर्वप्रेक्षां प्रकल्पयेत् ॥५४॥
नटचारण लग्नैश्च[3] देव्याः कथन सम्भवैः । प्रत्यूषे पूजयेल्लोकाँस्ततः सर्वान् विसर्जयेत् ॥५५॥
एकान्ते सुमनक्षेण विस्रब्धेन दिने दिने । निष्पाद्यं विधिनानेन शुभर्क्षे शुभवासरे ॥५६॥
ततः पूर्वोक्तविधिना पुनः पूजां प्रकल्पयेत् । तथा विद्याविमानन्तु सप्तपंचत्रिभूमिकम् ॥५७॥
विचित्रवस्त्रशोभाढ्यं शुभलक्षणलक्षितम् । कारयेत् सर्वतोभद्रं किंकिणीखवरान्वितम् ॥५८॥
दर्पणैरर्धचन्द्रैश्च घण्टाचामर मण्डितम् । तस्मिन् धूपं समुत्क्षिप्य सुगन्धं चन्दनागुरुम् ॥५९॥
तुरुष्कं गुग्गुलं वत्स शर्करामधुमिश्रितम् । पूर्ववत्पूजयेत् सर्वान् कन्यास्त्री द्विजपौरवान् ॥६०॥

तथा तं पुस्तके वस्त्रे विन्यसेद् विधिपूजितम् ।
एवं कृत्वा तथा चिन्त्या मातरः प्रियतांमम[4] ॥६१॥

यस्यैव शंके तच्छास्त्रं पुस्तके प्रविकल्पयेत् । तथा तपस्विनः पूज्याः सर्वशास्त्रार्थपारगाः ॥६२॥
शिवव्रतधरा मुख्या विष्णुधर्मपरायणाः । महता जन संघेन रथस्थं दृढवाहनैः ॥६३॥
प्रधानै[5]र्वापि तं नेयं यस्य देवस्य अंशजम् । सामान्यं शिवतीर्थेषु मातराभवनेषु च ॥६४॥
तस्मिन् पूज्यं तथा कृत्वा देवदेवस्य शूलिनः । समर्पयेत्प्रणम्येशं मातरः प्रीयतामिति ॥६५॥
सदाध्ययनयुक्ताय विद्यादान–रताय च । विद्यासंग्रहयुक्ताय सर्वशास्त्रकृतश्रमे ॥६६॥
तेनैव वर्त्तते यस्तु तस्य तं विनिवर्त्तयेत् । जगद्धिताय वै शान्ति सन्ध्यायां वाचयेत्तथा ॥६७॥
तेन तोयेन दातारं मूर्ध्नि समभिषिंचयेत् । शिवं वदेत्ततः सर्वमुंच्चार्य जगतस्तथा ॥६८॥
एवं कृते महाशान्तिर्देशस्य नगरस्य तु । जायते नात्रा सन्देह सर्वबाधाः शमन्ति च[6] ॥६९॥
अनेन विधिना यस्तु विद्यादानं प्रयच्छति । स भवेत्सर्वलोकानां दर्शनादघनाशन ॥७०॥
मृतोऽपि गच्छते स्थानं ब्रह्मविष्णुनमस्कृतम् । सप्त पूर्वापरान्वंशान् आत्मनः सप्त एव च ॥७१॥

---

१. सहकारि मधुक्षरम् क ।
२. श्लक्ष्णैः क ॥
३. नटचारण नर्त्तैश्च क ।
४. प्रियतां. न मम क ।
५. युवा नैः ख ।
६. पंक्तिरियं क पुस्तके नास्ति ।

उद्धृता पापकलिना विष्णुलोके महीयते । यावत्तत् पत्रसंख्यानि अक्षराणि विधीयते ॥७२॥
तावत्स विष्णुलोकेषु क्रीडते विविधैः सुखैः । तदा क्षितिं समायातो देव्या भक्तिरतो भवेत् ॥७३॥
समस्त—भोगसंपन्ने विद्वान् स जायते कुले । विद्यादानप्रभावेण योगशास्त्रं ददेद्यदि[1] ॥७४॥
आत्मवित्तानुरूपेण यः प्रयच्छति मानवः । अशाठ्यात्फलमाप्नोति आढ्यतुल्यं न संशयः ॥७५॥
स्त्रिया वानेन विधिना विद्यादानफलं लभेत् । भर्त्तुरनुज्ञया दत्तं विधवा वा समुद्दिशन्[2] ॥७६॥
विद्यार्थिने सदा देयं वस्त्रमभ्यंग भोजनम् । छत्रिका उदकं दीपं यस्मात् तेन विना नहि ॥७७॥
लेखनी घटनं तीक्ष्णं मसीपादन्तु लेखनीम् । दत्त्वा तु लभते वत्स विद्यादानमनुत्तमम् ॥७८॥
पुस्तकास्तरणं दत्त्वा तत्प्रमाणं सुशोभनम् । विद्यादानमवाप्नोति सूत्रबद्धन्तु बुद्धिमान् ॥७९॥
यन्त्रकमासनं चैव दण्डासनमथापि वा । विद्यावाचनशीलाय दत्तं भवति राज्यदम् ॥८०॥
अञ्जनं नेत्रपादानां दत्तं विद्यापरायणे । भूमिगृहन्तु क्षेत्रन्तु सर्वराज्यफलप्रदम्[3] ॥८१॥
यस्य भूम्यां स्थितो नित्यं विद्यादानं प्रवर्त्तते । तस्यापि भवते स्वर्गं तत्प्रभावान्नराधिप ॥८२॥
तस्मात् सर्व प्रयत्नेन विद्या देया सदा नरैः । इहैव कीर्त्तिमाप्नोति मृतो याति परां गतिम् ॥८३॥

इति श्री देवीपुराणे विद्यादान–महाभाग्यफलं नामैकनवतितमोऽध्यायः[4]

१. सदा। क ।
२. क पुस्तके नास्ति ।
३. मूर्धवर्ज्येक क ।
४. इत्याद्ये देव्यवतारे विद्यादान महाभाग्यफलम् क ग ।



# द्विनवतितमोऽध्यायः ।

शक्र उवाच ।

त्वमेव परमो देव वेदवेदान्तपूजितः । त्वयापि कथिता देवी पूजिता शिवविष्णुना ॥१॥
सा च सर्वगता शान्ता शिवकालाग्निव्यापका । यत्र यत्र च पूज्येत तत्र तत्र फलप्रदा ॥२॥
कृतं दिवससामर्थ्य[1] त्रेतायां यज्ञ कर्मणा । द्वापरे यजनाध्ययनात् सिध्यन्ते ह्यविचारणात् ॥३॥
एवं पूर्वं त्वया नाथ सूचितं न प्रकाशितम् । कला घोरे महाप्राप्ते युगे च तमसावृते ॥४॥
विष्णोः कृष्णत्वमापन्नै कथं देवी वरप्रदा । कस्मिन् स्थाने स्थिता नित्यं द्वीपे वा पृथिवीतले ॥५॥
एतदाख्याहि मे तात प्रसीद सुरसत्तम ॥६॥

ब्रह्मोवाच ।

साधु साधु महाप्राज्ञ निगूढार्थ विवेचक । सन्देहविनिवृत्यर्थं पृष्ठकं शुभमिच्छता ॥७॥
यथैव भवता पृष्टं देवी सर्वत्रगा शिवा । यथा च नात्र संदेहस्तथैव कथयामि ते ॥८॥

या सा घोरवधार्थाय–सर्वं–देव नमस्कृता ।
विन्ध्याद्रौ संस्थिता देवी सा च पूज्या यथाविधिः ॥९॥
मन्त्रद्रव्य क्रियाध्यानान्महासिद्धिकरा नृणाम् ।
स्त्री बाल विकलान्धानां सा भवेत् सूक्ष्मसिद्धिदा[2] ॥१०॥

सर्वकामप्रदा लोके सर्वेषामपि वासव । हिमवत्यचले नन्दा देवी प्रत्यक्षसिद्धिदा ॥११॥
सा च संस्मरणात् ध्यानात् यात्रानियमकर्मणि । सिध्यते येन विधिना शिवेन कथिता पुरा ॥१२॥
देव्यायां मम गोविन्द ऋषीणां परिपृच्छताम् । तथा ते कथयिष्यामि शृणु तत्त्वेन वासव ॥१३॥

---

१. कृतादि तपसामफलं व ग ।
२. विकलांगानामभावात् क्षुद्र सिद्धिदा क ।

अगस्त्य उवाच ।

एवं पृष्टः पुरा ब्रह्म देवराजेन विद्यप[१] ।
महाभाग्यन्तु देव्यायाः नन्दाया यत्फलं पुनः ॥१४॥
तीर्थयात्राफलं पुण्यं यथा देव्या प्रपृच्छितम् ।
तत्तेऽहं संप्रवक्ष्यामि यथावदनुपूर्वशः ।
सूर्यलोकं लभेद्राजन् ब्रह्मणा कथितं यथा ॥१५॥

इति श्रीदेवीपुराणे देवीमाहात्म्यं नाम द्विनवतितमोऽध्यायः[२] ।

१. विप्रेन्द्र क ।

२. इत्याद्ये देव्यामाहात्म्यम् क ग ।



# त्रिनवतितमोऽध्यायः ।

अगस्त्य उवाच ।

कैलाशशिखरे रम्ये[1] नानाधातुविचित्रिते । अनेकाशिखराकीर्णे गणगन्धर्वसेविते ॥१॥
सहस्रकिरणोपेते तप्तकाञ्चन भूषिते । देवताऋषिभिश्चैव सदासिद्ध निषेविते ॥२॥
विमान कोटिसंच्छन्ने वितानध्वज शोभिते । नृत्यन्ति तत्र वै केचित् केचिद्वदन्ति दुन्दुभिम्[2] ॥३॥
गायन्ति गणगन्धर्वा नृत्यन्ति देवयोषितः[3] । स्तोत्रमुदीरयन्त्यन्ये अन्ये विजयमंगलैः ॥४॥
स्तुवन्ति भगवन्देवमृषयश्च महातपाः । चन्द्रादित्यग्रहाश्चैव तथा तारागणा अपि ॥५॥
ये चान्ये त्रिदशाः सिद्धा योगसिद्धा महामखैः[4] । शक्राद्या लोकपालाश्च ब्रह्मविष्णुमरूद्गणाः ॥६॥
सर्वे वसन्ति[5] तत्रैव दिव्यैश्वर्यसमन्विताः । प्रणम्य प्राञ्जलिर्देवी इदं वचनमब्रवीत् ॥७॥
कौतुहलं महादेव उत्पन्नं मे महेश्वर । मर्त्यलोके महादेव गुप्तस्थानानि कथ्यताम् ॥८॥
कथयस्व प्रसादेन लोकानां हितकाम्यया । अनिवर्त्तकानि तीर्थानि गुह्यस्थानानि मे प्रभो ॥९॥
तन्मे ब्रूहि सुरेशान यद्यहं तव वल्लभा । श्रोतुमिच्छाम्यहं प्रश्नं नन्दादेव्या महात्मना[6] ॥१०॥
कथं देव प्रविष्टोऽसौ हिमवंते महागिरौ । तीर्थयात्राफलं देव कीदृशं भवति प्रभो ॥११॥
अनिवर्त्तकानि मार्गानि कुण्डप्रवेशमेव[7] च । प्रसीदति यथा देवी सुकृतेनेह कर्मणा[8] ॥१२॥
नरके पच्यमानानां नराणां परमेश्वर ।

ईश्वर उवाच ।

शृणुदेवि प्रवक्ष्यामि यथा देवी व्यवस्थिता ॥१३॥

---

१. शिवालये तु कैलाशे क ।
२. वादन्ति वस्तुभिः क ।
३. देवयोनयः ग ।
४. महाभैरवै क ।
५. नमन्ति ग ;
६. महाविभो क ।
७. दण्डप्रवेशम् ग ।
८. जन्मना क ख ।

शृण्वन्तु देवता:सर्वा ये चान्ये च तपोधनाः । कथ्यमानां च तीर्थानां यथा देव्या प्रचोदितम् ॥१४॥
एवं श्रुत्वा तथा ब्रह्मा शिवस्य वचनं शुभम् । सर्वे चैवागतास्तत्र शिवस्य पुरतः स्थिताः ॥१५॥
अहोपूर्वाणि[1] कथ्यन्ते सर्वे कौतुहलान्विताः । आगतस्ते समीपे तु देवासुरमहोरगाः ॥१६॥
भावितात्मानश्च ते सर्वे हृष्टरोमा[2] समुद्गताः । पार्वत्यास्तु प्रशंसन्ते ययेदं पृच्छितः शिवः ॥१७॥
माता देवासुराणाञ्च वन्द्या च परमेश्वरी । पशूनाञ्च हितार्थाय मोक्षार्थञ्च तपस्विनाम् ॥१८॥
पृच्छते च ततो देवी नन्दाशास्त्रं[3] सुदुर्लभम् । कौतुहलान्विता देव्या शृण्वन्तु शिवभाविता[4] ॥१९॥
कृताञ्जलिपुटाः सर्वे सर्वे प्रणतमूर्त्तयः ॥२०॥

ईश्वर उवाच ।

हिमवत्यचले रम्ये नाना सिद्धनिषेविते । अप्सरोगणसंकीर्णे नानावृक्षसमाकुले[5] ॥२१॥
किन्नरीगणसङ्कीर्णे ऋषयश्च तपोधनाः । नित्यं सेवन्ति तत्स्थानं पर्वतं भूधरेश्वरम् ॥२२॥
तस्मिन्पुण्यानि तीर्थानि गुह्यस्थानानि यानि च ।
अनिवर्त्तकानि चत्वारि तानि शृण्वन्तु देवताः ॥२३॥
भैरवं चैव केदारं तथा रुद्रं महालयम् । नन्दादेवी चतुर्थं तु पंचमं नोपलभ्यते ॥२४॥
शिवतीर्थानि गुह्यानि कथितानि महीतले । अधुना सम्प्रवक्ष्यामि नन्दातीर्थस्य यत्फलम् ॥२५॥
यथा गंगा नदीनान्तु उत्तमत्वेन संस्थिता । तद्वद्भगवती नन्दा उत्तमत्वे व्यवस्थिता ॥२६॥
नगेन्द्राणां यथा मेरुरुत्तमो वै व्यवस्थितः । तारकाणां यथा चन्द्रः प्रभुत्वेन महातपे ।
तीर्थानाञ्च तथा नन्दा प्रभुत्वेन व्यवस्थिता ॥२७॥
ग्रहानाञ्च यथा भानुः प्रभुत्वेन व्यवस्थितः । तद्वत् क्षेत्रं महादेवी नन्दायाः परमेश्वरि ॥२८॥
खगेन्द्राणां प्रभुर्यद्वत् सुपर्णो अचलात्मजे । तद्वत् तीर्थं महादेवी नन्दायाः उत्तमं प्रिये ॥२९॥
फणीन्द्राणां यथा राजा वासुकिस्त्रिदशार्चिते । तीर्थानामुत्तमं तद्वत् नंदाख्यं सुरसुन्दरि[6] ॥३०॥

---

१. पर्वाणि क ।
२. कृष्णरोम समुद्भवाः क ग ।
३. नन्दाशब्दं क ख ।
४. शृण्वन्ति शिवभाषिताः क ।
५. विद्याधर समाकुले क ।
६. पद्यमिदं ख पुस्तके नास्ति ।

ऋषीणां च यथा वन्द्यः कश्यपो भृगुरेव च[१] । नन्दातीर्थं महादेवी वन्द्यं पुण्यं च कीर्त्तितम् ॥३१॥
योषितानां यथा भद्रे राज्ञी त्वं सुरनायकि । देवतानामहं देवि[२]नन्दातीर्थं तथा प्रिये ॥३२॥
तस्मात् किं बहुनोक्तेन वर्णितेन पुनः पुनः । मोक्षस्थानं यथा देवि अनौपम्यं सुरार्च्चिते ॥३३॥
अनौपम्यं तथा तीर्थं नन्दाख्यं परमेश्वरि । पृथिव्यान्तु स्थितो वापि नन्दादेवीं प्रकीर्त्तयेत् ॥३४॥
मुच्यते सर्वपापेभ्यो यः स्मरेद्भावितात्मनः । नन्दास्थानं नराः प्राप्य न ते प्राकृत मानुषाः[३] ॥३५॥
ये ब्रजन्ति च तत्रैव अनिवर्त्तपथे स्थिताः । अश्वमेधफलं तेषां नराणां तु पदे पदे ॥३६॥
ये मृतास्तु पथे देवी कुण्डे वा नरपुंगवाः । न तेषां विद्यते मर्त्ये पुनरागमनं प्रिये ॥३७॥
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् । सर्वदानेषु यत्प्रोक्तं तपश्चान्द्रायणादिभिः ॥३८॥
कोटि कोटि गुणं कृत्वा यत्पुण्यं सकलं[४]भवेत् । नन्दा सन्दर्शनाद्देवि भवते सुविचारणात्[५] ॥३९॥

देव्युवाच ।

अश्वमेधं महायज्ञं तपश्चान्द्रायणादिकम् । देव्याः संदर्शनेनाथ व्यर्थमेतत्तथागमाः ॥४०॥

परमेश्वर उवाच ।

न भयं नैव लोभो मे स्नेहो वा सुरवन्दिते । अज्ञत्वं वाथ दीनत्वं येनाहमनृतो[६]ध्रुवम् ॥४१॥
तपोयज्ञेषु देवानां सन्तर्पणविधिर्मतः । ते च ब्रह्मादयो भद्रे तैस्तु नन्दा प्रतिष्ठिता ॥४२॥
योऽसावनादिमध्यान्तः शिवः शक्तिमयः परः । तस्येयं परमा नन्दा सर्वकिल्बिषनाशिनी[७] ॥४३॥
तत्प्रभावेन प्राप्नोति तपो यज्ञादिकं फलम् । मंत्राणां देवशक्तीनां न विचारो वरानने ॥४४॥
कालिका[८]हास्यवाक्यानि ग्रहभूतविषापहाः । एवं कलियुगे घोरे यस्मिन् देहान्तरा[९]नराः ॥४५॥
भुञ्जन्ति[१०]दर्शनात्कन्या तस्य किं तपसादिकम् । अश्वमेधादिकं भद्रे येन त्वं विस्मयं गता ॥४६॥
अंगुष्ठोदरमात्रेण बोद्धुर्यन्मणिना फलम् । न तत्सहस्रपाषाणान् वहनं प्राप्नोति मानव[११] ॥४७॥

---

१. यथागस्त्यः काश्यपो मृगुरेवच ग ।
२. देवतानां महा देवि क ।
३. प्रकृतिमानवाः क ।
४. सफलम् क ख ।
५. ह्यविचारणात् ग ।
६. ऋतभो ध्रुवम् ख ।
७. नाशनम् क ।
८. कौलिकाहास्यवाक्यानि क ग ।
९. देहः समानवः क ।
१०. भुञ्जते दर्शनाः कन्याः क ।
११. सुन्दरि क ग ।

वेद एवं हि धर्माणां प्रवरो धर्मदर्शकः । तस्मिन् सा पूज्यते देवी मानस्तोकेति वेद सा ॥४८॥

देव्युवाच ।

लोकानां तु मनोज्ञानं उत्द्योतनं प्रति प्रभो । पूर्वपक्षान्यहं नाथ सम्यग्यात्रां निबोधय ॥४९॥

परमेश्वर उवाच ।

मासे भाद्रपदे देवि शुक्लपक्षे व्रजेत्सदा । तस्येच्छा श्रावणेऽषाढे अन्यथा न कदाचन ॥५०॥

तेषाञ्च चन्द्रनागस्तु पीडां कुर्यात् सुलोचने ।

न गच्छन्ति सुराः सिद्धाः किं पुनर्मानुषादयः ॥५१॥

विषवातहताः केचिद्धिमवातप्रपीडिताः । विमुच्यन्ते नरा देवि यान्ति देव्या प्रसादतः ॥५२॥

पापकर्म्मा नरा ये तु गणाध्यक्षो निवारयेत् । शेषान्वै चन्द्रनागस्तु नित्यं रक्षति तद्गतः ॥५३॥

कपिलः पिंगलश्चैव धूमकेतुर्महाबलः । सोमकश्चन्द्रनामश्च रक्षन्ति बलदर्पिताः ॥५४॥

नित्यं रक्षन्ति तत्तीर्थं पंचकोटि समन्विताः ॥५५॥

उमोवाच ।

किं पुरस्य तु विस्तारः का सिद्धिः[1]का च रम्यता ।

को वा विन्यासो हर्म्याणां केन वा निर्मितानि च ॥५६॥

किम्प्रमाणन्तु कन्यानां को वेषो वर्णयौवनम् । उद्यानाः कीदृशाश्चैव दीर्घिका वापि कीदृशी ॥५७॥

किं वा वदन्ति ताः कन्याः नन्दायाः पुरतः स्थिताः ।

कान्तस्य च कथं प्राप्तिस्तासां वर सुरेश्वर[2] ॥५८॥

कतरेण तपेनैव मर्त्या भुञ्जन्ति ताः स्त्रियः ।

कस्मिंस्तु पूजिता देवी क्षिप्रं प्रत्यक्षतां व्रजेत् ॥५९॥

कस्मिन् क्षेत्रे द्रुता सिद्धिर्नियमेन केन प्रभो[3] ।

लिंगानां लक्षणैश्चैव यस्मिन् सिध्यन्ति साधकाः ॥६०॥

---

१. ऋद्धि क ।

२. सुरवरेश्वर ग ।

३. लभ्यते मानुषे शिवा क ।

समयाश्च कति प्रोक्ता मन्त्रोद्धारश्च कीदृशः । कीदृशं यजनं देव्या रूपकं चैव कीदृशम् ॥
एतत्सर्वं यथान्यायं कथयस्व प्रसादतः ॥६१॥

ईश्वर उवाच ।

नन्दा देव्या पुरी रम्या भोगाढ्या सुरवन्दिता[1] । वसन्ति तत्र वै कन्या सततं मदनातुराः ॥६२॥
पादपद्मं सदा पूज्यं नन्दाया वरवर्णिनि । शोचयन्ति सदात्मानं नन्दाया अग्रतः स्थिताः ॥६३॥
अश्रुपातजलौघेन लोष्णेन तु वरांगनाः । नन्दाया पादपद्मौ तु अजस्रं क्षालयन्ति ताः ॥६४॥

कन्यका[2] ऊचुः ।

किं कार्यं जलक्रीडायां दोलाक्रीडनकेन किम् । उद्यानक्रीडनैर्वापि द्यूतक्रीडनकेन किम् ॥६५॥
पुस्तकवाचनेनापि काव्याख्यायिकक्रीडया । वीणा[4]शास्त्रेण किं कार्यं चित्रपत्रपरिच्छदैः ॥६६॥
उन्मत्तचेष्टितं सर्वं पतिहीनं महातपे । मृदंगपटहै शब्दैर्वल्लकीपनवादिभिः ॥६७॥
नृत्यवादित्रकं सर्वं पतिहीनं न राजते । वेणु वीणानिनादेन विपश्चिद्ध्वनिनादितैः ॥६८॥
किम्वा लम्बूकवीणायां कार्यं पिञ्जलकेन किम् । व्याधितस्य यथाक्रन्दस्तद्वत् तत्रोर्ध्वनिः[5] स्मृता॥६९॥
अरण्यरुदितं सर्वं विधवानां सुरेश्वरि । किं वा रूपेण कर्त्तव्यं किं कार्यं यौवनेन च ॥७०॥
मकरीकरपत्रैश्च पयोधरकपोलयोः[6] । ललाटैस्तिलकैर्वापि विन्यस्तैः किं प्रयोजनम् ॥७१॥

को वा आगत्य मर्त्योऽस्मिन् यः परिष्वज्य मर्द्दयेत्[7] ।
वस्त्रैर्विलेपनैर्दिव्यैः स्रग्दाम भ्रमराकुलैः ॥७२॥

मुकुटैश्चुटकैर्वापि[8] किम्वा ललाटपट्टिकैः[9] । यद्वद्भित्तिषु चित्राणां मण्डनं तद्वन्निष्फलम्[10] ॥७३॥
दयां कुरु सुराध्यक्षे नान्यस्त्राता सुरेश्वरि । एवं याचन्ति देवेशि भर्त्तारं नन्दमन्दिरे ॥७४॥
उद्यानदीर्घिकैर्वापि प्रवालाङ्कुर शोभितैः । क्वचित्स्फटिकसोपानैः क्वचिन्मरकत सञ्चितैः ॥७५॥

---

१. सुरांजिता क ।
२. कन्या ऊचुः क ।
३. भूत क ।
४. त्रिनाशास्त्रेन क ।
५. रन्ध्रध्वनिः क ।
६. कपोलजः क ।
७. क पुस्तके नास्ति ।
८. चूतकैः ग ।
९. बाणनाट्ट पट्टकैः क ।
१०. मंडलं तत्त्वनिष्फलम् ग ।

क्वचिद्धाटकसम्भूतैः इन्द्रनीलमयैः क्वचित् । रजोवर्त्तमयैर्दिव्यैः क्वचिद्वज्रविनिर्मितैः[1] ॥७६॥
तपनीयोद्भवैःपद्मैः क्वचिद्विद्रुमसन्निभैः । सितासितैस्तथा रक्तैः श्रीमुखैर्मुखरैस्तथा ॥७७॥
हंससारससंगीतैः जीवं जीवकनादितैः । नानापक्षिगणैः रम्यैः शोभन्ते दीर्घिकाः सदा ॥७८॥
कान्तहीना महादेवि वने च पुष्करिणीव । अशोक—बकुलैर्नागैः शुभैस्तिलकपञ्चकैः[2] ॥७९॥
पुन्नाग–नाग–बकुलैः पनसैर्ब्रह्मयष्टिकैः[3] । जम्बीरैबीजपूरैश्च पुष्कलैरुपशोभितम् ॥८०॥
एवमादिफलैः रम्यै सुस्वादैरमृतोपमैः । लवलीफल–कंकोलैः[4] लवंग–लकुचैस्तथा ॥८१॥
तमाल–पत्र–कर्पूरैः जातीफल-सदाडिमैः ॥८२॥
सुरपादप–संकीर्णं सरलैर्देवदारुभिः । नानावल्लीसमाकीर्णं लतागुल्म–महोषधैः ॥८३॥
नानापुष्पफलोपेतं नित्यं मुनिमनापहम् । अम्बिके नाथहीनन्तु पैत्र्यं वावरपादपम्[5] ॥८४॥
तपनीयोद्भवैर्हर्म्यैः स्तम्भैर्विद्रुमसंप्रभैः । क्वचित्स्फाटिककुण्डैश्च राजपट्टमयैः दृढैः ॥८५॥
पुष्परागमयैश्चान्यैः क्वचिद्वज्र सुसञ्चितैः । इन्द्रनीलमयैश्चान्यैः द्वारैर्मरवलयोजितैः ॥८६॥
कपाटैः पद्मरागोत्थैर्महानीलमयैः क्वचित् । द्वारैश्चैवोपद्वारैश्च राजासनसुरञ्जितैः[6] ॥८७॥
वातायनोर्ध्वमार्गैश्च तथा सोपानपंक्तिभिः । वाद्यहर्म्यैर्मनोरम्यैं नित्यं गन्धर्वसङ्कुलैः ॥८८॥
घण्टाचामरविन्यस्तैः किंकिणी–जाल–मण्डितै : । विन्यस्त वस्त्रसंघातैरातपत्रवितानकैः ॥८९॥
मौक्तिकदाममालाभिः क्वचित् स्रग्दाममण्डितैः । मन्दिरैर्मन्दराकारैर्मयसद्भाव कल्पितैः ॥९०॥
द्विसप्तभूमिकोपेतैः सुरम्यैः सौज्ज्वलैर्ग्रहैः[7] । हेमप्राकाररचिता प्रतोली गजमण्डिता ॥९१॥
ध्वजमालाकुला दिव्याः सिंहद्वारैस्तु शोभिता । विटंकोत्पल गोतुंगाः स्वर्गाद्रम्यतरा पुरी ॥९२॥
नाथहीना महादेवी रौद्रा यमपुरीरिव । वरं मर्त्या च वनिता पतिमाश्रित्य संस्थिता ॥९३॥
पतिहीना न शोभन्ते अम्बिके कल्पजीविता । अयुतं योजनानान्तु नन्दादेव्याः पुरी प्रिये[8] ॥९४॥
कोटि कोटिभिः स्त्रीणान्तु समन्तात् पूरिता पुरी । चित्राम्बरधराः सर्वाश्चित्रगन्धानुलेपनाः ॥९५॥

---

१. ख पुस्तके नास्ति ।
२. नादितैः क ।
३. जेन्द्राक्षजम्बुरैः ग ।
४. नवनीफेण करैः काले क ।
५. बधिर पादपम् क । धावत्पादम् ख ।
६. पंक्तित्रयं ख पुस्तके नास्ति ।
७. किं कार्यं प्रेतवत्गृहैं ख ।
८. पंक्तित्रयं ग पुस्तके नास्ति ।

चित्रमाल्यधराः नित्यं चित्राभरणभूषिताः । चित्रवर्णधराः सर्वाः विचित्रगतिगामिनि ॥९६॥

नानावाद्यरता नित्यं नानागन्धर्वतत्पराः । नानाक्रीडाप्रसक्तास्तु[1] नानालेख्यरताः सदा ॥९७॥

नाना शास्त्रार्थ संपन्ना नानालेख्यरताः स्त्रियः । अक्षीणयौवनाः सर्वा जरामृत्युविवर्जिताः ॥९८॥

नन्दा पुरवरे कन्याः मध्यमाधमवर्जिता ॥९९॥

उमोवाच ।

रूपातिशयसम्पना नानागुणसमन्विताः । किमर्थं दुखिताः जाता कान्तसौख्यविवर्जिताः ॥१००॥

ईश्वर उवाच ।

दमयन्ती यथा सीता रूपातिशयपारगा । दुःखितास्तेन संजाता कान्तसौख्य–विवर्जिताः ॥१०१॥

अहल्या बंधकी जाता गोतमस्य[2]तु योषिता[3] ।

रूपस्य तु प्रभावेण दासी जाता तिलोत्तमा ॥१०२॥

तस्माद्रूपञ्च नेच्छन्ति लक्षणज्ञास्तपोधनाः । अतिरूपेण स्वल्पायुः पुरुषो योषितोऽपि वा ॥१०३॥

अथवा सौम्यहीनस्तु जायते तु महातपे । नन्दापुरवरे देवि कन्यकानान्तु चेष्टितम् ॥१०४॥

उदाहृतं मया भद्रे यथा पृष्ठं त्वया प्रिये ।

पूजास्थानानि वक्ष्यामि यस्मिन् सान्निध्यतां व्रजेत् ॥१०५॥

लिंगस्थां पूजयेद्देवीं स्थण्डिलस्थां तथैव च । पुस्तकस्थां महादेवीं पादुके प्रतिमासु च ॥१०६॥

चित्रे च त्रिशिखे खड्गे जलस्थां वापि पूजयेत् । अग्निस्थां पूजयेत्प्राज्ञो हृदये वा सुशोभने ॥१०७॥

एभिः स्थानैर्महादेवी पूजिता वरदा भवेत् । मम पार्श्वे श्रुतं यैस्तु ज्ञातं देवि तपोधनैः ॥१०८॥

तेऽपि वन्द्या अहं यद्वच्छिवधर्मपरायणाः । तल्लिंगमाश्रयेन्मन्त्री शुक्राद्यैर्यत्प्रतिष्ठितम् ॥१०९॥

कचाद्यैर्यत् कृतं[4]लिंगं वर्जनीयन्तु साधकैः । कल्पसौख्यप्रदं प्रोक्तं वेदमन्त्रैः प्रतिष्ठितम् ॥११०॥

साधिकारं तु यल्लिंगं[5]मुक्तभोगं तथैव च । ज्ञातव्यं साधकेन्द्रेण सिद्धिदं चाप्यसिद्धिदम् ॥१११॥

---

१. प्रसक्तास्तु क ग ।
२. कपिलस्य ग ।
३. क पुस्तके नास्ति ।
४. घृतं क ग ।
५. साधिका वर्गायल्लिंग ग ।

देव्युवाच ।

साधिकारं तु यल्लिगं वेदमन्त्रैः प्रतिष्ठितम्[1] ।

निर्वत्तितविकारञ्च उक्तं शंभुं स्वयंभुवम् ॥११२॥

कुर्वन्ति भक्ति वात्सल्यं लोकानां वासनात्मकम् । दुर्विज्ञेयमिदं ज्ञानं योगिनामप्यगोचरम् ।

मर्त्यैर्जडधियैर्नाथ कथं विज्ञायते प्रभो ॥११३॥

ईश्वर उवाच ।

साधु साधु महादेवि रहस्यमिदमुत्तमम् । यत्त्वया चोदितं भद्रे तथैव च न चान्यथा ॥११४॥

दुर्विज्ञेयं सुरैश्चापि किं पुनर्मर्त्य जन्तुभिः[2] । आधिष्टो[3]साधकं ज्ञेयं हृदयानन्दकारकम् ॥११५॥

इन्द्रियाणां चौत्सुक्यं ददाति लिंगदर्शने । सेव्यमानं ततो लिंगं नित्यानन्दप्रदायकम्[4] ॥११६॥

सुस्वप्नो पश्यते नित्यं विमानस्थां वरांगनाम् । भैरवं पश्यते नित्यं क्रीडन्तं मातृमण्डले ॥११७॥

उमामहेश्वरं वापि स्वप्ने पश्यति साधकः ।

अनिर्वत्तिताधिकारञ्च लिंगं च त्रिभुवनेश्वरम्[5] ॥११८॥

आक्रामन्ति महाविघ्नाः सदैत्याः राक्षसादयः ।

शून्यागारं यथा देवि आक्रामन्ति नराः प्रिये ॥११९॥

अनर्चितन्तु भुञ्जन्ति तथा लिंगन्तु कश्मलाः । प्रेतं तथा सुराध्यक्षे आक्रामन्ति पिशाचकाः ।

शून्यं च वांर्गलिंगन्तु आश्रयन्ति तथा प्रिये ॥१२०॥

श्रीदेव्युवाच ।

पर्याप्तञ्च श्रुतेनैव तव वाक्येन शंकर । विशेषोत्पादितो मह्यं सुतरां गहनं कृतम् ॥१२१॥

सूक्ष्मरूपा यदा विघ्नाः राक्षसा भूतनायकाः ।

ईदृशीं तनुमास्थाय लिंगं भुञ्जन्ति वै सदा ॥१२२॥

तदा तेऽपि मनोरम्यं स्थानं कुर्वन्ति शंकर । साधकस्य सदानन्दं तेऽपि कुर्वन्ति नित्यशः ॥१२३॥

---

१. मंत्रहीनं प्रतिष्ठितम् क ग ।

२. मर्त्यजन्मभि क ग ।

३. आधिष्य ग । अविष्ट क ।

४. नित्यमानन्ददायकम् क ग ।

५. त्रिभुवनेश्वरि क ग ।

स्वप्नांश्च शोभनान् देवी साधकस्य ददन्ति च ।

पूजार्थिनो महावीर्याः प्रीतिं कुर्वन्ति साधके ॥१२४॥

प्रभावयन्ति[1] दुष्टात्मा। वदन्ति वरदा भव । तस्य वर्षशतेनापि कुतः सिद्धिः प्रजायते ॥१२५॥

ईश्वर उवाच ।

महाचोद्यं महादेवि अनौपम्यं सुरार्च्चिते । ब्रह्माद्यैरपि देवेशै[2]रीदृशं न प्रचोदितम् ॥१२६॥

यथावत्कथयिष्यामि मा विषादं कुरू प्रिये ।

अघोरास्त्रं न्यसेत् तस्मिन् स्वादकञ्च महाबलम् ॥१२७॥

दंष्ट्रैः करकरायन्तु ज्वलन्तं विदिशैर्दिशैः । पक्षमेकं यथा देवि यथास्थानं सुखावहम् ॥१२८॥

अर्च्यमानं तु तल्लिगं स्वप्नं ददति[3]पूर्ववत् । साधिकारं[4]तु तल्लिगमाशुसिद्धिप्रदायकम् ॥१२९॥

अजाविकखरोष्ट्रैश्च आरूढां पश्यते तनुम् । उद्वेगः कलहो नित्यं सखापानान्तु[5]जायते ॥१३०॥

कृष्णाम्बरधरां नारीं रात्रौ पश्यति साधकः ।

तस्मात् किम्बहुनोक्तेन तल्लिगं राक्षसालयम् ॥१३१॥

वर्जनीयं प्रयत्नेन मृत्युरोगभयावहम् । उपायं सम्प्रवक्ष्यामि मन्त्रहीने प्रतिष्ठिते ॥१३२॥

स्वयन्तु पठ्यते लोके न च तथ्येन सुन्दरि । उषरे तु यथाधान्यं स्थापितं[6]निष्फलं भवेत् ॥१३३॥

लिङ्गे मन्त्रविहीने तु पूजनं[7]निष्फलं भवेत् । उपायं सम्प्रवक्ष्यामि तस्यापि मृदुभाषिणि ॥१३४॥

प्रसन्नां धारयेत्प्राज्ञ[8]आवेशं[9]वाथ पण्डितः ।

स्वयम्भुः कल्पितञ्चापि कथितं सिद्धिबलाबलम् ॥१३५॥

पवर्गाच्चतुर्थे वर्गे विपरीतसुलोचने । तस्यापि प्रथमे वर्गे आदिबीजं तृतीयकम् ॥१३६॥

प्रसन्ना च सदा देवि ईष्टानिष्टप्रसूचनी । किं वहुनोक्तेन स्वयं संकल्पिते प्रिये ॥१३७॥

---

१. प्रतारयन्ति ग, प्रत्यापयन्ति क .
२. देवेशि ग ।
३. वदन्ति क ग ।
४. सविकारं ख ।
५. सखापालन्तु ख, सखापानन्तु क ।
६. रोपितम् क ग ।
७. यजनं ग ।
८. कारयेत् क ग ।
९. प्रवेशं क ग ।

आश्रयस्तत्र कुर्वीत आशुसिद्धिप्रदायिके। दुष्ट[1] सत्त्वसमाकीर्णे जने भक्तिविवर्जिते ॥१३८॥
न कुर्यादाश्रयं मन्त्री दिङ्मोहो यत्र जायते। न कुर्याद्विदिशे तीर्थं स्नानपानं शिवात्मनि[2] ॥१३९॥
वापीकूपतडागं वा प्रासादं वा निकेतनम्। न कुर्यात् तृप्तिकामस्तु अनलानिले नैर्ऋते ॥१४०॥
आग्नेय्यां मनसस्ताप्ये नैऋते क्रूरकर्मकृत्। अग्निदाहं सदा कुर्यात् अमानुषचतुष्पदाम् ॥१४१॥
वायव्यां चलचित्तस्तु प्रीयमाणे जले प्रिये। स्थानस्य पावके भागे वापीकूप तडागकम्[3] ॥१४२॥

नैर्ऋते पीयमानस्तु आत्मा न दुःखितो भवेत्।
कन्यापि तज्जलं पीत्वा पतिं गृह्णाति कामतः ॥१४३॥
प्रासादस्योत्तरे देवि वसन्ति नैव सिद्धिदाः।
विदिशासु च सर्वासु छायाक्रान्तापि नो शुभास् ॥१४४॥
दक्षिणोन्नतो या क्षोणी वारुणी नैर्ऋतोन्नताः।
शुभा च सिद्धिदा नित्यं साधकस्य जनस्य वा ॥१४५॥

द्रव्याँश्चैव प्रवक्ष्यामि यथा तैः पूज्यते प्रिये। नन्दा भगवती देवी सिद्धिदा साधकस्य तु ॥१४६॥
मणिरत्नमया कार्या हेमरूप्य मयापिवा। चन्दनेनापि कर्त्तव्या पादुके प्रतिमापि वा ॥१४७॥
श्रीपर्णे श्रीद्रुमे चापि देवदारुमयी परा। षडंगुला च सा कार्या पादुके पूजयेत्सदा ॥१४८॥
पटस्य लक्षणं वक्ष्ये यथा सिध्यन्ति साधकाः। ग्रन्थिकेशविहीने तु अजीर्णे समतन्तुके ॥१४९॥
अस्फाटिते अच्छिद्रे तु स्थलेनैव समालिखेत्। मंगलारुपिणी कार्या जयाद्यैः परिवारिता ॥१५०॥

वीणाहस्ता[4]प्रसक्ता तु नानालंकारशोभिता।
जीर्णे तु भवते व्याधिः स्फोटिते मरणं भवेत् ॥१५१॥
केशैः सुशोकदं विद्यात् ग्रन्थिभिः स्खलनं भवेत्।
छिद्रेण उत्थितो वापि साधकस्य बलाबले ॥१५२॥
वृद्धं च व्याधिदं व्यांगं दीर्घं स्थूलं कृशं तथा।
वृद्धेन भवते वृद्धो व्याधिते व्याधितो भवेत् ॥१५३॥

---

१. इष्ट ख।
२. शिराम्बुनि क ग
३. पद्यमिदं ख पुस्तके नास्ति।
४. पंक्तित्रयंच क ख पुस्तके नास्ति।

कुरूपेण कुरूपं तु मूर्खेन तु न पूज्यते । लेखकस्य तु यद्रूपं चित्रे भवति तादृशम् ॥१५४॥
खड्गस्य लक्षणं वक्ष्ये त्रिशिखस्य च सुन्दरि । नानाशस्त्रोद्भवं कार्यं मृदुलौहमयं पिवा ॥१५५॥
स्फुटितं[1] खण्डितं ह्रस्वं सव्रणं सन्धितं तथा । मृदुलौहे अपूज्यस्तु सन्धिते मरणं भवेत् ॥१५६॥
सव्रणेऽपि हि हृद्रोगे[2] रेखया पातकी भवेत् । भार्या माता तथा पुत्रा म्रियन्ते खण्डितेन तु ॥१५७॥
ह्रस्वेन लाघवं लोके दीर्घेणापि ह्यसिद्धिदम् । अन्यशस्त्रोद्भवेनापि भवते मरणं ध्रुवम ॥१५८॥
पंचाशदंगुलं खड्गं त्रिशिखं च सुरेश्वरि । ईदृशं कारयेत्प्राज्ञ आशुसिद्धिफलप्रदम् ॥१५९॥
कृत्वा तु पूर्ववत्त्यागं शास्त्रदृष्टेन कर्मणा । आलभेत्सर्वद्रव्याणि खड्गाद्यान्[3] सप्तपंचधा ॥१६०॥
अथ सर्वैर्य[4] जेद्देवीं नन्दां त्रिभुवनेश्वरीम् । शाकयावकपिण्याक क्षीराशी भिक्षादोऽपिवा ॥१६१॥
कन्दमूलफलाशी वा जपं कुर्याद्विचक्षणः । अन्तरितोपवासेन अथ नक्तेन वर्ज्जयेत् ॥१६२॥
त्रिरात्रेण तु वर्त्तेत अथ चान्द्रायणादिभिः । होमयेल्लक्षमेकन्तु आज्यमिश्रन्तु गुग्गुलम् ॥१६३॥
अथवा श्रीफलैर्वापि होमं कुर्याद्विचक्षणः । त्रिलक्षेण लभेत् खड्गं त्रिशूलं पाञ्चलक्षिकम् ॥१६४॥
खड्गेन भवते राजा मध्ये खेचर चारिणाम्[5] । त्रिशूलेन सुरेशानो भवते नात्र संशयः ॥१६५॥
पूर्वमेव त्रयो लक्षान् जपं कृत्वा समारभेत् । अन्यथा तु महादेवि होमं नैव तु कारयेत् ॥१६६॥
समया सम्प्रवक्ष्यामि यैस्तुष्टिदं फलं लभेत् । शैवान पाशुपतान्वापि महाव्रतधरां पिवा ॥१६७॥

कुमारिकाश्च तदुक्तान् भोजयेत् पूजयेत् सदा ।
नाद्यात् स्त्री नायकान् भक्तान् न नारीं ताडयेत् क्वचित् ॥१६८॥

प्रताडयेन्न चाक्रोशं विवस्त्रं नैव कारयेत् । प्रसुप्तां नैव पश्येत ताड्यमानां निवारयेत् ॥१६९॥
मूत्रं पुरीषं कुर्वन्तीं न पश्येन्न जुगुप्सयेत् । नैव तां भूषयेन्मन्त्री यदीच्छेच्छाश्वतं पदम् ॥१७०॥
मज्जन्ति योषितो यत्र शौचं कुर्वन्ति यत्र वा । उद्वहन्ति जलं यत्र तत्तीर्थं पूजयेत् सदा ॥१७१॥
मृद्भस्मदण्डकाष्ठानि तस्मिन् तीर्थे निवेशयेत् । सुखपादावाचरन्तु तत्तीर्थं कारयेद्द बुधः ॥१७२॥

---

१. स्फाटितम् क । २. कृद्रोगे क ।
३. खड्गाद्या क । ४. अत्रारभ्य श्लोकानां शतंत्रयं ग पुस्तके नास्ति ।
५. अत्रारभ्य षष्टनवति अध्यायपर्यन्तं कपुस्तके ऽपि नास्ति ।

अनेन तुष्यते देवी नन्दा चानन्दचारिणी । वस्त्रं पत्रं तथा भक्ष्यं फलं पुष्पं विलेपनम् ॥१७३॥
नानालङ्करणं देवि यत्किंचिज्जलदायिकम् । नन्दामुद्दिश्य दातव्यं तुष्यते तेन सा प्रिये ॥१७४॥
अतः परं प्रवक्ष्यामि सिद्धिस्थानानि यानि तु । यस्मिन्नाराधिता देवी क्षिप्रं भवति सिद्धिदा ।१७५।
मन्दारं शतशृंगञ्च त्रिकूटं पर्वतं तथा । विन्ध्ये गंगासरिद् यत्र रेवती यमुनापि वा ॥१७६॥
पयोष्णी अश्वरथ्ये तु अथवा कुण्डलेश्वरे । शंकरेश्वर रामेशे अथवा अमरेश्वरे ॥१७७॥
सरस्वतीतटे पुण्ये सुगन्धायतनेऽपि वा । स्थानेष्वेषु जपं कुर्यान्नन्दा तदगतमानसः ॥१७८॥
वेत्रवत्यास्तटे रम्ये हरिश्चन्द्रे तथा प्रिये । भैरवं शूलभेदञ्च चण्डीशं त्रिपुरान्तकम् ॥१७९॥

अष्टचक्रञ्च क्रौञ्चेशं कपालाक्षाग्रनामकम् ।
अजाविकखरोष्टाख्यं स्थानान्यन्यानि वर्जयेत् ॥१८०॥

ब्रह्मस्यापि भवेच्छिद्रमेभिः स्थानैर्महातपैः । ऊर्ध्वगः कलहो नित्यं व्रतभंगं विनाशकृत् ॥१८१॥
शुभाभिधानकैः स्थानैस्तत्र साधनमारभेत् । चतुर्थी चाष्टमीं नैव नवमी वा चतुर्दशी ॥१८२॥
शुक्लपक्षे तु कर्त्तव्यं देव्या यजनमुत्तमम् । ततो नन्दीश्वरो गच्छेदहोरात्रन्तु कारयेत् ॥१८३॥
स्नात्वा गंगानदी तीरे कृत्वा च उदकक्रियाम् । नन्दादेवीं नमस्कृत्य सर्वपापैः प्रमुच्यते ॥१८४॥
चूभिकामगमे स्नायान्महापातकनाशने । पिण्डगंगा कुशंगंगा तत्र स्नात्वा तु मानवः ॥१८५॥

देवानां तर्पनं कुर्यात् पिण्डं पितृषु दापयेत् ।
घृतेन मधुना वापि सक्तून् गुडविमिश्रितान् ॥१८६॥
तिलोदकं ततो दत्त्वा कुशोदक समन्वितम् ॥१८७॥
ओम् पितृभ्यः स्वाहा । ओं पितामहेभ्यः स्वाहा ।
ओं प्रपितामहेभ्यः स्वाहा । ओं मातामहेभ्यः स्वाहा ।
ओं उमामहेश्वर वरेभ्यः स्वाहा ॥१८८॥

पिण्डं दत्त्वा हेममन्त्रै प्रणिपत्य क्षमापयेत् । एवं देवि विधिं कृत्वा कुलानां तारयेच्छतम् ॥१८९॥
नन्दागंगां पुनः स्नात्वा मुच्यते सर्वकिल्बिषैः । ततो वैतरणीं गत्वा स्नानं तत्रैव दापयेत् ॥१९०॥
देवानामुदकं दत्त्वा पिण्डं तत्रैव दापयेत् । महादेवं नमस्कृत्वा स गच्छेदुत्तरां दिशम् ॥१९१॥
महागणपतिं दृष्ट्वा पूजां कृत्वा विधानवित् । गच्छेदायतनं दिव्यं देव्या भवनमुत्तमम् ॥१९२॥

पूजां कृत्वा विधानज्ञो यावत् प्रगतविग्रहः । तावत् तं गगने देवी विमानस्था सवासवा ॥१९३॥
अभिनन्दते तं धन्यं नरेन्द्र पुण्यभाजनम् । नन्दादेव्याश्चरणाब्जं येन दृष्टं सुदुर्लभम् ॥१९४॥
सर्वपापविनिर्मुक्तः शाश्वतं भुवनोत्तमम् । अनेनैव तु देहेन देव्याः पुत्रन्तु जायते ॥१९५॥
कार्त्तिकेयसमो भूत्वा महावीर्यपराक्रमः । तिष्ठते सुचिरं कालं मत्प्रसादेन सुव्रतः ॥१९६॥

तदन्ते व्रजते मोक्षं भुक्त्वा भोगान् यथेप्सितान् ।
देव्या दक्षिणमुखो भूत्वा मूलमंत्रं जपेद् बुधः ॥१९७॥

दर्शनं जायते तस्य साधकस्य न संशयः । शुक्लाम्बरधरां नारीं रात्रौ पश्यति साधकः ॥१९८॥

तां दृष्ट्वा जायते सिद्धिरणिमादिगुणाष्टकम् ।
देव्याः प्रदक्षिणां कृत्वा कुण्डस्य च विशेषतः ॥१९९॥

ध्यात्वा देवीं ततः कुण्डे प्रविशेन्मत्स्यवज्जले । पौरुषत्वं जले तत्र त्रासं नैव तु कारयेत् ॥२००॥
पश्यते क्षणमात्रेण स्त्रीमुखं द्वारमुत्तमम् । नानारत्नमयं दिव्यं हेमप्राकार तोरणम् ॥

मण्डपे तिष्ठते देवी द्वारस्याग्रे सुशोभने ॥२०१॥

पूर्णकुम्भाश्च सौवर्णाश्च जलपल्लव मण्डिताः । निर्मिता विश्वकर्मेण सर्वरत्नमयाः शुभाः ॥२०२॥
मणिहेममयैः स्तम्भैर्विमानैर्ध्वज शोभितैः । मौक्तिकदाम मालाभि र्मणिमालाभिर्मालितम् ॥२०३॥
घण्टाचामर शोभाढ्यमातपत्रै विभूषितम् । सौवर्णा मुरजास्तत्र तिष्ठन्ते मेघनिस्वनाः ॥२०४॥
इन्द्रनीलपरिच्छन्नं विचित्रमणि चर्चितम् । शालभञ्जिक पुष्पैश्च रत्नपंकज शोभितम् ॥२०५॥
परिजातक मालाभिः समन्तात् परिवारितम् । नन्दा भगवती देवी प्रतिमारूप धारिणी ॥२०६॥
तिष्ठते मण्डपद्वारे सहस्रभुजभूषिता । सर्वायुधधरा सौम्या पुष्पमाला विभूषिता ॥२०७॥
दिव्यगंधानुलिप्तांगी कुंकुमारुणविग्रहा । कुण्डलैः कटकैयूरैर्मुकुटादिविभूषिता ॥२०८॥
तां दृष्ट्वा तु महादेवी प्रतिमारुपधारिणीम् । तस्या प्रदक्षिणां कृत्वा प्रणिपत्य शिवेन तु ॥२०९॥
तस्याग्रे तिष्ठते चान्या जया च प्रतिहारिका । दृष्ट्वा तु साधकं वीरं इष्टस्तुष्टो प्रभाषते ॥२१०॥
स्वागतं ते महावीर पुण्यभाजो महातपाः । तिष्ठन्तु साधका अत्र यावत्प्रत्यागममहम् ॥२११॥
पृच्छामि भगवतीं देवी तुभ्यञ्चैव प्रवेशनम् । एवन्तु वदते देवी जया द्वारस्य पालिका ॥२१२॥
गता शीघ्रन्तु देव्यायाः समीपं वरवर्णिनी । जानुभ्यां धरणीं गत्वा जया वदति हर्षिता ॥२१३॥

जयोवाच ।

आगतो मर्त्यो लोकेऽस्मिन् द्वारे तिष्ठति साधकः । क्रियते साम्प्रतं किन्तु आदेशं वद अम्बिके ।

विहस्य भगवती नन्दा इदं वचनमब्रवीत् ॥२१४॥

देव्युवाच ।

यथा ते पादपद्मन्तु मदीयं हृदये कृतम् । ममापि च तथा भद्रे साधका हृदये स्थिताः ॥२१५॥

मा विधारय तान् द्वारे त्वरितन्तु प्रवेशय । इष्टातुष्टमना देवि जया त्वरितमागता ॥

आगत्य साधकस्य तु समीपस्था प्रभाषते ॥२१६॥

जयोवाच ।

भो भो वीर महासत्त्व तुभ्यं देवी वरप्रदा । ततस्तु विदितं वीर अप्सरैर्भक्तवत्सलैः ॥२१७॥

ईष्टातुष्टमनाः सर्वाः निर्गताश्च वरांगनाः । चामरैः कनकदण्डैश्च छत्रैर्मणिविभूषितैः ॥२१८॥

अर्घ्यहस्तास्तथा चान्याः पुष्पहस्तास्तथा पराः ।

आगच्छन्ति ततः कन्या दिव्यालंकारभूषिताः ॥२१९॥

कुंकुमागुरुगन्धैश्च लिप्तांगाः सुमनोहराः । तिलकैरर्धचन्द्रैश्च हेमरत्नविभूषिताः ॥२२०॥

नानालंकारसम्पन्नाः सर्वाः पीनपयोधराः । पद्मांकवपुषः सर्वाः प्रियंगु चम्पकादयः ॥२२१॥

नीलोत्पलदलश्यामा अन्या विद्युत्समप्रभाः । कामरूपास्तथा चान्या गजेन्द्र गतिविक्रमाः ॥२२२॥

पूर्णचन्द्राननाः सर्वाः सर्वास्तामृतसम्भवाः ।

अर्घ्यं पाद्यं ततो दत्त्वा भाष्योत्फुल्ललोचनाः ।

स्वागतं ते महावीर एहि गच्छाम साधक ॥२२३॥

एवमुक्त्वा ततः कन्या प्रविशन्ति पुरोत्तमम् । हेमप्राकारदीप्तं तं मणितोरणनुपुरम् ॥२२४॥

दिव्यगन्धर्वगानाढ्यं दिव्यवाद्यसमाकुलम् । इन्द्रनीलपरिच्छन्नं बालार्कायुतसंप्रभम् ॥२२५॥

ध्वजमालाकुलं सर्वं मयूरच्छत्रभूषितम् । पद्मरागमयैः स्तम्भैः क्वचित् स्फाटिकमयैः शुभैः ॥२२६॥

विद्रुमाढ्यैस्तथा चान्यैः नानारत्नमयैस्तथा । मुरज वाद्यशब्दैश्च शंखकाहलनिःस्वनैः ॥२२७॥

गेयैश्च मधुरैर्दिव्यैः श्रोत्रेन्द्रिय मनोहरैः । कन्यानां गीतशब्देन नित्यं प्रमुदितं परम् ॥

दृश्यते मण्डपं रम्यं नागदण्ड विभूषितम् ॥२२८॥

पद्मरागपरिच्छन्नं चामरैरुपशोभितम् । सिंहासनन्तु देव्याया न्यस्तं हेममयं शुभम् ॥२२९॥
दर्पणैरर्धचन्द्रैश्च मौक्तिकाहारभूषितम् । अनौपम्यं महादेवि रत्नाकरमिवोत्थितम् ॥२३०॥
ईदृशं मन्दिरं दिव्यं नानाधातुविचित्रम् । तस्मिंस्तु मण्डपं प्राप्य कन्या वचनमब्रवीत् ॥२३१॥
अस्मिंस्तु मण्डपे वीर निमेषं तिष्ठ सुव्रत । स्वयमागच्छते देवी वरं तुभ्यं प्रयच्छति ॥२३२॥

एवमुक्त्वा ततः कन्याः प्रविशन्ति पुरोत्तमम् ।
कृतञ्जलिपुटाः सर्वाः कन्याः वचनमब्रुवन् ॥२३३॥

कन्यका उचुः ।

आगता मर्त्या लोकेऽस्मिन् द्वारे तिष्ठन्ति साधकाः ।
शरणागता महादेवि जयादेव्या प्रवेशिताः ॥२३४॥

तासां तद्वचनं श्रुत्वा कन्यकानां सुरेश्वरि । सिंहयुक्तं रथं दिव्यं स्वयमारुह्य निर्गताः ॥२३५॥

कन्याकोटि सहस्रन्तु देव्या सह विनिर्गतम् ।
काश्चिद् गच्छन्ति वै हृष्टाः काश्चिद्वीजन्ति चामरैः ॥२३६॥
नृत्यन्ति कन्यकाः काश्चिद् काश्चित्स्तोत्रं पठन्ति च ।
नानावाद्यरताः काश्चित् नानागीतरतास्तथा ॥२३७॥

काश्चिज्जयजया शब्दैः स्तुवन्ति परमेश्वरीम् । परिवारिताः कन्यैश्च आगता मण्डपे शुभे ॥२३८॥
प्रविष्टो मण्डपे देव्याभ्यन्तरे भुवनेश्वरी । सिंहासनोपविष्टस्तु श्वेतपद्मोपरिस्थिता ॥२३९॥
जटा मुकुट विन्यस्ता भस्माकुलित विग्रहा । ललाटनयनोपेता श्रवणायतलोचना ॥२४०॥
पूर्णचन्द्रानना देवी पयोधरभरालसा । सुनितम्बा सुमध्या च सर्वावयवशोभिता ॥२४१॥
भूषिता पट्टमाणिक्यै दिव्यगन्धानुलेपना । सितस्रग्दामवस्त्रैश्च शोभाढ्या मृदुभाषिणी ॥२४२॥

स्वकान्तिकिरणौघेन पुरीमुद्योत्य संस्थिता ॥२४३॥

श्रीदेव्युवाच ।

प्रविश्य साधकान् सर्वानासनं चैव दीयताम् ।
देव्यास्तद्वचनं श्रुत्वा अप्सरा निर्गता द्रुतम् ॥२४४॥

अप्सरा उचुः ।

एहि वीर महासत्त्व प्रविशाभ्यन्तरे पुरे । तुष्टा तु ते महादेवी वरं तुभ्यं प्रयच्छति ॥२४५॥
कन्यानां वचनं श्रुत्वा साधकस्तिष्ठते ततः । कृताञ्जलि पुरो भूत्वा प्रविशेद् भुवनोत्तमम् ।२४६॥
दण्डवत् पतितो भूम्यां देव्याग्रे च व्यवस्थितः । सगद्गदं वदेद्वाक्यं किञ्चिदाकुलितेक्षणः ॥२४७॥

साधक उवाच ।

त्वं गतिः शरणं देवि त्वं माता परमेश्वरि । अहं जन्मान्तरे क्षीणस्त्वामेव शरणं गतः ॥२४८॥

देव्युवाच ।

स्वागतं भद्र भद्रं ते वरं मे ब्रूहि सुव्रत । एवं सम्भाषितो देव्या साधकः पुण्यकर्मकृत् ॥२४९॥
मुक्त्वा तु मानुषं देहं दिव्याभरण भूषितः । बालार्काणां सहस्रस्य कान्तिर्वै धारयति सः ॥२५०॥
सुरूपः सुभगः सौम्यः महाबलपराक्रमः । इदं रत्नपुरी दिव्या सर्व–काम–फलप्रदा ॥२५१॥
साधक त्वं प्रसादेन क्रीडयस्व यथासुखम् । स्कन्दतुल्यबलो भूत्वा यावदाहूतसंप्लवम् ॥२५२॥

साधक उवाच ।

त्वन्मुक्तश्च भविष्यामि जन्मदुःखविवर्जितः ॥२५३॥

देव्युवाच ।

कोटिमेकन्तु कन्यानां तव दत्तन्तु साधक । अयुतद्वयं तु शेषाणां कन्यकानान्तु कल्पितम् ॥२५४॥
देव्याः पादाम्बुजं वत्स साधकः पुण्यकर्मकृत् । गतो वै साधकैः सार्धं स्तूयमानस्तु मंगलैः ॥२५५॥
वरं दत्त्वा महादेवी साधकस्य महेश्वरी । प्रविश्य भवनं दिव्यं यत्सुरैरपि दुर्लभम् ॥२५६॥
ततः कलकला शब्दैः कन्यकानां पुरोत्तमे । न श्रूयते पुरे किञ्चिन्नाना वादित्र निःस्वनैः ॥२५७॥
परिष्वजन्ति ताः कन्या भ्रमरा इव पंकजम् । नानाक्रीडासमायुक्ता दिव्यस्त्री परिवारिताः ॥२५८॥
क्रीडन्ति साधकास्तावत् यावदाहूतसंप्लवम् ॥२५९॥

ईश्वर उवाच ।

कथयामि महादेवि यथा भुञ्जन्ति ताः स्त्रियः । नन्दापादार्चनसक्ता नन्दास्मरणतत्पराः ॥२६०॥
नन्दाध्यानरता दिव्यं नन्दाभक्ति समन्विताः नन्दास्मरणसन्तुष्टा नन्दादानैकतत्पराः ॥२६१॥

नन्दाभक्तजने भक्ता नन्दायात्रैकतत्पराः । नन्दामन्त्ररता नित्यं व्रतयोगरताश्च ये ॥२६२॥
पतयस्ते भविष्यन्ति कन्यकानान्तु सुव्रते । जल प्राकारदुर्भेद्यं हिमप्राकार रक्षितम् ॥२६३॥
चन्द्रनाग प्रतीहारं देव्या आज्ञा महल्लकम् । अन्तःपुरतरं दिव्यमसुरेश्वरदुर्लभम् ॥२६४॥
नन्दाभक्तजनैर्भोग्यं निजमन्तःपुरमिव । अतः परं प्रवक्ष्यामि मन्त्रोद्धारस्य लक्षणम् ॥२६५॥
यजनञ्चैव देवीनां रुपकञ्च महातपे । पवर्गात् पंचमे वर्गे वाजञ्चैव तदन्तिमम् ॥२६६॥
उच्चरेत प्रयत्नेन भिन्नं वैहायसेन तु । पुनस्तु मध्यमं बीजं तृतीयं स्वरभेदितम् ॥२६७॥
पुनः प्रथमं दातव्यं भिन्ना वैहायसेन तु । एकादशेन संभिन्नं बीजं कुर्याद्वरानने ॥२६८॥
तस्यापि परमं देवि उद्धरेत्प्रथमं पुनः । तृतीयं भूतजे नैव अधस्थो न तु याजयेत् ॥२६९॥
पुनर्द्वितीयभूतस्थं भेदयेकादशेन तु । तस्यापि परतरे वर्गे प्रथमन्तु समुद्धरेत् ॥२७०॥
पुनश्चतुर्थभूयस्थं बीजं यत्नेन उद्धरेत् । कालक्षान्तं ततो बीजं भेद एकादशेन तु ॥२७१॥
नवाक्षरा महाविद्या नन्दाया हृदयं प्रिये । सर्वकामफलप्रदा नित्यं विद्ययेन्तु महातपे ॥२७२॥
अक्षरं युग्मायुग्मञ्च अंगानि तु प्रकल्पयेत् । नवमन्तु भवेदस्त्रं कालाख्यं सविसर्गजम् ॥२७३॥
अनया जप्यमानस्य कन्यकास्तु महातपे । नित्यं कुर्वन्ति आनन्दं नन्दायास्तु पुरोत्तमे ॥२७४॥

अनिमेषे क्षणा नित्यं रत्नं पश्यन्ति साधकाः ।
दर्शनेनोत्सुकाः सर्वाः कामार्त्ताः कामिनीः प्रिये ॥२७५॥

अतः परं प्रवक्ष्यामि देव्याया यजनं शुभम् । साधकानां हितार्थाय तन्मे निगदतः शृणु ॥२७६॥
अनन्तमासनं कृत्वा धर्मादीश्च निवेशयेत् । ततः प्रकल्पयेत् पद्ममासनं प्रणवेन तु ॥२७७॥
अनन्तादीनि देवेशे प्रणवेन प्रकल्पयेत् । तत आवाहयेद्देवीं मूलमन्त्रेण सुव्रते ॥२७८॥

शुक्लाम्बरधरां सौम्यां जटामुकुट मण्डिताम् ।
नानालंकारशोभाढ्यां सितभस्मावगुण्ठिताम् ॥२७९॥

अभयवरप्रदां देवीं वरहस्तां चतुर्भुजाम् । नानापुष्पैस्तथा भक्ष्यै र्लेह्यचोष्यैश्च ईप्सितैः ॥२८०॥
पूजयेत् परया भक्त्या महाभोगजिगीषया । अंगानि पूजयेत् पश्चात् हृदयं वह्निगोचरैः ॥२८१॥
आग्नेयान्तु शिरः पूज्य नैरृत्या पूजयेत् शिखाम् । कवचं परमे भागे ऐशान्येऽस्त्रं प्रपूजयेत् ॥२८२॥
पूर्वपत्रे जया स्थाप्या विजयां दक्षिणे न्यसेत् । अजितां पश्चिमे पत्रे उत्तरे अपराजिताम् ॥२८३॥

द्विभुजां बालरूपान्तु रक्ताम्बरधरां सदा। वीणागृहीतहस्तां तु नानालंकारभूषिताम् ॥२८४॥
स्वाभिधानाभिधेयाञ्च भूत्यांशश्चैव प्रपूजयेत्। शुक्लाम्बरधरा हृष्टा दक्षिणे वरवर्णिनी ॥२८५॥
पश्चिमे पीतरूपा तु उत्तरा वृषरूपिणी। रूपयौवनसम्पन्ना दिव्याभरणभूषिता ॥२८६॥

आज्ञां प्रार्थयमानस्तु देवीनां तद्गता प्रिये।
प्रतिभूत्वा सदा कुर्यात् कृताञ्जलि पुरा स्थिता ॥२८७॥

स्वनामैः पूजयेद्देवीं वेदिकाद्यैर्व्यवस्थिताम्। पश्चिमायां जयां देवीं वरदाभयपाणिनीम् ॥२८८॥
नन्दानन्दकरी देवी भवते साधकस्य तु। लोकपालान् स्वनामैस्तु अस्त्रांश्चैव प्रपूजयेत् ॥२८९॥
प्रतिभावं यदा मन्त्री मन्त्रेण सह कारयेत्। फलं न विद्यते तस्य प्रभुत्वेन यदा स्थितः ॥२९०॥
आत्मानं प्राकृतं मन्येत् मन्त्रं मन्येद् यथा शिवम्। विधिरेष समाख्यातः कार्यश्चैव तु साधकैः ।२९१।
दिव्यप्राकृतभावेन पूज्यमाना महाधिपे। हृदये भव देवेशि अन्यथा तु नासिद्धिदः ॥२९२॥
पूजाकाले तु कर्त्तव्यमदाने मन्त्ररूपिणम्। अन्यथा यत्तु देवेशि विघ्नैः स परिभूयते ॥२९३॥
एवं कृत्वा महायागं सर्वसिद्धिप्रदायकम्। अतः परं प्रवक्ष्यामि मुद्रालक्षणमुत्तमम् ॥२९४॥
अंगुलाग्रस्थिताः सर्वा अंगुष्ठेव ततोपरि। नमस्कारा स्मृता मुद्रा देव्याः सान्निध्यकारिका।

अनया विधिना देवि देव्याः सान्निध्यतां व्रजेत् ॥२९५॥

इति श्री देवीपुराणे नन्दाप्रशंसानाम त्रिनवतितमोऽध्यायः[1]।

१. क ग पुस्तके १९० या त्वदेव श्लोकाः सन्ति।



# चतुर्नवतितमोऽध्यायः ।

उमोवाच ।

नन्दा देव्याः पुरी देव श्रुता मे परमेश्वर । अधुना श्रोतुमिच्छामि सुनन्दायाः पुरोत्तमम् ॥१॥

किं प्रमाणं च कन्यानां प्रवेशञ्च पुरस्य तु । केन मार्गेण गच्छन्ति नरा ये भावितात्मनः ॥२॥

केन वा तुष्यते देवी कथं प्रत्यक्षतां भवेत् । विधिरेष समाख्याहि मम कौतुहलं प्रभो ॥३॥

ईश्वर उवाच ।

सुनन्दाया पुरी रम्या अनौपम्या सुरेश्वरि । तथापि कथयिष्यामि तव कौतुहलं प्रिये ॥४॥

नानारत्नोपशोभाढ्या नानाभरणभूषिता । नाना रत्नोज्वला देवी नानामेखलयोजिता ॥५॥

रत्नसोपानपंक्तिभिः सुचित्रा तु विराजते । नानाशय्यासनाकीर्णं र्नानाचामरशोभितैः ॥६॥

नानावस्त्रवितानैश्च नानाविमानसंकुला । नानाकवाट-विन्यस्ता नानास्तम्भसमन्विता ॥७॥

नानाध्वजोच्छ्रिता रम्या नानाघण्टानिनादिता । नानादर्पणविन्यस्ता नानास्रग्दामभूषिता ॥८॥

नानावर्णरजैः कीर्णा रम्या हेमवती मही । न निम्ना नोन्नता चापि सुखपादप्रचारदा ॥९॥

नानासरित्समाकीर्णा नानानिर्झरकाश्रिता । नानापक्षीगणाजुष्टा हेमद्रुमलताकुला ॥१०॥

नानापुष्पफलोपेता सुन्दरीभिरलंकृता । कामकार्मुकसंघुष्टा सायकैर्विध्वस्तचेतसः ॥११॥

स्तनोरसि च भराक्रान्ता प्रस्खलन्ति पदे पदे । कामेन सहसालापं नित्यं कुर्वन्ति योषितः ॥१२॥

कन्यका ऊचुः ।

पातालपुरसुन्दर्यः किं प्रयुक्तास्त्रिलोचन । यथा कामं दहस्वेति एवं विध्वंसि निर्दय ॥१३॥

अल्पानि हीनसत्त्वानि अंगनानां मनोभवः । म्लेच्छापि न प्रहरन्ति मुक्त्वा त्वां मकरध्वजम् ॥१४॥

कान्तं ध्यात्वा कृशोदर्यः एकमेवाभिगृह्लिताः । भवन्ति लज्जिता भूयो अवसाने सुरेश्वरि ॥१५॥

अनेन मदनार्त्तास्तु सुनन्दायाः पुरे प्रिये । कथिता यादृशी आर्त्तिर्योषितानान्तु सुन्दरि ॥१६॥

अतः परं प्रवक्ष्यामि देव्या सिद्धिनिषेवितम् । तावद्गच्छेन्महातीर्थं यत्सुरैरपि दुर्लभम् ।।१७।।
गङ्गातीरे महादेवी पश्यते मरुकेश्वरम् । तत्र गत्वा तु मेधावी त्रिरात्रं कारयेद् बुधः ।।१८।।
त्रिरात्रे चैव सम्पूर्णे प्रणिपत्य महेश्वरम् । उत्तराभिमुखो भूत्वा व्रजेदीशानगोचरम् ।।१९।।
ऊर्ध्वयानं ततः पश्येन्नदीवामे शिलोच्चयाः । पितृणामुदकं दत्त्वा कालकूटं व्रजेत्ततः ।।२०।।
कलहंसेश्वरं नाम शम्भोरायतनं महत् । तत्रादिपूजां कृत्वा तु प्रणिपत्य पुनः पुनः ।।२१।।
कौशिकायां पुरः स्नात्वा मुच्यते नरः किल्बिषैः । शूलभेदं ततो गच्छेत् तत्सुरैरपि दुर्लभम् ।।२२।।
तत्रापि पूजां कृत्वा तु एकचित्तस्तु साधकः । तद्वसन्भवनं गच्छेत् केदारं यत्र क्रीडितम् ।।२३।।
लोकदृष्टेन मार्गेण स गच्छेत् कार्तिकं पुरम् । गुह्येश्वरं नमस्कृत्वा गच्छेद्वैश्रवणं पुरम् ।।२४।।
व्रजेन्नंदेश्वरं देवमहोरात्रन्तु कारयेत् । भागं चतुष्टयं कृत्वा देवाग्नि-गुरु-आत्मनि ।।२५।।

भक्षयित्वा ततः प्राज्ञो गच्छेत् तदुत्तरां दिशम् ।
ततो वैतरणीं गत्वा स्नात्वा तु विधिवत् क्रमात् ।।२६।।

देवानामुदकं दत्त्वा पिण्डं पितृषु दापयेत् । महाविनायकं दत्त्वा पूजां तस्य प्रकल्पयेत् ।।२७।।
देव्याश्रमन्तु संप्राप्य नमस्कृत्य महेश्वरम् । पूर्वभागे तु कुण्डस्य ऐशानीं दिशमाश्रितः ।।२८।।
सुनन्दाया शिला तत्र जलमध्ये प्रतिष्ठिता । पुष्पैर्गन्धैस्तथा धूपैः पूजयेत् परमेश्वरीम् ।।२९।।
नन्दा कुण्डं ह्रदं तत्र प्रविशेत्तत्र साधकः । नन्दादेवीं नमस्कृत्य ततो विज्ञापयेद् बुधः ।।३०।।
अनिवर्त्तपथं देवी देहि मे परमेश्वरि । ततः समीपतो गच्छेद् शिवेन पूर्वचोदितम्[1] ।।३१।।
कृताञ्जलिपुटोः भूत्वा प्रविशेत विचक्षणः । धन्वन्तरप्रमाणं तु प्रविशेन्मत्स्यवत्द्रुतम् ।।३२।।
प्रविश्याभ्यन्तरे वीर ऐशानीदिशमाश्रितः । धन्वन्तरत्रयं गत्वा श्रीमुखं तत्र पश्यति ।।३३।।
प्रविशेत् तज्जलान्तस्थं श्रीमुखं द्वारमुत्तमम् । धन्वन्तरशतं गत्वा पश्येदामलकं द्रुमम् ।।३४।।
तत्फलं भक्षयेत् प्राज्ञो नमस्कृत्वा महेश्वरीम् । तत्फलं भक्षमात्रेण वलिपलित वर्ज्जितः ।।३५।।
बलं नागसहस्रस्य तत्क्षणादेव जायते । धन्वन्तरशतं गत्वा प्रविशेत ततोऽधिकम् ।।३६।।
दृश्यते मण्डपं रम्यं शुद्धं हेममयं महत् । शुद्धस्फाटिकस्तम्भाढ्यं चतुर्द्वारं महापुरम् ।।३७।।

१. खपुस्तके ३४ इति संख्याकः श्लोकः ।

पद्मरागोपरिच्छन्नं पताकैरुपशोभितम् । स्वयं तिष्ठति तत्रैव महाकालगणाधिपः ॥३८॥
साधकञ्चागतं दृष्ट्वा स्वागतन्तु वदत्यसौ । अथ नन्दी वदेद्वाक्यमुपवेशाय साधकम् ॥३९॥
पृच्छामि अम्बिकां यावत् तावत् तिष्ठ महातपः ।
ततः शीघ्रं गतो नन्दी सुनन्दायाः समीपतः ॥४०॥

नन्दी उवाच

आगतो मर्त्यो लोकेऽस्मिन् तव पार्श्वे महेश्वरि ॥४१॥

सुनन्दा उवाच

आगच्छन्तु महानन्दी मम भक्तिपरायणः । देव्यायाः वचनं श्रुत्वा ततो नन्दी समासतः[1] ॥४२॥
साधकस्येदं वाक्यं वदेन्नन्दी सुभावितम् । धन्योऽसि भो महावीर एहि गच्छाम साधक ॥४३॥
अर्घ्यं पाद्यं ततो गृह्य कन्या निर्गत्य वेश्मनि । केयूराभरणैर्दिव्यै र्मणिकुण्डलभूषिता ॥४४॥
चम्पकाकारवपुषः कर्णान्तायतलोचनाः । नीलोत्पलदलश्यामा नानालंकारभूषिताः ॥४५॥
रक्ताम्बरधरा काचिच्छुक्लाम्बरधरापराः । पीताम्बरधरा चान्या पूर्णचन्द्रनिभाननाः ॥४६॥
सर्वा यौवनसम्पन्नाः सर्वाः पीनपयोधराः । सर्वास्ताः कामरूपिण्यः सर्वास्तामृतसम्भवाः ॥४७॥
याश्चान्याश्चापरास्तत्र निर्गताश्च समन्ततः । गेयैश्च मधुरैर्दिव्यै र्मण्डलैश्च मनोरमैः ॥४८॥
चामरैः कनकदण्डैश्च मणिरत्नमयैदृढैः । चामरहस्तातथा काचित् पुष्पहस्तास्तथापरा ॥४९॥
मदार्त्ता मुदिताः सर्वाः ईक्षन्तेह निमिषेक्षणाः ।
पूज्यन्ते साधकास्तत्र अर्घ्यंपाद्यैश्च मंगलैः ॥५०॥
ईष्टा तुष्टमनाः सर्वा अवगूहन-तत्पराः ।
ततस्तु साधकं गृह्य प्रवेशयन्ति तत्पुरम् ॥५१॥
विज्ञापयेत् ततो भक्त्या त्वं गतिः शरणं मम ।
ततो देवी वदेद्वाक्यं प्रसन्न वदनोज्ज्वला[2] ॥५२॥

१. बंगला पुस्तके पद्यमिदं ४६ संख्याकं वर्त्तते ।
२. मूलपुस्तके ५९ संख्याकं पद्यमिदं वर्त्तते ।

देव्युवाच ।

स्वागतं ते महावीर साधकस्त्वं कृतो मया । एवं सम्भाविता देव्या साधकास्तु महात्मनः ॥५३॥
तत्क्षणादेव जायन्ते साधका दिव्यरूपिणः । इयं दिव्यपुरी वत्स चन्द्रवत्या समन्विता ॥५४॥
क्रीडस्व मत्प्रसादेन यावच्चन्द्रदिवाकरौ । तदन्ते भवते मोक्षो मत्प्रसादेन पुत्रक ॥५५॥
देवानान्तु यथा रुद्रं अतिरस्कृतशासनः । तथैव भवने मह्यं क्रीडय त्वं यथासुखम् ॥५६॥
एवं दत्वा वरं देवी साधकस्य सुरेश्वरि । नमस्कृत्वा ततो मन्त्री प्रविवेश सुरोत्तमम् ॥५७॥
मंगलैः स्तूयमानस्तु गीतवाद्यमनोरमैः । चामरैर्बीज्यमानस्तु स्कन्दतुल्य-पराक्रमः ॥५८॥
पुष्पयानं समारुह्य क्रीडते भवनोत्तमे । योजनानां सहस्रन्तु भवनस्य च विस्तरः ॥५९॥
सहस्रकोटिकन्यानां समन्तात् पूरितं पुरम्[1] ॥६०॥

इति श्री देवीपुराणे सुनन्दाप्रवेशविधिर्नाम चतुर्नवतितमोऽध्यायः[2] ।

---

१. पुस्तके श्लोकसंख्या अष्टषष्टिपरिमिता वर्तते ।
२. क ग पुस्तके अध्याय एष नास्ति ।



# पंचनवतितमोऽध्यायः ।

उमोवाच ।

सुनन्दायाः पुरं रम्यं श्रुतं मे परमेश्वर । अधुना श्रोतुमिच्छामि कन्यकायाः कथय प्रभो ॥१॥

ईश्वर उवाच ।

कन्यकायाः पथं देवि कथयामि समासतः । शाक-यावक-पयो-वायु-लब्धाहारो अथापि वा ॥२॥
होमयेल्लक्षमेकन्तु पद्म-विल्व-समन्वितम् । ततो गच्छेन्महावीरः पूर्वोक्तेन पथेन तु ॥३॥
अधुना मन्त्रपदानि भवन्ति । ओम् नन्द निनन्द किलि किलि स्वाहा ॥४॥
इमां विद्यां जपं कुर्यात् ततः सिद्धिः प्रजायते । पूर्वोक्तेन विधानेन मुद्रा नित्यं प्रकल्पयेत् ॥५॥
ततस्तु कारयेद्धौमं गुडिकैर्गुग्गुलस्य तु । अयुतमेकं महादेवि ततः सिद्धिः प्रजायते ॥६॥
पूर्वमेव एषो लक्षान् जप्त्वा होमं प्रकल्पयेत् । होमान्ते दर्शनं रात्रौ सिद्धिस्तस्य प्रजायते ॥७॥
ततो गच्छेत् मेधावी साधकैः सहितः पथि । देव्याश्रमपदं प्राप्य चरुं तत्र प्रसाधयेत् ॥८॥
भागं चतुष्टयं कृत्वा देवि अग्निशिवात्मनि । आत्मभागं ततो मन्त्री साधकैः सह भक्षयेत् ॥९॥
विज्ञापयेत् ततो देवीं प्रणिपत्य पुनः पुनः । अहं दुःखान्तरे भीतस्तामेव शरणं गतः[1] ॥१०॥
देहि मे त्वं पथं देवि अविघ्नेन महेश्वरि । एवं विज्ञाप्य देवेशीं स गच्छेदुत्तरां दिशम् ॥११॥
शरक्षेपत्रयं गत्वा दृश्यते शैलमुत्तमम् । शुद्धस्फटिकसङ्काशा प्रतिमा तत्र तिष्ठति ॥१२॥
नमस्कृत्वा तु गन्तव्यमैशान्यां दिशि संस्थितम् । धन्वन्तरशतं गत्वा अर्धचन्द्राकृतिः शिला ॥१३॥
तत्र मातृ गृहस्यैव उत्तरा दिशि तिष्ठति । नमस्कृत्वा तु गन्तव्यं यावद् दृश्यं नभः स्थलम् ॥१४॥
करवीरवनं तत्र हेमपुष्पं सुगन्धि च । षट्पदारवरम्याढ्या दिव्यभूम्या व्यवस्थिता ॥१५॥

---

१ एकादश संख्याकः श्लोकोऽयं ख पुस्तके अस्ति ।

प्रतिमारूपधरा सा दिव्यहेममया शुभा । नानारत्नोज्ज्वला रम्या साधकानां फलप्रदा ॥१६॥
तस्याः पूर्वोत्तरे भागे वनं गीर्वाणपादपम् । अशोकबकुलैश्चैव शुभैस्तिलकचम्पकैः ॥१७॥
प्रियंगुनागपुन्नागैः नानापादपसङ्कुलैः । नाना गुल्मसमाकीर्णं नानावल्ली समाकुलम् ॥१८॥
सदा पुष्पफलोपेतं सदा षट्पदनादितम् । कोकिलारावरम्यन्तु नानापक्षिनिषेवितम् ॥१९॥

अस्य मध्ये महादेवी देव्या भवनमुत्तमम् ।
नानारत्नैश्च विन्यस्तं नानाध्वज समाकुलम् ॥२०॥
नाना लीलावती रम्या नुपूरारावनिस्वना ।
दीर्घिकाभिः सुरम्याभिः शोभिताभिः सरोरुहैः ॥२१॥
तत्र मानवकन्यास्तु देव्याः पादप्रपूजकाः ।
यक्षिण्यः कामरूपास्तु गन्धर्वी किन्नरी तथा ॥॥२२॥
विद्याधर्य सुरूपास्तु देवीमाराधयन्ति ताम् ।
कामार्त्ता विह्वला नित्यं भर्त्तारं प्रार्थयन्ति ताः ॥२३॥
अनेक सिद्धिसंकीर्णं देव्यायाः स्थानमुत्तमम् ।
देव्या विमानमारुह्य आगता कनकेश्वरी ॥२४॥
जटामुकुट रत्नाढ्या भस्मोद्धूलित विग्रहा ।
पञ्चमुद्रासमोपेता नानारत्नविभूषिता ।
महाव्रतधरा देवी आगता यत्र साधकाः[1] ॥२५॥

देव्युवाच ।

स्वागतं ते महाराज वीरसत्त्व महातपः । मदीयं भवनं वत्स नानासिद्धि समाकुलम् ॥२६॥
यदि तिष्ठसि अत्रैव दिव्यैश्वर्य समाकुले ॥२७॥
विचित्रमणिना कीर्ण देवानामपि दुर्लभम् । किन्नरीं वाथ गृह्य विद्याधरीमथापि वा ॥२८॥
पातालयोषितो गृह्य यक्षिणीं वाथ रूपिणीम् । अष्टधा दिव्यसिद्धिनामेकां गृह्य यथेप्सया ॥२९॥
खड्गं वा रोचनां वापि गुडिकां वापि पादुके ।

---

१. अस्य श्लोकस्य संख्या त्रिंशत् इति वर्त्तते ख पुस्तके ।

भुक्त्वा तु विपुलान् भोगान् पश्चान्मोक्षो भविष्यति ।
एवं दत्त्वा वरं देव्या साधकस्य तु सुन्दरि ॥३०॥
गता विमानमारूह्य स्वकं यं स्थानमुत्तमम् ।
चन्द्रकान्तमयीं नन्दां प्रतिमारूपधारिणीम् ॥३१॥
पूजयन्ति कृशोदर्य कान्तार्थिन्यो गृहे गृहे ।
मुक्ताफलमयीं देवीं सुनन्दायाः पुरे प्रिये ॥३२॥
गन्धधूपैः सुपुष्पाद्यैस्त्रिकालं पूजयन्ति ताः ।
स्फाटिकां शुभ्ररूपान्तु कनकाढ्याश्च कामिनीः ॥३३॥
अर्च्चयन्ति सदाकालं मथिता मन्मथेन तु ।
स्वकीयैर्भुवनैर्दिव्यैः पूजां कुर्वन्ति ता स्त्रियः ॥३४॥

प्रलये तु समुत्पन्ने देव्याः पुरवरैः सह। विद्यते द्वे महादेवि तदा लीयन्ति देवताः ॥३५॥
अतः परं प्रवक्ष्यामि सखायानान्तु लक्षणम् । धर्मशीलास्तपोयुक्ताः सत्यवादि-जितेन्द्रियाः ॥३६॥
मात्सर्येन परित्यक्ताः सर्वसत्त्वहिते रताः । प्रियवादिनः सोत्साहा मर्त्यलोक जुगुप्सकाः ॥३७॥
परस्पर सुसन्तुष्टा अनुकूला साधकस्य तु । ईदृशैः साधनं कुर्यात् सुसखायैः सहैव तु[1] ॥३८॥

ब्रह्मोवाच ।

या नन्दा सा शिवः साक्षान्नन्दारूपधरः शिवः । उभयोरन्तरं नास्ति नन्दायास्तु शिवस्य च ॥३९॥
न नन्दापरमं ध्यानं न नन्दापरमं तपः । न नन्दापरमं तीर्थं शिवः साक्षात् प्रभाषते ॥४०॥
लेख्येऽपि तिष्ठते यस्य इदं ध्यानं महातपः । तस्यापि प्रीयते देवी किं पुनर्मन्त्र पूजिता ॥४१॥

ईश्वर उवाच ।

नास्तिकाय न दातव्यं न शम्भु-गुरु-निन्दके । पिशुनाय न दातव्यं देव्या भक्तिविवर्जिते ॥४२॥
गुरु-द्विज-देव-विष्णु-कन्या-गो-निन्दकेन च । दातव्यन्तु महादेवि देव्या भक्तिरतस्य च ॥४३॥
अन्यथा तु वरारोहे हीयते शास्त्रसन्ततिः । स्नेहाल्लोभात् प्रदानेन नरकं यान्ति रौरवम् ॥४४॥

---

१. श्लोकोऽयं ४६ संख्याकः वर्त्तते मूलपुस्तके ।

त्रिमन्त्रां पठते यस्तु नन्दाभक्तिपरायणः । सोऽचिरेणैव कालेन सिद्धिमिष्टां लभेन्नरः ॥४५॥

यथोक्तश्चैव कर्त्तव्यमादेशः परमेश्वरि । श्रवणाद्भावयुक्तस्य सर्वकामान् प्रयच्छति ॥४६॥

दशानां राजसूयानामग्निष्टोमशतस्य च । भावितः फलमाप्नोति कोटिकोटि गुणोत्तरम् ॥४७॥

पुत्रार्थी लभते पुत्रं धनार्थी धनभाग्भवेत् । मुच्यते बन्धनाद्बद्धो रोगी रोगात् प्रमुच्यते ॥४८॥

यान् यान् कामान् नरो भक्त्या पूजयन्नभिकांक्षते ।
तांस्तान् स लभते शक्र इत्येवं शिव अब्रवीत् ॥४९॥

देवेन कथितं देव्या शक्रस्य तु पितामहात् । मया तव नृपव्याघ्र किं भूयः परिपृच्छसि[1] ॥५०॥

इति श्री देवीपुराणे नन्दामहाभाग्यं नाम पञ्चनवतितमोऽध्यायः[2] ।

---

१. अध्या येऽस्मिन् श्लोकानां संख्या षष्टिपरिमिता अंकितास्ति ।

२. क ग पुस्तके अध्याय एष नास्ति ।



# षरणवतितमोऽध्याय :

नृपवाहन उवाच ।

केन केन प्रकारेण देव्या वर्णाश्रमैर्विभो । पूजनीया स्ववृत्तस्थैरेतदिच्छामि वेदितुम् ॥१॥

अगस्त्य उवाच ।

साधु राजन् यथा पृष्टं वर्णाश्रमविभागतः । पालनं पूजनं देव्या प्रवक्ष्यामि ह्यशेषतः ॥२॥

वेद एव द्विजातीनां निःश्रेयसकरः परः । दृष्टादृष्टार्थमिच्छद्भिः सेवनीयः सदा द्विजैः ॥३॥

मातृतः पितृतः शुद्धः पञ्चसप्त तथा द्विजः । संस्कारैर्गर्भधारी च तदा तस्य क्रिया ततः ॥४॥

यथा हि मद्यभाण्डस्य शुद्धिः केनापि न विद्यते । पञ्चगव्यं न तद्याति एवं प्रायं श्रुतेः क्रिया ॥५॥

जातिसंस्कारहीनस्य द्रव्यसंकरकारिणः । शूद्रान्नभोजिनो राजन् न वेदो ददते फलम् ॥६॥

शूद्रस्य अन्नमशित्वा वेदं यदि उदीरते । उच्छिष्टभोजी वर्णानां नरके पर्युपासते ॥७॥

चाण्डाल चण्डकर्मे च वृषलीपतिसन्निधौ । यदि उदीरते वेदं तदा विप्रोऽपि तत्समः ॥८॥

वेदमन्त्रान् यदा विप्रः शूद्रद्रव्येण तर्पते । सर्पिषा यवगोधूम तिलपिष्टक शालिभिः ॥९॥

यावती तस्य द्रव्यस्य रजोरेणु विधीयते । तावतीश्च महाघोरे नरके पर्युपासते ॥१०॥

न हि वेदं समासाद्य विधिं जह्यात् द्विजोत्तम । तस्य एव हि आज्ञा न लंघनीया कदाचन ॥११॥

चक्रवृत्तिधरा विप्रा उञ्छकापोत वृत्तिनः । दन्तोलूखालिकाहारा वेदानां लभते फलम् ॥१२॥

नदीसंगमगोष्ठेषु विचित्रेषु तटेषु च । विचित्रभूमिदेशेषु दर्भदूर्वावृतेषु च ॥ १३॥

गृहेषु शुभलिप्तेषु विष्णु-सूर्य-गृहेषु च ।
पठितव्यः सदा वेदः स्वरवर्ण सुलक्षितः॥१४॥

प्लुतदीर्घक्रमह्रस्व सानुस्वार सुलक्षिताम् ।
ऋचमुच्चारयेत् प्राज्ञो न द्रुतां न विलम्बिताम् ॥१५॥

तपस्तपति योऽरण्ये मुनिर्मूलफलाशनः । ऋचमेकाश्च योऽधीते तच्छतानि च तत्समम् ॥१६॥
अपरश्च महादोषः श्रूयते ऋषिभाषितः । इन्द्रो हिनस्ति वज्रेण अपशब्दमनुच्चरन् ॥१७॥
यज्ञकाले किल शर्मा ऋचां शुद्धामुदीरितः । हतो रुद्रेण शक्रेण सराष्ट्रबलवाहनः ॥१८॥
तस्माच्छुद्धः क्रियाजाति द्रव्यसम्पत्तिलक्षणैः । वेदो वेदनशीलस्य ददाति दिविजं फलम् ॥१९॥
अग्निहोत्रेण यज्ञो वै वेदश्चान्द्रायणादिभिः । सिध्यते नात्र सन्देह इत्येवं मनुरब्रवीत् ॥२०॥
गर्भधारित्र संस्कारैर्यदा विप्रो व्रतं लभेत । तदा चाध्ययनं कुर्याद्वेदस्य विधिना श्रृणु ॥२१॥
न संकीर्णे जले कुर्यात् न च तस्करसन्निधौ । न श्वान-शूकर-काक-कृकराभ्यः समावृतः ॥२२॥
सन्ध्यागर्जितः-निर्घातो रजो-दाह-तमो-वृते । नैर्ऋते मृतनष्टेषु राज्ञां संग्रामविप्लवे ॥२३॥

श्राद्धभुञ्जेन च वान्तस्तु नाजीर्णो न च कामितः ।
नाष्टम्यां न च गोदोहे न पौर्णो न च पार्वणे ॥२४॥

न शेवे न च इन्द्राहे न संक्रान्तौ तथा परे । न राहोरुपरागेषु न च केतुप्रदर्शने ॥२५॥
नोत्पाते च पठेद्वेदं यदीच्छेत् श्रेयः सर्वदा । उपाध्यायं समाश्रित्य तस्य चाज्ञाकरो भवेत् ।
एवं सम्वर्त्ततो वत्स फलन्ते वेदिकाः क्रियाः ॥२६॥

इति श्री देवीपुराणे वेदानुषंगो नाम षण्णवतितमोऽध्यायः[1] ।

---

१. क ग पुस्तके अध्यायोऽयं नास्ति ।



# सप्तनवतितमोऽध्यायः ।

शक्र उवाच ।

गोमेधो अश्वमेधश्च पशुमेधादयो मखाः । तेषु प्राणिवधस्तात ते च स्वर्गादिसाधनाः ॥१॥
एवं पूर्वापरार्थेषु विरोधः सुमहान् भवेत् । छिन्धि मे संशयं नाथ सर्वशास्त्रार्थपारग ॥२॥

ब्रह्मोवाच ।

यज्ञार्थं पशवः सृष्टा यज्ञेष्वेषां वधः स्मृतः । अन्यत्र घातनाद्दोषो वाङ्-मनः-काय-कर्मभिः ॥३॥
देवार्थे पितृकार्येषु मनुष्यार्थे पुरन्दर । वधयन् न भवेदेन अन्यथा महाकिल्विषम् ॥४॥
नवकृषरपूपानि पायसं मधुसर्पिषी । वृथा मांसञ्च नाश्नीयाद्देव-पितृ-अहो-मितम् ॥५॥

न वृथा चेष्टयेत् किञ्चित् त्रिवर्गस्य विरोधया ।
न च वाचं वदेद् दुष्टां न दीनां न च कर्कशाम् ॥६॥

नासहायो व्रजेद्रात्रौ न पंके न चतुष्पथे । न शून्यागारे तिष्ठेत न च पर्वतमस्तके ॥७॥
न श्मशाने न देवस्य प्रासादेषु कदाचन । न च गवि प्रसूतायां विश्वसेत स्त्रीजनेषु च ॥८॥
न वृक्षारोहणं कुर्यात् न च कूपावलोकनम् । न गोद्विजहुताशान्नं मध्येन गमनं क्वचित् ॥९॥
न वह्नौ तापयेत पादं न च तममभिलंघयेत् । न सूर्यमवलोकेत उदयास्तमने क्वचित् ॥१०॥

न मुखेन धमेदग्निं न च खड्गं तु लंघयेत् ।
तथा चैवायुधान् सर्वान् यत्रोपस्कर मार्जनीः ॥११॥

न प्रमत्तजनाकीर्णे न च स्त्रीवालसेविते । गृहे वामगमं कुर्यान्न च विश्वास क्रीडनम् ॥१२॥
न विषं भक्षयेत् प्राज्ञो न भुजंगैश्च क्रीडयेत् । न गुरुद्विजवेदांश्च निन्दयेन्न च आक्षिपेत् ॥१३॥

सर्वं भद्रं शुभं ब्रूयात् सर्वकालं शुभाननः ।
शुक्लवासा शुचिः स्रग्वी न च केशनखः सुखी ॥१४॥

शुक्लमाल्यधरो नित्यं सुगन्धः सुखवासस: । नेत्राञ्जनं निषेवेत दन्तधावनपूर्वकम् ॥१५॥
ऋजुपथे सदाचारो ऋजुसेवी जितेन्द्रियः । पठनाजपनासक्तो लिखना श्रवणा तथा ॥१६॥
नित्यं दैवतपूजायामौषधाधारनेषु च। जपहोमार्च्चने सक्तो विन्दते सुखमुत्तमम् ॥१७॥
न गच्छेन्मैथुनं पर्वे न देवगुरुसन्निधौ । न कुर्याज्जले नादन्तु न वेद्यैर्न च वत्सरैः ॥१८॥
न प्रधानजनवादं नृपाक्षेपं कदाचन । नृप-बन्धु-गुर्वमात्य-भिषग्-ज्योति-पुरोहितैः ॥१९॥
विरोधानीह दुःखानि सुखं प्रीत्या अवाप्नुयात् ॥२०॥

इति श्री देवीपुराणे आचारकीर्त्तनं नाम सप्तनवतितमोऽध्यायः[1] ।

---

१. क ग पुस्तके अध्यायोऽयं नास्ति ।



# अष्टनवतितमोऽध्यायः ।

ब्रह्मोवाच ।

एवमाचारयुक्तात्मा सततं चर्च्चिकारतः । आप्नुयात् सर्वकामांस्तु यथेप्सितमनोऽनुगान् ॥१॥

शक्र उवाच ।

नित्यं ये भगवतीभक्तास्तैर्नरैर्द्विजसत्तम । किं कार्यं किं वा नो कार्यं तद्वद पृच्छतो मम ॥२॥

ब्रह्मोवाच ।

सर्वा सर्वगता देवी सर्वदेव नमस्कृता । यष्टव्या शुद्धभावेन न भिन्ना पृथगेव सा ॥३॥
नामभेदाद् भवेद्भिन्ना न भिन्ना परमार्थतः । शिवा नारायणी गौरी चर्च्चिका विमला उमा ॥४॥
तारा श्वेता महाश्वेता अम्बिका शिवशासनात् । यावद्द्रव्यं भवेदहं तावद्देवी व्यवस्थिता ॥५॥
सा वन्द्या पूजनीया च सततं नन्दभावितैः । विजयार्थं नृपैः खड्गे छूरिकापादुकापटे ॥६॥
चामुण्डा चित्ररूपा वा लिखिता वाथ पुस्तके । ध्वजे वा कारयेच्छक्र स नृपो विजयेद् द्विषम् ॥७॥
विशेषाच्छ्रावणारभ्य तस्याः पूजान्तु कारयेत् । पवित्रारोहणं वत्स सर्वशास्त्रेषु गीयते ॥८॥
अग्नेर्ब्रह्मस्य पार्वत्या गजवक्त्रमहोरगाम् । स्कन्द-भानु-गणा-मातृ-दुर्गा-धर्मेश-गो-वृषाम् ॥९॥
विष्णोः कामस्य देवस्य शक्रस्य च दिनांशगाम् । पूजनीया तु चामुण्डा चण्डपापविनाशिनी ॥१०॥
सर्वकार्यादिना दत्ता एभिर्नामैः पुरन्दर । अथवाषाढमासे तु श्रावणे वापि कारयेत् ॥११॥
सप्तम्यां वा त्रयोदश्यामधिवासं सुराधिप । सर्वोपहारसम्पन्नं नन्दायाः भक्तिमाश्रितः ॥१२॥
शुक्लतन्तुमयं कार्यं पवित्रं बहुतन्तुभिः । ग्रन्थिभिः सुविचित्राभि रचितञ्चैव मौक्तिकैः ॥१३॥
सुधौतं बध्नयेत् तन्तुं रोचना शशिकुंकुमैः । तथा सर्वाणि द्रव्याणि पुष्पगन्धफलानि च ॥१४॥

नैवेद्यानि विचित्राणि वस्त्रानाद्याभरणानि च ।
हेमतारमयान् पुष्पान् कुशानि मृदवस्तथा ॥१५॥

सुस्नातो मन्त्रविधिना अग्निकार्यं तथा कुरु । तथा च पूजयेद्देवीं प्रतिमां स्थण्डिलेऽपि वा ॥१६॥
पादुके वाथ खड्गे च छूरिकाधनुषोस्तथा । मन्त्रधावननपूर्वन्तु पञ्चगव्यं चरूं कुरु ॥१७॥
दत्त्वा दिशां बलिं वत्स तथा कुर्याधिवासनम् । सदशैर्वस्त्रपत्रैर्वा स्थापयेत् तत् पवित्रकम् ॥१८॥
कृत्वा सत्राभिमन्त्राद्यं नैवेद्यं च निवेदयेत् । रात्रौ तु जागरं कुर्यात् सर्वशोभासमन्वितम् ॥१९॥
नटनर्तकवेश्यानां संघानि मुदितानि च । तिष्ठन्तु वाद्यगीताभिनिरतानि पुरन्दर ॥२०॥
प्रभातसमये वत्स प्राप्ते दद्यात् पुनर्बलिम् । प्रत्यूषे विधिवत् स्नात्वा तथा देवीं हुताशनम् ॥२१॥
जप्त्वा हुत्वाथ कन्याश्च स्त्रियो भोज्या द्विजास्तथा । पवित्रारोहेन वृत्ते दक्षिणामुपपादयेत् ॥२२॥
यथा शक्ता भवेच्छक्र नित्यं कार्यकारिणा । राज्ञा नानाविधा भक्ति अक्षक्रीडा मृगावधम् ॥२३॥
द्विजाचार्यैश्च स्वाध्यायं न कार्यं कृषिगोवृषैः । बालै स्त्रीभिश्च च आत्मीयं दिनानि दश पंचवा ।२४।
देव्या व्यापारनामाभिः कर्त्तव्यं सततं हरे । तथा सम्पूर्णं कर्त्तव्यं पुनः कुर्यात् पवित्रकम् ॥२५॥
एवं यः कारयेद्वत्स तस्य पुण्यफलं शृणु । सर्व-यज्ञ-व्रत-दान सर्वतीर्थाभिषेचनम् ॥२६॥

प्राप्नुयान्नात्र सन्देहो यस्मात् सर्वगता शिवा ।
नाधयो न च दुःखानि न पीडा न च व्याधयः ॥२७॥

न भयं शत्रुजं तस्य न ग्रहैः पीड्यते क्वचित् । सिध्यन्ते सर्वकार्याणि अपि यानि महान्त्यपि ॥२८॥
नातः परतरं वत्स मन्ये पुण्यविवृद्धये । नराणाञ्च नृपाणाञ्च स्त्रीणाञ्चापि विशेषतः ॥२९॥
सौभाग्यजननं वत्स तव स्नेहात्प्रकाशितम् । मयापि ते नृपश्रेष्ठ यथावदुपपादितम् ॥

श्रवणादपि पुण्याय किं पुनः कारणाद्विभो ॥३०॥

इति श्रीदेवीपुराणे पवित्रारोहणं नामाष्टनवतितमोऽध्यायः[1] ।

१. क ग पुस्तके अध्यायोऽयं नास्ति ।



# नवनवतितमोऽध्यायः ।

ब्रह्मोवाच ।

अतः परं प्रवक्ष्यामि सर्वाभ्युदयवर्धनम् । यत्कृत्वा भवते राजन् सर्ववर्णोऽपि चानघ ॥१॥

नभोमासे तु सम्प्राप्ते नक्ताहारो जितेन्द्रियः । प्रातः स्नायी सदाध्यायी अग्निकार्य परायणः ॥२॥

देवीं संपूजयेद्वत्स पुन्नागविल्वचम्पकैः । धूपन्तु गुग्गुलं दद्यान्नैवेद्यं घृतपाचितम्[1] ॥३॥

क्षीरान्नं दधिभक्तञ्च अथवा शाकयावकम् । जपं कुर्यात्तु मन्त्रस्य सहस्रं शतमेव वा ॥४॥

देव्यायास्त्रं समर्प्येत यावत् पूर्णव्रतो भवेत् । पूर्णे व्रते ततो वत्स कन्याचार्यद्विजान् स्त्रियः ॥५॥

भोजयेत् पूजयेद्भक्त्या[2] हेमभूवस्त्रगोवृषैः[3] । अभावात् मंत्रजापन्तु नित्यं कार्यं नृपोत्तम[4] ॥६॥

यः कुर्यात् सततं भक्त्या सोऽपि तत्फलमाप्नुयात्[5] ।

न च व्याधिर्जरा मृत्युर्न भयं चोर[6]-सम्भवम् ॥७॥

भवते नन्दाभक्तस्य अन्ते च पदमव्ययम् ॥८॥

अथ मन्त्रपदानि भवन्ति ।

ओं नन्दे नन्दिनी सर्वार्थसाधनी ।

( मूलविद्या )

ओं नुं नन्दे हृदयम् । ओं तुं नन्दिनी शिरः । ओं सर्वानि शिखा । ओं अर्थसाधिनी कवचम् ।

ओं नुं नेत्रम् । ओं नमः हुँफट् अस्त्रम् । ओं नन्दिनी उपचारहृदयम् ॥९॥

तृतीयामथ पञ्चम्यां चतुर्थ्यामष्टमीषु च । नवम्यं. पौर्णमास्याञ्च एकादश्याञ्च द्वादशीम् ॥१०॥

---

१. पावितम् क ।
२. शक्त्या क क ।
३. भूगोवृषैः क ग ।
४. द्विजोत्तम क ।
५. तत्तुल्यमाप्नुयात क ।
६. चारिसम्भवम् क ग ।

षष्ठ्यां चैव विद्ययेषा[1] पूजनीया विशेषतः। नन्दामुद्दिश्य यो दद्याच्छ्रावणे गोवृषं सितम् ॥११॥
स लभेदिष्टकामानि अन्ते लोकञ्च शाश्वतम्। नवम्यां यः समुद्दिश्य दद्यात्‌गां काचनं पि वा।१२।
स व्रजेद् धूतपातस्तु नन्दालोकं तनुक्षये। आश्विने नवरात्राणि उपवास अयाचितैः ॥१३॥
कृत्वा देवीं प्रपूज्येत अष्टम्यामपरेऽहनि। हेम-वस्त्र-मणि-पुष्प-नानाचित्र-विभूषणैः ॥१४॥
दानं च काचनं देयं नन्दाशास्त्रार्थपारगे। स धूतपापसंघातः सर्वकामसमन्वितः ॥१५॥
विमाने चामरोत्क्षिप्ते चारु चाक्षरशोभिते[2]। गच्छते नन्दलोकन्तु यत्र देवी पुरारिहा[3] ॥१६॥
रमते कन्या[4]कोटिभिरप्सरोगणसेवितः। तदन्ते आगतश्चात्र पृथिव्यामेकराड् भवेत् ॥१७॥
नन्दाभक्तः शिवे भक्त नन्दायात्रैक तत्परः। कार्तिके पूजयित्वा तु देवी याति गजाह्वयैः ॥१८॥
अन्नदानं[5] ददेद् विप्र कन्यायां स्त्रीजनेषु च। श्वेतानि चैव वस्त्राणि तथा देयानि दक्षिणा ॥१९॥
मुच्यते सर्वपापैस्तु जन्मान्तरकृतैरपि। इहत्रैव भवेद्योगी परत्र पदमव्ययम् ॥२०॥
मार्गस्य विधिवत्स्नात्वा देवीं पूजय कुंकुमैः। नैवेद्यं पुष्पपूर्णाश्च[6] देया कन्याश्च ब्राह्मणे ॥२१॥
भोजयेद् दक्षयेद् वत्स वस्त्रैः कीटकुलोद्भवैः। प्राप्नुयात् सर्वकामानि सर्वपापैः प्रमुच्यते ॥२२॥
पौषे देवीं समाधाय पूजयेज्जवजैः स्रजैः। नैवेद्यं शालिभक्तश्च कन्या भोजयेत् भक्षयेत् ॥२३॥
पीतैर्वस्त्रैस्तथा देया शय्या देव्या तुलोद्भवा[7]। अनेन विधिना वत्स साक्षाद्देवी प्रसीदति ॥२४॥
ददते कामिकान् भोगान् अन्ते च स्वपुरं[8] नयेत्। माघे तु पूजयेद्देवीं कुन्दजैर्विधिवत् स्रजैः ॥२५॥

कुंकुमेन सदर्पेण तथा समुपलेपयेत्।
स्नापितां विधिवत्पूर्वं ततः कन्यास्तु भोजयेत्[9] ॥२६॥
द्विजांश्च नन्दिनी[10]भक्तान् विधिना घृतपायसैः।
दक्षिणां तिलहोमैश्च यथाशक्त्या प्रदापयेत् ॥२७॥

---

१. विघ्नेश क ग।
२. चारुवत्ससुशोभितः क ग।
३. सुरारिहा क।
४. कल्पकोटिभि क।
५. अनुयानं ग।
६. पुष्पवर्णाश्च क।
७. तिलोद्भवा क।
८. सुरपुर क।
९. ततः कन्यांस्तु न भोजयेत् क।
१०. चण्डिनिभक्तान् क ग।

विधूत-पाप-कलिलः सर्वभोग-धनान्वितः । विशत्रुर्बहुपुत्रश्च भवते नरसत्तमः ॥२८॥
देहान्ते नन्दिनीलोकं सर्वदेवनमस्कृतम्[1] । व्रजते नात्र सन्देहो अनेन विधिना नृप ॥२९॥
फाल्गुन्यां पूजयेद्देवीं सहकारस्रजैः शुभैः । तथा नैवेद्यभक्ष्याणि शर्करामधुना सह ॥३०॥
भोजयेत् कन्यका बिप्रान् दक्षिणा सितवाससी । अनेन विधिना भोगी देवीलोकं च गच्छति ॥३१॥
संप्राप्ते चैत्रमासे तु देवीमिज्याद् दमनकैः[2] । नैवेद्यं लड्डुका देयास्तथा कन्याश्च भोजयेत् ॥३२॥
स्त्रियश्च रक्तवस्त्रैश्च दक्षितव्या यथाविधिः । अनेन सर्वविधिना प्राप्नुयादविचारणात् ॥३३॥
देवीलोकं व्रजेद्वत्स यत्र भोगा निरन्तराः । वैशाखे पूजयेद्देवीं कर्णिकारस्रजैः शुभैः ॥३४॥
नैवेद्यं सक्तवः खंडं कन्याश्चैव भोजयेत् । शुभानि हेमवस्त्राणि देयानि द्विजसत्तमैः ॥३५॥
देवी सुप्रीतये वत्स सर्वदेवमनुत्तमैः । कृतवाँस्तु विधिरेष तथा गन्धर्व-किन्नरैः ॥३६॥

ज्येष्ठे तु शंकरी पूज्या रक्ताशोककुरंटकैः ।
तथा देयञ्च नैवेद्यं घृतपूर्णं च कन्यकाः ॥३७॥
भोजनीयास्तथा दक्षेद् गोभूदान हिरण्यतः ।
तथा देयाः जलकुम्भाः सम्पूर्णा वासिताः शुभाः ॥३८॥
अनेन वारुणान् भोगान् देवी क्षिप्रं प्रयच्छति ।
आषाढे पूजयेद्देवीं पद्मनीलोत्पलैर्दलैः ॥३९॥
नैवेद्यं शर्कराभक्तं सदधि भक्तपायसम् ।
कन्या द्विजाः स्त्रियो भोज्याद्दक्षयेच्च तथा च तान् ॥४०॥
नाना-हेमाम्बर-राग-तिल-भू-अश्व-मौक्तिकैः ।
पूज्या भगवती भक्त्या सर्ववर्ण-प्रसिद्धये ॥४१॥

नन्दा सुनन्दा कनका उमा दुर्गा क्षमावती । गौरी सर्वेश्वरी श्वेता नारायणी सुतारका ॥४२॥
अम्बिका चेति नामानि श्रावणादेरनुक्रमात् । ये च कीर्तयन्ति उत्थाय ते नरा धूतकिल्विषाः ॥४३॥

---

१. सर्वदेवीनमस्कृतः क । २. आमलकै क ।
३. ज्येष्ठयां क ।

भवन्ति नृपशार्दूलाः पृथिव्यां धनसङ्कुलाः[1] । एतानि पथि-संग्राम-वृद्धिपीडासु नित्यशः ॥४४॥
स्मरंस्तरति घोराणि[2] चर्चिकेति यदुत्तमम् । व्रतानां प्रवरं वत्स समासार्धं तु पादतः ॥४५॥
मासं वापि प्रकर्त्तव्यं श्रावणादि क्रमेण तु ।
नापुण्यैः प्राप्यते वत्स नरैर्नृपवरैस्तथा ॥४६॥
प्राप्यते भगवतीभावं[3] यस्य तुष्टा तु नन्दिनी ॥४७॥

इति श्री देवीपुराणे नन्दाव्रतं नाम नवनवतितमोऽध्यायः[4] ।

१. धनसम्पदा क । २. दुर्गाणि क ग ।
३. भवतीभावा ख, भगवतीभावा क । ४. आद्ये पुराणे देवी नन्दाव्रतम् क ग ।



# शततमोऽध्यायः ।

अगस्त्य उवाच ।

सर्वेषाञ्चैव पात्राणां देवी पात्रन्तु शंकरी । तान्तु पूजय विद्येषा इष्टा-इष्ट-प्रदायिका ॥१॥

ब्रह्मशास्त्र विधिः शक्र कथिता विजयावहा[1] । शक्रेति पौर्णिमा तात[2] श्रावणस्य शुभा वहा ॥२॥

शक्र उवाच ।

विजया या समाख्यातासर्वकाम प्रसिद्धये । तामहं श्रोतुमिच्छामि तत्त्वतः सुरसत्तमः ॥३॥

ब्रह्मोवाच ।

पुत्रार्थं राज्यविद्यार्थं यशः सौभाग्यतोऽपि वा । विजयारोग्यकामाय विजयां कुर्वीत पौर्णिमाम्[3] ॥४।

हेमं वा राजतं वापि भैक्ष्यं खड्गं च पादुके । प्रतिमां वापि कुर्वीत सर्वलक्षणसंयुताम् ॥५॥

तामादाय शुभे ऋक्षे शुक्लवस्त्रविभूषिताम् । यवशाल्यंकुरोपेतामातपत्रविभूषिताम् ॥६॥

देवीं सुशोभनां वस्त्रैः कल्पयेत् तत्र तां न्यसेत् । हुत्वा हुताशनं मन्त्रैस्ततो देवीं तु विन्यसेत् ॥७॥

रोचना-चन्दन-चन्द्रै रूपलिप्य प्रपूजयेत् । नानापुष्पविशेषैस्तु धूपगन्धानुभोजनैः ॥८॥

पूजयेद्विधिवद्देवीं तथा बीजानि आहरेत् ।
यवगोधूम मुद्गादि शालियष्टिक आढकी ॥९॥
तिलमाषाः प्रमाथी च श्यामाका नववालकाः ।
बिल्वाम्रदाडिमो चोद्धूमो च कापित्थनागरान्[5] ॥१०॥

---

१. भाविताावहा क ग ।
२. माता क ग ।
३. पूर्णिमाम् क ।
४. वेदीम् क ग ।
५. नारंगा क ।

वदरान् बीजपूरांश्च उदुम्बर आखेटकान् । दापयेच्चैव भक्त्या वै नैवेद्यान्यपरानि च ॥११॥
फलार्थन्तु फला देव्या जयार्थं यव अंकुरान् । पुष्पं सौभाग्यकामाय रत्नान्यायुर्धनाय च ॥१२॥
धनुः शत्रुविनाशाय प्रियमिच्छाय तत् भवान् । अन्नं सर्वार्थकामाय यथालाभन्तु दापयेत् ॥१३॥
ततः क्षमापयेद्देवीं विद्यां गृह्य व[1] प्रार्थिताम् । पुत्रार्थं भोजयेद्बालान् विजयाय स्त्रियो द्विजान् ॥१४॥
धर्मार्थि चैव भोज्येत अनया विद्याभिमन्त्रिताम् । दक्षिणां च गुर्वाचार्ये कन्यका ब्राह्मणेषु च ॥१५॥
दापयेत् यथाशक्त्या तु तथा तमनुगृह्य च । भोज्याग्रं पुत्रकामेन ग्रामं विद्याभिमन्त्रितम् ॥१६॥
भोक्तव्यं पृथक्पात्रेण[2] न च कुर्वीत शंकरम् । अनया विधिपूर्वं तु मन्त्रमत्रैव विद्यते ॥१७॥

तद्यः[3] पृथिव्यां रेतस्तामेह ददतु यो मां भक्षितानि ।

विद्या प्रयच्छन्नष्टौ पुत्रान् जनयते वेदवेदांगपारगान् ॥१८॥

योऽधीत्य न प्रयच्छेत् सोऽपुत्रोऽपुंसको भवति ।

अहं वीर्येनाहं वलेन धनेन । ओं नमो भगवते अक्षीणरेतसे स्वाहा ॥१९॥

रतिकाले हि चिन्तयेद् दैवतं त्रिदशेश्वरम् । यस्य रेतेन लोकोऽयं भूषितः पावनो भुवि ॥२०॥
ओं रेताय महारेताय सर्ववीर्य महाबले[4] । कामाय कामदेवाय मम कामान् प्रयच्छतु-ठंठं ॥२१॥

अनयाभि मन्त्रितं शयनं भजेत् ।

प्रयच्छत्यष्टौ पुत्रान् यदि मोहं न गच्छति । एवं विद्यां गृहीत्वातु देवीं नित्यं प्रपूजयेत् ॥२२॥
भवते सर्वकामानां सिद्धिमिष्टां पराजिताम् । यानीह[5] फलपुष्पाणि उत्पद्यन्ते तु प्रावृषि ॥२३॥

देव्या विप्राय कन्यायां गुरवे अपि दापयेत् ।

यथालाभं श्रुतं वत्स देयं पुष्पं फलानि च ॥२४॥

श्रावणी नवमी या सा आश्विनी कार्तिकी पि वा ।

स्थातव्यमनेन विधिना अवश्यं सिद्धिमिच्छता ॥२५॥

---

१. गृहे च क ।
२. पुत्रैण ख ।
३. ओप्तः क ।
४. महातपे ग ।
५. यातीह क ग ।

होमेन व्रतचर्येण चरुमन्त्र-प्रसादनात् ।
अपुत्रो लभते पुत्रं धनं सौभाग्य जीवितम् ॥२६॥

अथवा अनया विद्या लक्षणा बृहती सिता । राज[1]पूरकविद्यानि वट शृङ्गादिवादरात्[2] ॥२७॥
नागकेशरपुष्पाणि तदन्ते लभते फलम् । फलं सर्पिः जल[3]दानात् फलं प्राप्नोति विद्यया ॥२८॥

अजयो भवते लोको विद्याधर-धराधिपः ।
एतत्ते सर्वमाख्यातं विजयाख्यं व्रतोत्तमम् ॥२९॥
सिद्धिदं सर्वलोकानां विधिना [4]तपसेवनात् ॥३०॥

इति श्री देवीपुराणे विजयाव्रतं नाम शततमोऽध्यायः[5] ।

---

१. बीज क ग ।
२. वचस्वर्गनिवारणात् ख ।
३. चरः क ग ।
४. उपसेवनात् क ।
५. आद्ये देव्यवतारे विजया व्रतम् क ग ।



# एकाधिकशततमोऽध्यायः ।

मनुरुवाच ।

अतः परं प्रवक्ष्यामि रूपसौभाग्यकारकम् । नक्षत्रविधिना वत्स यथा तुष्यति शंकरी ॥१॥
मार्गादारभ्य[1] मूलेन पादौ जातिमयैः स्रजैः । पूजयेत्सोपवासस्तु नक्षत्रोक्तं तु पारणम् ॥२॥
यवान्नं हविषा सिद्धं ब्राह्मने जंघे प्रपूजयेत् । कह्लारैर्मृगराजैश्च तिलमाषान्नभोजनम् ॥३॥
तेनैवं प्रथमं विप्रा अश्विन्यां जानुनी यजेत् । कुन्दैः असितपुष्पैश्च[2] भोजनं दधिशर्करा ॥४॥

आषाढद्वयेऽपि[3] तां देवीं विल्वपत्रैः प्रपूजयेत् ।
नक्षत्रांते तु भुंजीयात् ब्राह्मणान् तच्च पारणम् ॥५॥
युग्मं फाल्गुनं गुह्यं तु पारयन्त्या प्रपूजयेत्[4] ।
दधिभक्तं तु नैवेद्यं कोटिञ्च कृत्तिकैर्यजेत् ॥६॥
दमनैः सितपुष्पैश्च लड्डूका देवी भोजने ।
भाद्रपदे द्वौ च पार्श्वे पूजयेत्कुसुमैः सितैः ॥७॥
क्षीरान्नं देवी[5] विप्राणां नक्षत्रान्ते तु भोजनम् ।
पौष्या कुक्षिगता देव्या सहकारस्रजैर्यजेत् ॥८॥

घृतमाषान्न भोजनं तु[6] अनुराधा उरो यजेत् । कर्णिकारस्रजैः पीतैर्भोजनं घृतपाचितम ॥९॥
पृष्ठदेशं धनिष्ठासु हेमपुष्पैः प्रपूजयेत् । कर्णपत्रञ्च नैवेद्यं देवीं शाखासु पूजयेत् ॥१०
मरुपत्रैः सुगन्धैश्च देयं भोज्यं तु पायसम् । करौ करेण पूज्यन्तु उशीरतगरादिभिः ॥११॥

---

१. माघादारभ्य ग ।
२. सुगित ख ।
३. रुपेऽपि चारु क ग ।
४. पुष्प कान्तेऽन्यगुह्यं तु उपान्तया प्रपूजयेत् ग ।
५. दधि क ग ।
६. क्षीरपिष्टं सान्नभोज्यं ख ।

गुडं क्षीरं तु नैवेद्यं मञ्जुलाश्च[1] पुनर्वसौ ।
कुंकुमेन प्रपूज्येत देयं भोज्यन्तु षष्ठिकम्[2] ॥१२॥
नरवान् भुजंगदैवत्ये पुन्नागादिभिः पूजयेत् ।
भोज्यन्तुः मार्ज्जिता देया ग्रीवां ज्येष्ठासु पूजयेत् ॥१३॥
सितमालाभिर्देव्यायाः देयं भोज्यं घृतादिकम् ।
रक्त[3] पुष्पदलैः कर्णौः पूजयेत् भोजयेद्बुधः ॥१४॥
पुष्ये भूयन्तु पद्माद्यैः शर्करान्नं तु भोजयेत् ।
दशनान् स्वातिना सेव्या सुरक्तैः कुड्मलैर्यजेत् ॥१५॥
हास्यन्तु शतभिषैज्या नागकेशरचन्दनैः । खर्जूरशर्कराभोज्यं नासिकासु मघां यजेत् ॥१६॥
यवपुष्पैस्तथा भोज्यं गोधूमकृतिसंस्कृतम् । मृगनेत्रे तु देव्यायाः सुगन्धैः कुसुमैर्यजेत् ॥१७॥
चित्राचित्रस्रजैर्देव्या ललाटं चित्रभोजनम् । भरणी शिरसा देव्यां चम्पकादि स्रजैर्यजेत् ॥१८॥
क्षीरान्नभोजनं देयमार्द्रकेशान् प्रपूजयेत् । जात्यादि कुसुमैर्देव्याः सर्वातमानि[4] च भोजनम् ॥१९॥
नक्षत्रमातरा ह्येताः रूपपुत्रार्थिभिः सदा । शम्भुं वाप्यथवा विष्णुं घृतहोमान्नदक्षिणा ॥२०॥
देयं वस्त्रयुगं विप्रे सपत्नीके जितेन्द्रिये । देव्याशास्त्रार्थकुशले शिवज्ञानविशारदे ॥२१॥
सम्पूर्ण-चन्द्रवदना पद्म-पत्रायतेक्षणा ।
शोभना दशना शुभ्रा कर्णौ चापि सुमांसलौ ॥२२॥
षट्पदोदरनिभैः[5] केशैस्तथा कोकिलनादिनी ।
ताम्रोष्ठी पद्मपत्राक्षी सुहस्ता स्तननामिता[6] ॥२३॥
नाभिः प्रदक्षिणावर्त्ता रम्भादलनिभोरु च ।
सुश्रोणी मृदुमध्या च सुश्लिष्टांगुलिशोभना ॥२४॥

---

१. अंगुलीश्च क ग ।
२. पञ्चकम् ख ।
३. रम्भा क ग ।
४. सर्वान्नानि क ग ।
५. षट्पदोदरतैः क ग ।
६. ललनामिता ख ।

प्रमदा सुभगा भर्त्तुर्मनुष्योऽपि महाभुजः । पीनवक्षाः पृथुभावः पूर्णचन्द्रनिभाननः ॥२५॥
सितदन्तो गजगामी महाबलपराक्रमः । प्रियः सर्वस्य लोकस्य पद्मपत्रायतेक्षणः ॥२६॥
मृदुवावहास्ययुक्तश्च[3] स्त्रीणां च मनोहारकः । कामतुल्यो महाविप्रो व्रतेनानेन जायते ॥२७॥
नारियोगश्च इष्टानामर्थानाञ्च शुभागमः । नक्षत्राख्यं महापुण्यं व्रतानान्तु व्रतोत्तमम् ॥२८॥

आपत्स्वपि न भेदं तु प्रियैः कार्यं यदुच्यते ।
अपि दोषात्मकैर्भावैर्न त्याज्यं मुनिसत्तम ॥२९॥

इति श्रीदेवीपुराणे नक्षत्रव्रतं नामैकाधिकशततमोऽध्यायः[4] ।

---

३. सर्वशास्त्रार्थवेत्ता क ग ।

४. आद्ये देव्यावतारे नक्षत्रव्रतम् क ग ।



# द्व्यधिकशततमोऽध्यायः ।

अगस्त्य उवाच ।

आषाढे तोयधेनूं यो घृतं भाद्रपदे तथा । माघे तु तिलधेनूः स्यात्स दत्त्वा लभते हितम् ॥१॥

विद्याधर[1] उवाच ।

कानि दानानि देव्याया देयानि मुनिसत्तम । कानि पात्राणि देशं वा कालं द्रव्यविधिं वद ॥२॥

तान्यहं श्रोतुमिच्छामि कथयस्व प्रसादतः ।

अगस्त्य उवाच ।

न्यायतो यानि प्राप्तानि शाकान्यपि[2] नृपोत्तम ॥३॥

तानि देव्यानि देव्यायाः कन्यका योषितां सदा । तद्भक्तेषु च विप्रेषु अपरेषु च नित्यशः ॥४॥

विशेषात् प्रावृषि वत्स देवी कामान् प्रयच्छति । देशं नन्दागयाशैलं गंगानर्मदापुष्करम् ॥५॥

वाराणस्यां कुरुक्षेत्रं प्रयागं जम्बुकेश्वरम् । केदारं भीमनादञ्च[3] दण्डकं पुष्कराह्वयम् ॥६॥

सोमेश्वरं[4] महापुण्यं तथा अमरकण्टकम् । कालञ्जरं तथा विन्ध्यं यत्र वासं गुहस्य तु ॥७॥

द्रव्यं भू-हेम-गो-धान्यं तिलवस्त्रघृतादिकम् । विधिना उपवासेन एकान्नं नक्तभोजनम् ॥८॥

शुचिना भावपूतेन क्षान्ति-सत्य-व्रतादिना । अपि सर्षपमात्रोऽपि दातारं तारयेद्ददत् ॥९॥

यः पुनर्विधिना वत्स देवीमुद्दिश्य प्रावृषि । विप्रेषु विप्रकन्यासु तिलादीन् संप्रयच्छति ॥१०॥

तदा संतुष्यते देवी अचिरेण तु विद्यया ।

अतः परं प्रवक्ष्यामि नन्दा देव्याः परं व्रतम् ॥११॥

---

१. विद्याधन ग ।
२. शालान्यपि ग ।
३. भीमदानञ्च ख ।
४. गोमेश्वरम् क ग ।

येन संप्रीयते वत्स अचिरेण महात्मनाम् । हेमोत्थं[1] पादुके कार्ये यथाशक्त्या तु भावितः ॥१२॥
आम्रदूर्वाक्षतबिल्वपत्रैः पूजितमन्ततः । देवीं सम्पूजयित्वा तु स्थंडिले प्रतिमासु वा ॥१३॥
तद्भक्ताय च विप्राय कन्यासु च निवेदयेत् । मुच्यते सर्वपापेभ्यो स्वर्गलोकं च गच्छति ॥१४॥
तनुक्षये महाप्राज्ञो विद्याधरपतिर्भवेत् । कालेन चेहायातः पृथिव्यां नृपसत्तम ॥१५॥
भवते नात्र सन्देहो ब्रह्मणेदं च भाषितम् । प्रजापतिर्वशिष्ठेन कश्यपस्य च दक्षयोः ॥१६॥
तथा त्वमपि राजेन्द्र कुरुष्वेदं पदव्रतम् । महदैश्वर्यकांक्षाय देवीप्रत्यक्षकारिणे ॥१७॥

इति श्रीदेवी पुराणे पदव्रतं नाम द्व्यधिकशततमोऽध्यायः[2]॥

---

१. होमाच्च ख ।     २. इत्याद्ये देव्यवतारे पदव्रतम् क ग ।



# त्र्यधिकशततमोऽध्यायः।

अगस्त्य उवाच ।

अथातः सम्प्रवक्ष्यामि तव दानमनुत्तमम् । येन तुष्टा पुरा देवी शक्रस्य[1] तु महात्मनः ॥१॥
नीलां वा यदि वा श्वेतां पाटलां कपिलां पिवा । अदुःखां वत्सबालाञ्च सुखदोहां गवां नृप ॥२॥
आदाय विधिवद्देवीं पूजयेत् स्रजपंकजैः । धूपञ्च पञ्चनिर्यासं सतुरुष्कागुरूचन्दनम् ॥३॥
दत्त्वा[2] मन्त्रपूजान्तु देव्या नैवेद्यमुपकल्पयेत् । पायसं घृतसंयुक्तं क्षमापयेत् तथा तु ताम् ॥४॥
द्विजाय शिवभक्ताय निवेदयेत् सवत्सगाम् । सहेमवस्त्रकाञ्चयाञ्च महत्पुण्यमवाप्नुयात् ॥५॥
यावत् यद्रोमसंख्यानं तावद्देव्याः पुरे वसेत् । इहत्र विगतपापो जायते नृपसत्तमः ॥६॥
मनुनायं[3] विधिं कृत्वा प्राप्तं लोकमनुत्तमम् । अहं ते कथयिष्यामि शृणु राजन् यथाविधि ॥७॥
शुभां हेममयीं गावं[4] कारयेद्रजतखुराम् । तां वस्त्रप्रावृतां कृत्वा पूजयेद् दनुदर्पहाम्[5] ॥८॥
विचित्रचित्रपुष्पैश्च गन्धधूपनिवेदनैः । तथा क्षमापयेद्देवीं तां गां तत्रैवमानयेत् ॥९॥
देवी त्वदीय आदेशात् तव भक्तेषु दीयते । पुनस्तां विप्रराजाय दापयेत् शिवभाविते ॥१०॥
अक्षयफलकामेन[6] प्रायश्चितविशुद्धये । मनुना चीर्णमासीच्च व्रतमन्यैः नृपोत्तमैः[7] ॥११॥
सप्तपूर्वान्परान्[8] वंशानपि किल्विषसंस्थितान् । उद्धृत्य नयते वत्स देवीलोकमनुत्तमम् ॥१२॥

इति श्री देवीपुराणे हेमगोव्रतं नाम त्र्यधिकशततमोऽध्यायः[9] ।

---

१. शुक्रस्य क ग ।
२. दुग्धपुनन्तु ख .
३. यमुनाया ख ।
४. देवीम् क ग ।
५. गन्धदर्पहाम् ख ।
६. आप्नोति ग ।
७. समाधायामृतोपम् क ग ।
८. सातु ख, सत्य क ।
९. आद्ये देव्यवतारे हेमगोव्रतम् क ग ।

# चतुरधिकशततमोऽध्यायः ।

मनुरुवाच ।

मार्गे रसोत्तमं दद्यात् घृतं[1] पौषे महाफलम् । तिला[2] माघे मुनिश्रेष्ठ धान्याः सप्ताथ फाल्गुने ।१॥
विचित्राणि च वस्त्राणि चैत्रे दद्यात् द्विजोत्तमः ।
वैशाखे यवगोधूमान् ज्येष्ठे तोयभृतान् घटान् ॥२॥
आषाढे चन्दनं देयं कर्पूरञ्च महाफलम् । नवनीतं नभो मासि चैत्र प्रोष्ठ पदे मतम् ॥३॥
गुडशर्करखंडाद्यान् लडडूकानश्विने मुने । दीपदानं महापुण्यं कार्त्तिके यः प्रयच्छति ॥४॥
सर्वकामानवाप्नोति क्रमान्मार्गादुदाहृतान् । धेनूं पौषे घृतां दद्यात् माघे तिलमयीं तथा ॥५॥
ज्येष्ठे तोयमयीं दद्यात् घृत[3]वत्सां महाफलाम् । सुरूपां[4]श्रावणे दद्यात् गां महाफलदायिकाम् ॥६॥
सर्वहेममयैः शृंगैः रौप्यपादैरुदाहृताम् । काँस्यपात्रां सघण्टां तुः किंकिणीरुपशोभिताम् ॥७॥
सयुगां सस्रजां वत्स दातव्या विधिनानया[5] । देवी ब्रह्मेशसूर्यं वा विष्णुं वाथ यथाविधि ॥८॥
स्वभावचित्त सम्पन्नो[6] पूजयित्वा द्विजोत्तम । दातव्या वीतरागे तु कामक्रोधविवर्जितम् ॥९॥
अयाचके सदाचारे विनीते नियमान्विते । गो प्रदाता लभेत् कामान् स्वर्गे लोके मनोरमान् ॥१०॥

अगस्त्य उवाच ।

तिलधेनूं प्रवक्ष्यामि दुर्गा येन प्रसीदति । अपि दुष्कृत कर्माणि यां दत्त्वा निर्मलो भवेत् ॥११॥
प्रत्यक्षा येन देवी तु राज्यपुत्रसुखावहा । भवते त्वचिरेणैव तां शृणुष्व नृपोत्तम ॥१२॥

---

१. व्रतम् क ग ।
२. त्रिशा क ग ।
३ मृतवत्सां ग ।
४. अरुपो ग ।
५. मया क ग ।
६. सुभाव त्रित्तसम्पन्नो ख ।

देवदेवीमनुज्ञाप्य स्नात्वा चैव जितेन्द्रियः । पूजयेत् पुष्प-गंधान्न-धूप-दीप-पवित्रकैः[१] ॥१३॥
हुत्वा हुताशने देवीं तथा द्रोणमयीं कुरु । आढकेन भवेद्वत्स सर्वरत्नविभूषिताम् ॥१४॥
हेमश्रृंगीं शफैः रुप्यै गंधघ्राणां सुशोभनाम् । मुखं गुडमयं कार्यं जिह्वामन्नमयी तथा ॥१५॥
कम्बलं शुक्लसूत्रां[२] तु पादो इक्षुमयास्तथा । ताम्रं पृष्ठे भवेत् तस्या ईक्षणं मणिमौक्तिकैः ॥१६॥
चारुपत्रमयौ कर्णौ दन्तैः फलमयैः शुभैः । नवनीतस्तनां कुर्यात् पुष्पमालामयं कुरु ॥१७॥
पुच्छञ्च मणिमुक्तैस्तु फलै शुचि समर्पयेत् । शुभां वस्त्रयुगच्छन्नां चारुछत्रविभूषिताम् ॥१८॥
ईदृक्संस्थानसम्पन्नां कृत्वा श्रद्धासमन्वितः । काँस्योपदोहनं दद्यात् देव्या मे प्रीयतामिति ॥१९॥
मन्त्राभिमन्त्रितं कृत्वा तद्भक्ताय निवेदयेत् । यावन्ति तिलवस्त्राणि धातुमूलफलस्य च ॥२०॥
विद्यन्ते रजरेणूंषि तावत्स्वर्गे वसेन्नरः । पितॄन् विगतपापाँस्तु कृत्वाधस्थ[३] गतानपि ॥२१॥
प्राप्य देव्याः शुभं लोकं स्थापयेदविचारणात् । तस्मिन् मे रमते वत्स यावदाचन्द्रतारकम् ॥२२॥
तथा कालादिहायातो जायते पृथिवीपतिः । विनय[४]-तेज-सम्पन्नो बहुपुत्रः सुखान्वितः ॥२३॥
पुनर्देव्याव्रते[५] नित्यं पूजने विधिवत्तथा । प्राप्य योगमहेश्वर्यं प्राप्नोति पदमव्ययम् ॥२४॥

इति श्री देवीपुराणे तिलधेनुर्नाम चतुरधिकशततमोऽध्यायः[६] ।

१. विचित्रकै ग ।
२. सूक्ष्मसूत्रम् क ग ।
३. धेनूगतामपि ख ।
४. निर्वैर ख ।
५. रतो क ग ।
६. आद्ये देव्यवतारे तिलधेनुः क ग ।

# पञ्चाधिकशततमोऽध्यायः ।

अगस्त्य उवाच ।

तिलाभावे प्रदातव्या सर्पिर्धेनू विजानता । स्नापयित्वा भवानीन्तु घृतक्षीरैर्यथाविधिः ॥१॥
पूजयेत् स्रजमालाभि नैवेद्यैः सुमनोरसैः । आहरेत्सर्वद्रव्याणि उपकल्पेत तत्र तान् ॥२॥
गव्ये सर्पिषि कुम्भे तु पुष्पमालाविभूषिते । कांस्यपात्रं तथा वस्त्रैस्छादयीत विजानता ॥३॥
हिरण्यगर्भसहितं मणिविद्रुममौक्तिकैः । पादानिक्षुमयान् कुर्यात् कुर्याद्रौप्यांस्तथा शफान् ॥४॥
हेम चक्षुस्तथा शृंगो कृष्णागुरुमयै शुभैः । सप्तधान्यानि तत्पार्श्वे पत्रोर्णेन च कम्बलम् ॥५॥
घ्राणो तगरकर्पूरो स्तनाः फलमया शुभाः । मुखञ्च गुरुक्षीरेण सितां जिह्वां प्रकल्पयेत् ॥६॥
पुच्छं क्षौममयं कार्यं रोमाणि सितसर्षपैः । ताम्रं पृष्ठं विचित्रन्तु स्नेहरूपा मनोरमा ॥७॥

विधिना घृतवत्सं[2] च कुर्याद् लक्षणलक्षितम् ।
एतौ कृत्वा तथा नन्दां पूजयित्वा विधानतः ॥८॥
तद्भक्ताय प्रदातव्या मंगलाशास्त्रपारगे ।
मात्रे[1] सदोपकाराय गृह्ण मेऽनुग्रहाय च ॥९॥
प्रीयतां नन्दिनी देवी मङ्गला चर्चिका उमा ।
इत्युक्त्वा अर्चयेद्धेनूं कृत्वा नन्दामनोनुगाम् ॥१०॥
अनेन विधिना देया यवशालीक्षूकल्पिता ।
हेमरत्नान्नवस्त्रा वा देया गौर्विधिना नया ॥११॥

---

१. सप्तधान्यौ च ग ।
२. घृतरत्नं ख ।
३. साते मनौपकाराय क ग ।

मुच्यते सर्वपापेभ्यः सर्वकामानवाप्नुयात् । यत्र क्षीरवहा नद्यो यत्र सर्पिर्वहा ह्रदाः ॥१२॥
पयसा कर्दमा यत्र तस्मिन् लोके महीयते । तेषां स्वामित्वमाप्नोति मुदया परया युतः ॥१३॥
दिशां[1]पूर्वापरांस्तात आत्मनस्त्वेकविंशतिः । भूयः पृथ्वी शतामेति[2] इहलोके समागतः ॥१४॥

सकामानामियं व्युष्टिः[3] ततस्तावदुदाहृता ।
देव्या लोकमवाप्नोति निष्कामो घृतधेनुदः[4] ॥१५॥

इति श्री देवीपुराणे घृतधेनुर्नाम पञ्चाधिकशततमोऽध्यायः[5] ।

---

१. दश पूर्वा परास्तत्र ख ।
२. पृथ्वीगताम् ख ।
३. वृद्धिः ग ।
४. धेनूभिः ख ।
५. आद्ये देव्यवतारे घृतधेनूः क ग ।



# षड्धिकशततमोऽध्यायः ।

अगस्त्य उवाच ।

तोयधेनूं शृणु वत्स यथा देवी प्रसीदति । कुम्भं तोयसमापूर्णं रत्नवस्त्रयुगान्वितम्[1] ॥१॥
समस्तबीजसंयुक्तं दूर्वापल्लव शोभितम् । मुरावालमुशीरं च कुष्टामलकचन्दनैः ॥२॥
मालाच्छत्रमुपानहं तिलपात्रैश्चतुर्युतम् । दधिक्षौद्रघृतं पात्रं विधानमुपकल्पयेत् ॥३॥
वत्सकं पूजयेद्वत्स कृतं हविमयं बुधः । देवीमभ्यर्च्य विधिवत् सोपवासो च नक्तवान् ॥४॥
देव्या भक्त्या प्रदातव्यं सर्वकामानवाप्नुयात् । जयारिसूदनी देवी देवानां भयनाशिनी ॥५॥
वेदमाते वरे दुर्गे सर्वगे[2] शुभदे नमः ॥६॥
अनेन वत्स मन्त्रेण तां दानायाभिमन्त्रयेत् । देवी मे प्रीयतां नित्यं यथेप्सित[3] फला शिवा ॥७॥

इति श्री देवीपुराणे जलधेनूर्नाम षडधिकशततमोऽध्यायः[4] ।

---

१. अत्र वत्स युगान्वितम् क ग । २. सर्वांग ग ।
३. रथे ख । ४. जलधेनूः ग ।



# सप्ताधिकशततमोऽध्याय : ।

मनुरुवाच ।

स्वयम्भुरेष भगवान् वेदोद्गीतः पुरा त्वया ।
शिवाद्याः ऋषिपर्यन्ताः स्मार्त्ता[1] वास्थान कारकाः ॥१॥
कथं माता[2] भवेद्देवी एतत्कौतुहलं मम ॥२॥

ब्रह्मोवाच ।

ज्ञानशक्तिः क्रिया धेनूर्दैव्यारूपाः प्रकीर्तिताः । मातृका ज्ञानशक्तिस्तु क्रिया सा तमरूपिणी ।३॥
वामाद्या सा त्रिधा भूत्वा ज्येष्ठा रौद्रा ऋजुस्थिता ।
कुंडली त्रिकटाकारा द्वौ द्वौ विन्दुसमन्विता ।।४॥
सा प्रसूताष्टवर्गाणि स्वरा वसो द्विधा पुनः । अनुनासांश्च घोषांश्च एकोना शतमर्द्दितान् ॥५॥
मातरा तस्य वर्गस्थां द्दष्टव्यः प्रथमः शिवः । षोडशान्तविभक्तस्तु अकारे संव्यवस्थितः ॥६॥
अकारे[3]ब्रह्मरूपेण शिवरूपेण चापरे । विष्णु-स्कन्द-यम-शक्र-र्चचिकान्तर-संस्थिता ॥७॥
विन्दौ[4]चन्द्रार्कसूर्यौ तु ततः सा शतधा मता । क्रियारूपा भवेद्देवी वेदमाता शृणुस्व ते ॥८॥
ओंकारप्रणवा वेदा गायत्री वेदसम्भवा[5] । षडंगास्ते समाख्याता उपांगाश्चतुरोऽपरे ॥९॥
छन्दोलक्षणसंयुक्ता मातृका गर्भजा विदुः ॥१०॥

मनुरुवाच ।

किं वेदो रूपमानेन उपांगं संख्याभेदतः । भक्तं किं वेदरूपन्तु तन्मे ब्रूहि समासतः ।११॥

---

१. स्मर्त्तारो कारका ख ।
२. माता क ग ।
३. ककारे क ग ।
४. बिन्दौ बह्नयर्क सूर्यौ तु क ।
५. वेदी गायत्री बर्ग सम्पदा क । देवी ख ।

ब्रह्मोवाच ।[1]

एक एव भवेद्वेदश्चतुर्भेदः पुनः कृतः । शाखार्थमल्पसत्त्वानां ग्रहणा[2]यातिविस्तरात् ॥१२॥
संविभक्तो मया वत्स ऋग्यजुः सामाथर्वणः । अत्र भेदास्तु ऋग्वेदे दश चैव प्रकीर्तिता ॥१३॥
आश्लेषाः संख्या चर्चाश्च श्रावकाश्चर्चकास्तथा । श्रावणीया चक्रमा च पुटक्रमवटक्रमाः ॥१४॥
दंडश्चेति समासेन पुनरेकैव पारगाः । शाखाश्च विविधा भूयः शाकला ब्रह्ममातृकाः[3] ॥१५॥
तेषामध्ययनं प्रोक्तं मंडलाश्चतुषष्टिकाः[4] । वर्गाणां परिसंख्यातं चतुर्विंशशतानि च ॥१६॥
ऋचां दशसहस्राणि ऋचां पञ्चशतानि च । ऋचामशीतिपादश्च[5] तत्र पारणमुच्यते ॥१७॥
ऋग्वेदे[6] तु भवेत्संख्या यजुर्वेदस्य श्रूयताम् । षडशीतिविभेदेन मया भिन्नं शिवाज्ञया ॥१८॥

दशधा चरका तत्र कारका विद्रधिषया[7] ।
कठाप्राच्यः कठाश्चैव कपिष्ठलकठास्तथा ॥१९॥

चारायणीयाः श्वेताश्च श्वेतातारा मैत्रायणीया । पुनः सप्तविभेदेन मैत्रायण्यः प्रकीर्तिताः ॥२०॥
मानव-दुन्दुभ-वाराहाश्छागेयाः हारिद्रवीयाः । सामसायनीयाश्च[8] तेषामध्ययनमुच्यते ॥२१॥
अष्टादशसहस्राणि पठन् शाखाविदो भवेत् । द्विगुणं[9]पदपाठी यस्त्रिगुणं क्रमपारगः ॥२२॥
षडंगानि यदाधीत्य षडंगविदुच्यते । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् ॥२३॥
षडंगानि भवन्त्येतान्युपांगानि शृणु कथ्यताम् । प्रतिपदमन्त्रपदं[10] छन्दो भाषा मीमांसा च ॥२४॥
न्यायतर्कसमायुक्ता उपांगाः परिकीर्तिताः । परिशिष्टाश्च संख्याताः अष्टादश शृणुस्व तत् ॥२५॥
यूपलक्षणप्रतिष्ठा तु वाक्यं संख्या चरणव्यूहः । श्राद्धकल्पश्च सूक्तानि पारिषदमृग्यजुश्च ॥२६॥
अष्टकापूरणञ्चैव प्रवराध्यायांग[11] षोडश । क्रतुसंख्याभिगम्यो यज्ञ पार्श्वानुग्रहश्रौत्रिकम् ॥२७॥

---

१. क ग पुस्तके नास्ति ।
२. ग्रहाणाम् क ।
३. चाक्षु मांडका क ग ।
४. चतुः सप्तति क ग ।
५. मानमशीतिपादञ्च ख ।
६. आद्ये क ग ।
७. हरिद्रवीया क ग ।
८. सामसीमापनीयाश्च क ।
९. विगुणम् क ग ।
१०. अनुपदम् क ।
११. शास्त्रम् ख ।

व्रतञ्च पशवो होमं[1] कूर्मलक्षणसंयुताः । कथिताः परिशिष्टास्तु ऊनविंशा महामुने ॥२८॥
कठानां च यूपान्याहुश्चत्वारिंशच्चतुत्तराः । प्राच्योदीच्य निरुक्तं च वाजसनेयश्च पंचधा ॥२९॥
दशभेदविभिन्नास्तु प्रष्टव्या मुनिपुंगवा[2] । जाबाला बौधेया काण्वा माध्यन्दिनाश्च शारवेयाः ॥३०॥

सपायिनां[3] कपालाख्या पौण्डरवत्तवारिकपराशराः ।
गौणपा[4] बौधेया अयोध्यायेयाश्च तेषामध्ययनानि च ॥३१॥

द्वे सहस्रे शते न्यूने वेदवाजसनेयके । ऋग्गणः परिसंख्यातस्ततोऽन्यानि यजूंषि च ॥३२॥
अष्टौ सहस्राणि शतानि चाष्टाशीतिरन्यत्राधिके । यजूंषि तत्प्रमाणानि यजुषादि केवलम् ॥३३॥
शश्वत्क्रियं[5] परिसंख्यातं ब्राह्मणं च चतुर्गुणम् । एतत् त्वञ्च विजानीयात् तैत्तिराद्विविधा पुनः ३४।
औखेयाः खंडिकेयाश्च चण्डिका पंचधा पुनः । कालकेया बौद्धायनीया हिरण्यकश्यास्तथा परे ॥३५॥
भारद्वाजापस्तम्बाश्च तेषां भेदाः प्रकीर्तिताः । अध्ययनं सौप्तिकं चैव प्रवचनीयं तथापरम् ॥३६॥
सामवेदस्तु विस्तीर्णः सहस्रभेदैः कीर्तितः । [6]अनध्यायेष्वधीयन्ते तदा इन्द्रेण धीमता ॥३७॥

वज्रेण निहताः शेषान् वक्ष्यामि शृणु भो द्विज ।
[7]नारायणीयाः कौथुमाश्च तत्र भेदाः पुनः शृणु ॥३८॥
नारायणीया सप्तैव उग्राद्या नयनावरा वेदमाता[8] ।
कालरया[9] महाकालरयालंघन विद्युता ॥३९॥
कौथुमानामपि[10] सप्त असुरा बादरायणा ।
वैनेया बौधेया अयौधेयाश्च तेषामध्ययनानि च ॥४०॥
प्रांजलाद्वेनभृत्याश्च प्राचनयोज्यानीकायना ।

---

१. वसवोत्थानम् क ।
२. मुनिपुंगानां क ।
३. स्वपाठिनां क ।
४. बौलपा क ।
५. सशुक्रियं क ग ।
६. पद्यमिदं क पुस्तके नास्ति ।
७. राणायणीया ग ।
८. ख पुस्तके एव केवलम् ।
९. कालवया महाकालवयानन्दनविद्युताः ख ग
१०. कीर्त्यमानाम् ख ।

अध्ययनमपि तेषां तु । अष्टौ[1] सामसहस्राणि सामानि च चतुर्दश ॥४१॥
अष्टौ शतानि नवतिर्दश सहस्राणि बालिखिल्याः । ससुपर्णाश्च प्रेष्याश्च एतत्सामगणं[2] स्मृतम् ॥४२।
अथ अथर्ववेदस्य नवभेदा भवन्ति च । [3]पिप्पलादमोदा मोदा च भूतापनीया च तथा ॥४३॥
याहनो ब्रह्मवलो च शौनको कुनखो तथा । देव[4]दर्शिश्चापि विद्यास्तेषामध्ययनं शृणु ॥४४॥
पञ्चकल्पा भवन्ति ।
नक्षत्रकल्पो वैतानश्च संहिताविधिः आंगिरसः । शान्तिकल्पश्च पंचैते अथर्वस्य भवन्ति च ।४५॥
सर्वेषामेव वेदानामुपवेदान् शृणुस्व ते । ऋग्वेदस्यायुर्वेदो यजुर्वेदस्य धनुस्तथा ॥४६॥
सामवेदस्य गान्धर्वमर्थशास्त्रमथर्वणः । ऋग्वेदस्यात्रेयं गोत्रं सामवेदं विदुर्मुने ॥४७॥
काश्यपं यजुर्वेदन्तु रुद्रवेदन्तु तत्स्मृतम् । सामवेदोऽपि गोत्रेण भरद्वाज पुरन्दरः ॥४८॥
अधिदेवं विजानीयात् वैतानन्तु[5] अथर्वणे । ब्रह्मदेवं विजानीयात् रूपाण्यस्माच्छ्रणुस्व ते ॥४९॥
ऋग्वेदः पद्मपत्राक्षः प्रलम्बजठरः सुविभक्तग्रीवः । कुंचितकेशश्मश्रुः प्रमाणेनापि वितस्तिपञ्च ।५०।
स राजते मौक्तिकवरोऽथ पूज्यो वरप्रदो भक्तियुते द्विजाय ॥५१॥
यजुर्वेदः पिंगलाक्षः कृषमध्यः स्थूलगलः कपोलस्ताम्रायत्तवर्णः कृष्णचरणः ॥
प्रादेशात् षड्दीर्घत्वेन लिंगोऽथवा चित्रे पूज्य सर्वकामान्वाप्नुयात् ॥५२॥
सामवेदो नित्यं स्रग्वी सुव्रतः शुचिः शुचीवाससः । क्षमी दान्तश्चर्म च दण्डी काञ्चननयनः ॥५३॥
आदित्यवर्णो वर्णेन षड्रत्नमात्रस्तथा । ताम्रेऽथ मणि इन्द्राख्ये पूजयन् शुभदो भवेत् ॥५४॥
अथर्ववेदस्तीक्ष्णश्चण्डः क्षामरूपो विश्वात्मा विश्वकृत् ।
[6]क्रूर ऊर्ध्व ज्वालावान् क्षुद्रकर्मा च शास्त्र कृतोन्नामी
नीलोत्पलवर्णो वर्णेन स्वदारतुष्टः परस्त्रियार्थश्च । ॥५५॥
सोवर्ण पद्मरागे वा रुद्राख्ये[7] पूजयन्मुने । सर्वकामानवाप्नोति अथर्व विहितानि च ॥५६॥

---

१. माससहस्राणि मासानि क ।
२. सामगुणं स्मृतम् क ग ।
३. क पुस्तके पंक्तिद्वयं नास्ति ।
४. देवदर्शाः क च ।
५. वैतालम् क ग ।
६. पद्यमिदं क ग पुस्तके नास्ति ।
७. रूद्राक्षे क ।

वेदानां चैव उत्पत्ति स्वरवर्ण समुद्भवा । शिवभक्ति समायोगात् तवाख्याता मया मुने ॥५७॥
यद्देवनामरूपन्तु गोत्रं वेदप्रमाणजम् । वर्णं वर्णयते तात तस्य पुण्यफलं शृणु ॥५८॥
यावन्ति वेदगीतानि पुण्ययज्ञ व्रतानि च । तावन्ति श्रवणादस्य प्राप्नुयात् भक्तिभावतः ॥५९॥
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् । अविद्वान् विद्यां प्राप्नोति दुःखाद् दुःखी प्रमुच्यते ॥६०॥
पठित्वा सर्ववेदानां सम्मतो द्विजवल्लभः । भवते नात्र सन्देहो देवी च वरदा सदा ॥६१॥

इति श्री देवीपुराणे वेदोत्पत्तिस्मरणीय चरणव्यूह समाप्तिर्नाम सप्ताधिकशततमोऽध्यायः[3] ।

३. आद्ये वेदोत्पत्तिस्मरणीयं चरणव्यूहं समाप्तम् क ग ।



# अष्टाधिकशततमोऽध्यायः ।

मनुरुवाच ।

षडंगानीह वेदानां मया ज्ञातानि पूर्वशः । चातुर्वण्यहितार्थाय उपांगं मम कथ्यताम् ॥१॥

ब्रह्मोवाच ।

उपागांनां च अंगांनामायुर्वेदं वरं[1] विदुः । धर्मार्थकाममोक्षानां स चापि फलदायकः ॥ २ ॥

ज्योतिः शास्त्रं द्वितीयन्तु दृष्टादृष्टप्रसाधकम् । तस्मात् तदुच्येत विप्र संक्षेपादवधारय ॥ ३ ॥

पुरा कैलाशशिखरे भगवन्तं पुनर्वसुम् । उपासतां महर्षीनां प्रादुरासीदियं कथा ॥ ४ ॥

आत्मेन्द्रियमनोऽर्थानां योऽयं पुरुषसंज्ञकः । शशि[2] वस्यामयानाञ्च प्रागुत्पत्तिविनिश्चये ॥ ५ ॥

तदन्तरं काशिपतिर्वामको वाक्यमर्थवत्[3] । व्याजहार ऋषिमिति अभिसृत्याभिवाद्य च ॥ ६ ॥

किं नु भोः पुरुषो यज्ञस्तेज[4] स्तस्यामयाः शुभा । न चेत्युक्ते नरेन्द्रेन प्रोवाचर्षीन् पुनर्वसुः ॥ ७ ॥

सर्वे एवामितज्ञाना ज्ञानविच्छिन्नसंशयाः । भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम् ॥ ८ ॥

पारीक्षस्तत् परीक्ष्याग्रे मौद्गल्यो वाक्यमब्रवीत् । आत्मजः पुरुषोगा[5] श्वात्मजाः कारणं हि सः ।९॥

स चिनोत्युपभुंक्ते च कर्म कर्मफलानि च । न स्मृते चेतनाधातोः प्रवृत्तिः सुखदुःखयो ॥१०॥

शरलोमा[6] तु नेत्याह न ह्यात्मानमात्मना । योजयेद् व्याधिभिर्दुःखैः दुःखद्वेषी कदाचन ॥११॥

रजस्तमोभ्यान्तु मनः परीतं सत्वसंज्ञकम् । शरीरस्य समुत्पत्तौ विकाराणाञ्च कारणम् ॥१२॥

व्याधयो विदस्तु[7] नेत्याह न ह्येकं कारणं मनः ।
नार्त्तशरीरं रोगाणां नराणां मनसः[8] स्थितिः ॥१३॥

---

१. परं ख ।
२. काशिवस्याम् ग ।
३. अब्रवीत् ग ।
४. तज्जास् ख ।
५. रोगाः ख ।
६. सवलो मारुत ग ।
७. नापोचिदस्तु क ।
८. नर्त्ते शरीराच्छारीरा रोगानां मनसः स्थितिः च ।

रजसानि तु भूतानि व्याधयश्च पृथग्विधाः । आपो हि रसवत्यस्ताः स्मृता निर्वृत्तिहेतवः ॥१४॥
हिरण्याक्षस्तु नेत्याह न ह्यात्मा रजसः स्मृतः । नातिन्द्रियं मनः सन्ति रोगा शब्दादिजास्तथा ॥१५
षड्धातुजस्तु पुरुषो रोगा षड्धातुजास्तथा । राशिः षड्धातुजो ह्येष सांख्यैराद्यैःपरीक्षितः ॥१६।
तथा ब्रुवानं कुशिकमाह तमेति शौनक । कस्मात् मातापितृभ्यां हि विना षड्धातुजो भवेत् ॥१७॥
पुरुषः पुरुषादे गोर्गोरश्वादश्वः प्रजायते । पैत्र्यौ मेहादयश्चोक्ता रोगास्तु एव कारणम् ॥१८॥
भद्रकाप्यस्तु नेत्याह न शक्तोऽशक्तात् प्रजायते । मात्रापित्रोश्च ते पूर्वमुत्पत्तिर्नोपपद्यते ॥१९॥
कर्मजस्तु मतो जन्तुः कर्मजास्तस्य चामयाः । न ह्येते कर्मणा जन्म रोगानां पुरुषस्य च ॥२०॥
भरद्वाजस्तु नेत्याह कर्त्ता पूर्वं हि कर्मणः । दृष्टं न चाकृतं कर्म यस्य स्यात् पुरुषः फलम् ॥२१॥
भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च । खरद्रुव चलोत्पत्त्वं तेजोहन्तानां यथैव हि ॥२२॥
कात्यायनस्तु नेत्याह न ह्यारम्भः फलं भवेत् । भवेत् स्वभावाद्भावानामसिद्धः सिद्धिरेव वा ॥२३॥
स्रष्टो त्वमतिसंकल्पो ब्रह्मापत्यं प्रजापतिः । चेतना चेतनस्यास्य जगतः सुखदुःखयो ॥२४॥
तन्नति भिक्षुरात्रेयो न ह्यपत्यं प्रजापतिः । प्रजाहितैषी सततं दुखैर्युज्यादसाधुवत् ॥२५॥
कालजस्त्वेन पुरुषः कालजास्तस्य चामया[६] । जगत् कालवशं सर्वं कालः सर्वत्र कारणम् ॥२६॥
विवदतामुवाचेदं तथर्षीणां पुनर्वसुः । मैवं वोचत तत्त्वं हि दुष्प्राप्यं पक्षसंश्रयात् ॥२७॥
वादान् सम्प्रतिवादांश्च वदन्तो निष्चितानिव । पक्षान्तं नैव गच्छति तिलपीडकवदगतौ ॥२८॥
मुक्त्वैनं वादसंचर्षमध्यात्ममनुचिन्त्यताम्[७] । नाविधूते तमक्षेपे ज्ञानमेतद् प्रवर्त्तते[८] ॥२९॥
कर्म वाचेतनोऽमूर्तः प्रकृतमूर्त्तेऽस्थचेतन । पुरुषोऽचेतनोऽमूर्त्तो रसाद्याः सर्वचेतनाः ॥३०॥
कालो नित्योदितोऽमूर्त्तः स च हेतुः कथं भवेत् । न हि आत्मानं दुःखाद्यैः प्रेक्षापूर्वं समाचरेत् ।३१।

---

१. न हि मातापितृभ्यां हि विनाशित्वा भुजो भवेत् क ग ।

२. तत्र काव्यस्तु नेत्यादे न ह्यर्थोऽर्थं प्रजायते क ग ।

३. चलोष्ठत्वं ग ।

४. पृष्टत्वाम् ग ।

५. दुःखैर्दुःखाद् असाधुवत् क ग ।

६. चाशयाः क ।

७. अनुचिन्तितम् क ।

८. न विवृत्ते तमस्कंदे क्षेपे ज्ञानं प्रवर्त्तते क ग ।

शकटैर्बलिवर्दैश्च स्वतो[1] गत्वा न युज्यते। तथा प्रधानपुंसाद्यामन्यो योक्ता विधीयते ॥३२॥
सा च शक्तिः शिवस्योक्ता चर्चिकाद्या महामुने। द्रष्टव्या सर्वविद्यासु शृणु वेदविदांवर ॥३३॥
येषामेव हि भावानां संपत्संजनयेन्नरः। तेषामेव विपद्व्याधीन् विविधान् समुदीरयेत् ॥३४॥

अथात्रेयस्य भगवतो वचनमनुनिशम्य पुनरेव वामकः काशिपतिरुवाच भगवन्तमात्रेयम्। भगवन्! सम्पन्निमित्तजस्य पुरुषस्य विपन्निमित्तजानाञ्च रोगानां किमभिवृद्धि कारणमिति ॥३५॥

भगवान् आत्रेय उवाच।

हिताहारोपयोग[2] एव पुरुषस्याभिवृद्धि करो भवेत्। अहिताहारोपयोगः पुनर्व्याधिकरो भवेत् ॥३६।

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच।

कथमिदं भगवन् हिताहितानामाहारजातानां लक्षणमनपवाद[3] मभिजानीयामो वयम्।

हितसमाख्यातानां चैवाहारजातानामहितसमाख्यातानां च मात्रा-काल-क्रिया-भूमि-देह-दोष पुरुषोऽवस्थान्तरेषु विपरीतकारित्वमुपलभामहे इति ॥३७॥

इति श्री देवीपुराणे आयुर्वेदोपोद्घातो नामाष्टाधिकशततमोऽध्यायः[4]।

---

१. मूतो ग।
२. एक एव क ग।
३. अनपवर्ग क ग।
४. आयुर्वेदोत्पत्तिः क ग।



# नवाधिकशततमोऽध्यायः ।

अगस्त्य उवाच ।

एवं पृष्ठस्तु शिष्येन उवाच भगवान् कविः । सर्वेषामृषिमुख्यानां प्रवरोऽत्रिनन्दनः ॥१॥

तमुवाच भवानात्रेयः-यदाहारजातमग्निवेषसमाँश्चैव शरीरधातून् प्रकृतौ स्थापयति विषमाश्च समीकरोत्येतद्धितम् विद्धि विपरीतं वरितामित्येतद्धि हिताहितलक्षणमनपवादं भवति[1] ॥२॥

एवं वादिनश्च भगवन्तमात्रेयमग्निवेष उवाच । भगवन् न त्वेतदेवमुपदिष्टं भूयिष्ठ कल्पा सर्वभिषजो विज्ञास्यन्ति ॥३॥

आत्रेय उवाच ।

येषां विदितमाहारतत्त्वं[2] गुणतो द्रव्यतः कर्मतः सर्वावयवतो मात्रादयश्च तावान्तु एतदेवमुपदिष्टं विज्ञातुमुत्सहेरन् ॥४॥

यथा तु खल्वेतदुपदिष्टं भूयिष्ठकल्पाः सर्वभिषजो विज्ञास्यन्ति, तदेतदुपदेक्ष्यामो मात्रादीन् भारानुदाहरन्तः ॥५॥

तेषां हि बहुधा विकल्पा भवन्ति । आहारविधिविशेषाँस्तु खलु लक्षणतश्चावयवतः चानुव्याख्यास्यामः । तद्यथा—

आहारत्वमाहारस्यानेकाविधमर्थभेदात् । स पुनर्द्वियोनिः स्थावरजंगमात्मकत्वात् ॥६॥

द्विविधः प्रभावो हिताहितोदकाविशेषात् । चतुर्विधि उपयोगः पानाशन-भक्ष्यलेहजो-पयोगात् ॥७॥

---

१. हिताहितमनपरा भवति क ग ।     २. विदिततत्त्वमाहारम् ग ।

षडास्वादो रसभेदतः षड्विधत्वात्। विंशतिगुणो गुरु-लघु-शीतोष्ण-स्निग्ध-रुक्ष-तीक्ष्ण-स्थिर-सरस-मृदु-कठिन-विषद-पिच्छिल-श्लक्ष्म-खर-सूक्ष्म-सार्द्र-द्रव्यानुगमात् ॥८॥

अपरिसंख्येयविकल्पो द्रव्यसंयोग करणबाहुल्यात्। तस्य ये ये विकारावयवा भूयिष्ठमुपयुज्यन्ते भूयिष्ठकल्पाणाञ्च मनुष्याणां प्रकृत्येव हिततमाँश्चाहिततमाँश्च ताँस्तान् यथावदनुव्याख्यास्यामः।

इति श्री देवीपुराणे शिष्यसम्बोधनं नाम नवाधिकशततमोऽध्यायः[1]।

---

१. शिष्यसम्बोधनं क ग।



# दशाधिकशततमोऽध्यायः ।

आत्रेय उवाच ।

तद्यथा--लोहितशालयः[1] शुकधान्यानां पथ्यतमत्वे श्रेष्ठतमा भवन्ति ।

मुद्गाः शमीधान्यानाम्, आन्तरीक्षमुदकानाम्, सैन्धवं लक्षणानाम्, जीवन्तीशाकं शाकानाम्, ऐणेयं मृगमांसानाम्, लावः पक्षिणाम्, गोधा विलेशयानाम्, रोहितो मत्स्यानाम्, गव्यं सर्पिः सर्पिषा, गौः क्षीरं-क्षीराणाम्, तिलतैलं स्थावरस्नेहानाम्, वराहवसा आनूपमृगवसानाम्, चुलुकी वसा मत्स्यवसानाम्, राजहंसवसा जन[2]चरविहगवसानाम्, कुक्कुटवसा विष्किर शकुनि वसानाम्, अजाभेदः शाखादमेदसाम्, शृङ्गवेरं कन्दानाम्, मृद्वीका फलानाम्, शर्करा इक्षुविकाराणामिति प्रकृत्यैव हिततमानामाहारविकाराणामृ प्रधानतमानि द्रव्याणि व्याख्यातानि भवन्ति ॥१॥

अहिततमानामप्युपदेक्ष्यामः :--

यवकाः शुकधान्यानामपथ्यत्वे निकृष्टतमाः[3] भवन्ति, माषा शमीधान्यानाम्, वर्षानादेयमुदकानां ऊषरं लवणानाम्, सर्षपशाकं शाकानाम्, गोमांसं मृगमासानाम्, व्यालकपोतं[4] पक्षिणाम्, भेको-बिलेशयानाम्, चिलिचिमो मत्स्यानाम्, आविकसर्पिः सर्पिषाम्, अविक्षीरं क्षीराणाम्, कुसुम्भ[5]स्नेहः स्थावरस्नेहानाम्, महिषवसानूप मृगवसानाम्, कुम्भीरवसा मत्स्य वसानाम्, काकमण्डूकवसा जलचर-विहगवसानाम्, चरकवसा विष्किर शकुनिवसानाम्[1], हस्तिभेदः शाखादमेदसाम्, मूलकं कन्दानाम्,

---

१. लोहितशोणिताः ग ।
२. जलचर ग ।
३. प्रकृष्टतमोः ग .
४. कागकापोतम ग ।
५. कुम्भस्नेहः ग ।
१. विक्षिवशकुनि ग ।
२. कूष्माण्डग्रहाणाम् ग ।
३. ग्रहोपशंमनं समनीयानाम् ग ।
१. कटुतेलम् क ग ।

लकुचं फलानाम्, फानितमिक्षुविकाराणामिति प्रकृत्यैव अहिततमानामाहार विकाराणाम्, निकृष्टतमानि द्रव्याणि व्याख्यातानि भवन्ति ॥२॥

हिताहिताहारवरमाहारविकाराणामतो भूयः कर्मौषधानाञ्च प्राधान्यतः सानुबन्धानि द्रव्याणि अत्र व्याख्यास्यामः--तद्यथा :--

शिवानुस्मरणं भूतजरापहराणाम्, मातरो बालग्रहाणाम्, चामुण्डा शाकिनीनाम्, विष्णुः कुण्डग्रहाणाम्,[1] ब्रह्मा सत्यग्रहाणाम्, दुर्गा महाग्रहाणाम्, उमा प्रीतिकराणाम्, स्कंदो सर्वग्रहाणाम्, विनायको विघ्नग्रहानाम्, आदित्यः कुष्ठोपशमनानाम्, सोम औषधीनाम्, दक्षा-खनौ आयुर्वेदसिद्धानाम्, मन्त्रस्नानं सर्वस्नानाम्, प्रातर्हवनं शान्तीनाम्, रोचनादधिसर्पिर्मंगलानाम्, तिथिश्रवणं सर्वदुःस्वप्नापहानाम्, तिलदानं ग्रहोपशमनीयानाम्[2], गोस्पर्शनमायुवर्धनानाम्, नग्नकषाय दर्शनमनायुष्यानाम्, सतताध्ययनं बुद्धिमेधाकराणाम्, पुत्रत्वं वंशवृद्धिकराणाम्, अन्नं वृद्धिकराणाम्, श्रेष्ठमुदकमास्वादकराणाम्, सुरा श्रमहराणाम्, क्षीरं जीवनीयानाम्, मांसं वृंहणीनाम्, लवण-मन्त्रव्यरुचिकराणाम्, अम्लं हृद्यानाम्, कुक्कुटो वल्यानाम्, नक्ररेतो वृष्याणाम्, मधुश्लेष्मपित्तप्रश-मनीयानाम्, सर्पि वातपित्तप्रशमनानाम्, तैल[3] वातश्लेष्म प्रशमनानाम्, वमनं श्लेष्महराणाम्, विरेचनं पित्तहराणाम्, वस्तिर्वातहराणाम्, स्वेदो मार्दवकराणाम्, व्यायामः स्थैर्यकराणाम्, व्यवायः कार्श्यकराणाम्, क्षारः पुंस्त्वोपघातिनाम्, तिन्दूकमनन्नद्रव्यरुचिकराणाम्, आमकपित्थक-अकच्र्यानाम्, आविकसर्पिः अक्लिद्यानाम्, अजाक्षीरं शोषघ्नशून्यमात्मारक्तसांग्राहिक रक्तपित्त प्रशमनानाम्, अविक्षीरं श्लेष्मपित्तोपचयकराणाम्, महिषीक्षीरं स्वप्नजननानाम्, मन्दकं मद्यभियान्दकराणाम्, गवेधुकान्नं कर्शनीयानाम्, दधि अतिस्पंदकराणाम्, उद्दालकान्नं विरक्षणीयानाम्, इक्षुर्मूत्रजननानाम्, यवाः पुरीषजननानाम् जाम्बवं वातजननानाम्, शष्कुल्यः श्लेष्मपित्तजननानाम्, कुलथा अम्लपित्तजननानाम्, माषा श्लेष्मपित्तजनना-नाम्, मदनफलं मदनस्थापनानुवासनोपयोगिनाम्, त्रिवृत् सुखविरेचकानाम्, चतुरंगुलं मृदुविरेचकानाम्, स्नुहीक्षीरं[4] तीक्ष्णविरेचनानाम्, प्रत्यक्पुष्पी शिरोविरेचनानाम्, विडंगं

---

१. ग पुस्तके नास्ति ।
२. नवंधातुराणाम् क ग ।
३. क ग पुस्तके नास्ति ।
४. क ग पुस्तके नास्ति ।

कृमिघ्नानाम्, शिरीषो ताक्ष्यों विषघ्नानाम्, खदिरः कुष्ठघ्नानाम्, रास्ना वातहराणाम्, आमलकं वयः स्थापनानाम्, हरीतकी पथ्यानाम्, एरण्डमूलं वृष्यवातहराणाम्, पिप्पलीमूलं दीपनीयपाचनीयप्रशमनानाम्, चित्रकमूलं दीपनीयपाचनीयानाम्, पुष्करमूलं हिक्का-श्वास-कास-पार्श्व-शूलहराणाम्, उदीच्य निर्वापण-दीपनीय-पाचनीय-छर्द्दतीसारहराणाम्, कट्वंगं संग्राहक-पाचनीय-दीपनीयानाम्, अनन्ता संग्राहक-रक्त-पित्त-प्रशमनानाम्, अमृता संग्राहक-वातहर-दीपनीय-श्लेष्म-शोणित-विबन्ध प्रशमनानाम्, बिल्वं संग्राहक-दीपनीय-वात-कफ प्रशमनानाम्, अतिविषा दीपनीय पाचनीय-संग्राहक-सर्वदोष-हराणाम्, उत्पल-कुमुद-पद्म-किञ्जलका संग्राहक शोणित-पित्तादि-योग-रक्त-पित्त-प्रशमनानाम्, दुरालभा पित्त-श्लेष्म-प्रशमनानाम्, गंधप्रियंगु प्रशमनानाम्, कुटजत्वक् श्लेष्म-पित्त-रक्त-सांग्रहिकोपशोषणानाम्, काश्मर्यफलं संग्राहक रक्त-पित्त-प्रशमनानाम्, पृश्निपर्णि सांग्राहिक वातहर दीपनीय वृष्याणाम्, विदारिगन्धा वृष्यसर्वदोषहराणाम्, वला सांग्राहिक-वल्य-वातहराणाम्, गोक्षुरको मूत्र-कृच्छ्रानिल हराणाम्, हिंगु निर्यास-छेदनीय-दीपनीय-अनुलोमिक-वात-कफ-प्रशमनानाम्, अम्लवेतसो भेदनीय-आनुलोमिक-श्लेष्म-प्रशमनानाम्, यावशूकः संग्रहणीय-पाचनीय अर्शोघ्नानाम्, तक्राभ्यासो श्वासग्रहणीय दोषात् घृतव्याप्त प्रशमनानाम्, क्रव्याद् मांसाभ्यासो ग्रहणी-दोष शोषोशोघ्नानाम्, क्षीरघृताभ्यासो रसायनानाम्, समघृतसक्तुप्राशाभ्यासो वृष्योदा-वर्त्तहराणाम्[1], (तैलगण्डूषाभ्यासो दन्तवलरुचिकराणाम्, चन्दनोडुम्बरं मोहनिर्वापणोपलेपनानाम्, रास्नागुरुनी शीतापनय प्रलेपनानाम्, लोमज्ज-कोशीरं-दाह-त्वग्दोष-स्वेदापनयन-प्रलेपनानाम्, कुष्ठं वातहराभ्यंगोपानहयोगिनाम्, मधूकं चक्षुष्य-वृष्य-केश्य-कन्ठ्य-वर्ण्य-विरजनीय-रोपनीयानाम्, वायुः प्राणसंज्ञा–प्रधानहेतूनाम्, अग्निः आम-स्तम्भ-शीत-शूल-उद्व वन-प्रशमनानाम्, जलं स्तम्भनीयानाम्, मृद्भृष्टलोष्ट निर्वापितमुदकं तृषाति-योग-प्रशमनानाम्,) अतिमात्राशनं आमप्रदोषहेतुनाम्, यथाग्न्यम्बुभ्याहारो अग्निसन्धुक्षनानाम्, यथासाम्यं चेष्टाव्यवहारश्च सेव्यानाम्, कालेभोजनमारोग्यकराणाम्, वेगसन्धारणं अनारोग्यकराणाम्, तृप्तिराहारगुणानाम्, मद्यं सौमनस्यजनानाम्, मद्यक्षेपो धी-धृतिः-स्मृतिहराणाम्,

---

१। क ग पुस्तके पंक्तिपंचकं नास्ति । २. क ग पुस्तके पंक्तित्रयं नास्ति ।

गुरुभोजनं दुर्विपाकानाम्, एकासन-शयन-भोजनं सुखपरिणामकराणाम्, स्त्रीष्वतिप्रसंगः शोषकराणां, शुक्रवेगनिग्रहः षाण्डकराणाम्, पराद्यतनमन्नमश्रद्धाजननानाम्, अनशनमायुषो ह्रासकराणाम्, प्रमिताशनं कर्शनीयाणाम्, अजीर्णाध्यशनं ग्रहणीदूषनानाम्, विषमशनंमग्निवैषम्यकराणाम्, विरुद्धवीर्याशनं निन्दितव्याधिकराणाम्, रजस्वलाभिगमनमलक्ष्मीमुख्यानाम्, ब्रह्मचर्यमायुष्यकराणाम्[1], सङ्कल्पो वृष्यानाम्, दौर्मनस्यमवृष्यानाम्, अयथाबलमाहरन्तः प्राणोपहारिणाम्, हर्षः प्रीणनानाम्, शोक शोषमानाम्, निर्वृत्तिः पुष्टिकराणाम्, पुष्टिः स्वप्न-तन्द्राकराणाम्, सर्वरसाभ्यासो बलपुष्टिकराणाम्, एकरसाभ्यासो दौर्बल्यकराणाम्, गर्भशल्यकमहर्ध्यानाम्, अजीर्णं रोगहेतुनाम्, बालो मृदुभेषजीयानाम्, वृद्धो याप्यानाम्, गर्भिणी तीक्ष्णौषधव्यायामवर्ज्जनीयानाम्, सौमनस्यं गर्भधारणानाम्, सन्निपातो दुश्चिकित्सानाम्, आमोविषमचिकित्सानाम्, ज्वरो रोगानाम्, कुष्ठं दीर्घरोगानाम्, राजयक्ष्मा रोगसमूहानाम्[2] जलोक मोहनशस्त्राणाम्, हिमवान् औषधभूमीनाम्, शिवो मन्त्रसिद्धीनाम्, दुर्गाराधनं विजयानाम्, समाधी रसायनानाम्, नास्तिको वर्ज्जयानाम्, लौल्यं क्लेशकराणाम्, बहुतन्त्रावलोकनं विमलीकरानाम्, तद्विद्या सम्भाषा बुद्धिवर्धनानाम्, आयुर्वेदोऽमृतानाम्, सन्तोषः सुखानामिति ॥३॥

सर्वेषां साधने हेतुरारोग्यं समुदाहृतम् । तस्मात्प्रयत्नतो[1] वत्स प्रथमेनं समभ्यसेत् ॥४॥

वेदांगानां यथा ज्योतिर्वरिष्ठः मुनिसत्तम । उपांगानां तथा चैतदायुर्वेदो वरः स्मृतः ॥५॥

कपिलो हेमकुक्षिश्च वरुणो जलदाधिपः । मेखलो निषधो रुद्रो दुन्दुभिः पुलहो हरिः ॥६॥

यजनः सामकश्चेन्दुः काशिका जनको वपुः । हेमः सुमाली दीप्तिश्च भानुवर्णः प्रभाकपिः ॥७॥

सुषेणो महिमा पिंगो ब्रह्मा दक्षप्रजापतिः । अश्विनौ वृत्रहा अत्रिरेते वेदविदांवराः ॥८॥

आयुर्वेदार्थकुशलारमरत्वं गता मुने । मित्राणामुपकाराय अपकाराय शत्रवे ॥९॥

हिताहितस्य वेत्तारं दृष्टादृष्टप्रसाधनम् । स्मारितं[3] परप्रीतिनां शिवेन परमात्मना ॥१०॥

खट्वा जिघांसता वत्स आयुर्वेदः प्रकाशितः ॥११॥

इति श्री देवीपुराणे आयुर्वेद-निर्देश-समाप्तिर्नाम दशाधिकशततमोऽध्यायः[4] ।

---

१. प्रलपतो क ग ।

२. निष्ठो ख ग ।

३. आंहृतम् ख ।

४. आद्ये देव्यवतारे आयुर्वेदनिर्देशः क ग ।

# एकादशाधिकशततमोऽध्यायः ।

मनुरुवाच ।

कथं खट्वासुरः श्रेष्ठ आयुर्वेदं प्रकाशता । निहतो देवदेवेन तन्मे ब्रूहि सनातन ॥१॥

ब्रह्मोवाच ।

गजरूपो महादेवो वसन्मालव पर्वते । खं विभागे स्थितो विष्णुः पथमार्गं निवारते ॥२॥

तयोः संरब्धो रोषेण महायुद्धे महात्मना । उत्पन्नो विश्वरूपात्मा महारूपो महाबलः[1] ॥३॥

अनंततेजाः पिंगाक्षो बहुमायो गुणात्मकः । भान्वायुत्तसहस्राक्षः कालानलसमप्रभः ॥४॥

सूर्यसोमेक्षणश्चण्डः पातालांघ्रिनखांगुलीः । नागाननाः सुराः सर्वे जंघे भूधरजानुनी ॥५॥

भूर्लोकं च भुवर्लोकं नाभिश्च महर्नक्षसम् । जनग्रीवाः तपोवक्त्रं शिरः सत्यमयं वपुः ॥६॥

विष्णोस्तपस्य विध्वंस निर्वाणं गच्छतस्ततः । अवरांशं[2] समास्थाय विष्णुर्योधितवाँस्तदा ॥७॥

कृत्वा वपुर्महासूक्ष्मं[3] बहुमायो महाबलः ।
घातिता विष्णुरुद्राद्याः भूयो भूयो विवर्धते ॥८॥

शरशक्ति गदादण्ड[4] परश्वायुधघातजान् ।
पद्मं पद्मसहस्राक्ष[5] विसृष्टमात्मविग्रहः ॥९॥

सहमाया समुद्भूतैः खट्वा-देह-समुद्भवैः ।
वेष्टितो विष्णु विघ्नेशौ युध्यमानौ महाबलौ ॥१०॥

निष्पन्दं विष्णुं कृत्वा तु विघ्नेशं च महाबलम् ।
इन्द्रादीन् स सुरान् वत्स योधनाय समुद्यतः ॥११॥

---

१. महात्मनः ग ।
२. असुरांसम् ग ।
३. कृत्वानु महायुद्धम् ग ।
४. कुन्त ग ।
५. सहस्राणाम् ग ।

इन्द्रं चन्द्रं वसु ब्रह्म यमरुद्रं क्दिवाकरान् । स जित्वा चैव देवांश्च पातालानभिद्रवत् ॥१२॥
एवं देवान् सुरान् नागान् पूर्वमार्गव्यवस्थितान् । निर्जित्य स्ववशे कृत्वा पुनश्चैव निवेश्य तान् ।१३।
तपः समारभेदुग्रं कणभुक् सलिलाशनः ॥१४॥
गोमूत्रगोमयाहारो वाय्वा[1]हारोऽथवा पुनः । अवाङ्मुखो धूमभुजो अर्बुदन्तु समास्थितः ॥१५॥
ततस्तस्याभवद्देवो वरदाने समुत्सुकः । त्रिमूर्त्ति विश्वरूपात्मा शशांकांकित शेखरः ॥१६॥

इति श्री देवीपुराणे खट्वासुरोत्पत्तिर्नामैकदशाधिकशततमोऽध्यायः[2] ।

---

१. वांद्याहारो ग ।

२. आद्ये देव्यवतारे खट्वासुरोत्पत्ति क ग ।



# द्वादशाधिकशततमोऽध्ययायः ।

वशिष्ठ उवाच ।

कोऽसौ गजाननो देवः कथं वा समगच्छत । कथं निवारयेत् विष्णुमेतदिच्छामि वेदितुम् ॥१॥

मनुरुवाच

यद्दुर्लभं भवेदण्ड[1] हेमजं क्षितिभूषणम् । लोके मेरु समाख्यातः[2] तस्य पूर्वेण भूधरः ॥२॥

माल्यवो नाम विख्यात ऋषिदेवनिषेवितः । सिद्धकिन्नरगन्धर्वं अप्सरोणगसेवितः ॥३॥

नानाद्रुमलताकीर्णः फलपुष्पसमावृतः । सरित्सरोवराकीर्णं दीर्घिकानदमालितः ॥४॥

हंसकारण्डवचक्र जीवं जीवकनादितः । बहुपक्षिसमाघुष्टो अतिरम्यो मनोहरः ॥५॥

तस्मिन् पर्वतराजेन्द्रे पीतवासा जगत्पतिः । सत्त्वात्मको महामायो जगतां पतिः केशवः ॥६॥

स्थित्यर्थं मतिमाधाय स्थितो विग्रहरुपिणः । सदा रतिमुदायुक्तः क्रीडमानः क्रिया सह ॥७॥

तावत् तत्र क्रिया शक्ति ह्यनन्त प्रभवो महान् । विग्रहीभूत देवेच्छा[3] समाययुस्तपं प्रति ॥८॥

सा विद्या वेदभावेन महत्तपः समास्थिता । विष्णुना[4] च समास्थाय प्रवृत्यैवं व्यवस्थिता ॥९॥

तदा तस्यामभवद्भावो राजसः परमेच्छया । पाणौ संमन्थयित्वा तु नरकाय गजाननम् ॥१०॥

सत्त्वोद्रिक्तं सृजेदेवं सर्वदेवमयं विभुम् । चन्द्रादित्यानलो नेत्रो ब्रह्मा चैव शिरो बाहु ॥११॥

केशा वनस्पतिस्तस्य रुद्रा ग्रीवासमाश्रिता । दशनाग्रहनक्षत्रा धर्मा धर्मे तु ओष्ठयोः ॥१२॥

जिह्वा सरस्वती तस्य श्रोत्रे चैवे दिशो दश ।
इन्द्रो नासागतस्तस्य भ्रुर्वोर्मध्ये हरः स्मृतः[5] ॥१३॥

---

१. यथा हितस्य दण्डे क ख । २. लोकालोकः ख ।
३. मानव्यो ग । ४. देवाद्या ग ।
५. विष्णुना नर्मममास्थाय प्रावृतेव तु व्याकृता क । ६. स्वयम् क ग ।

सागरा जठरं तस्य ऋषयो रोमकूपगाः । गन्धर्वा किन्नरा यक्षाः पिशाचा दनुराक्षसाः ॥१४॥
उदरस्था तु देवस्य नद्या बाही समाश्रियः । अंगुल्यो भुजगास्तस्य नरवास्तारागणाः स्मृता ॥१५॥
हृदयस्था क्रिया देवी मेरुः पृष्ठगतो ह्यभूत् । यमो धर्मश्च नाभौ तु कण्ठे तु पृथिवी स्थिता ॥१६॥
लिंगे सृष्टि विजानीयात् अश्विनौ जानुनी स्थितौ ।
पर्वताश्चारुदेशस्थाः पातालात्मकैः स्मृता ॥१७॥
नारका भुवनास्तस्य पादस्था मुनिसत्तम । कालाग्निश्च स्वयं रुद्रः पादांगुष्ठ समाश्रितः ॥१८॥
वेदाश्च मनवः कल्पा दिना काष्ठा कला लवाः । सर्वे तत्रैव द्रष्टव्या सर्वदेवमयो हि सः ॥१९॥
एवं सर्वात्मकं दृष्ट्वा गजवाक्यन्तु विष्णुना । प्रणम्य मुदितो भक्त्या तुतोष विविधैः स्तवैः ॥२०॥

इति श्रीदेवी पुराणे विनायकोत्पत्तिर्नाम द्वादशाधिकशततमोऽध्यायः[1]

१. विनायकोत्पत्तिः क ग ।



# त्रयोदशाधिकशततमोऽध्यायः ।

विष्णुरुवाच ।

स्तोष्येऽहं सुरारिदमनं रिपूणां, वैरिहारणं[1] गजवक्त्रमुदन्तशोभम् ।
तं भाति कुन्द-हिम-शंख-शशांकदन्तं, ताम्राभकान्तिवपुषं रुचिरारुणाभम् ॥१॥
तं भाति[2] अर्पित जगच्छशिसूर्यमार्गं, गां गच्छतीव मेरु सुरारिहन्तुम् ।
तमहं नमामि भगवन्[3] प्रमथेशजातं, तर्ज्जन् सुरारिभयदं दनुदर्पहन्तुम् ॥२॥
ताराभ मौक्तिक कृत वनमाल ग्रीवं, वाराह वक्षहृढदंष्ट्र इवांशुशोभम् ।
भृंगोपगीतमदगण्ड सुसेव्यमानम्, तमहं नमामि वरदं वरदायकं तम् ॥३॥
ताराग्णिं प्रमथभ्रातृवरं सुवेशम्, शम्भोर्द्वितीय एव मूर्त्तिः सुचारुवेशम् ।
नानाविचित्र रूपशोभित चारु हारं, नमामि गजाननं तं महाप्रमाणम्[4] ॥४॥
नागेन्द्रभोग कृतशेरवरमूर्ध्नि भानं, लम्बन्तु चारुचमरं रणकार्यवीरम् ।
स्तुवन्तु शक्रवनकान्तमहास्त्रमन्तं, तं मातृयोगिप्राणमर्च्चित सुष्टमिष्टम् ॥५॥
टंकार हार रचनादित घण्ट शब्दं, दंष्ट्राग्रलग्न दनुदन्तिघटा कलापम् ।
पंकांकरेणु रजपंकज चारुवर्चं, चामीकराखचितमरकतसंसेव्यमानम् ॥६॥
लम्बन्तु कर्ण पर्ण[5]-शंख-सुचारु चामरं, रक्तान्तनेत्र कर्णायतचारु तुंगम् ।
गम्भीर गर्जित महारवमेद्यशब्दम्, [6]गण्डांकुंश परशुमेखल सूत्रधारम् ॥७॥

१. विलेरिहारणाम् ग ।
२. भस्मातिव्यापित ग, तं भाति व्यापित क ।
३. गजाननं तं क ग ।
४. पद्यद्वयं क ग पुस्तके नास्ति ।
५. पट्ट क ।
६. दण्डां कुंश क ।

राराजते सकलपर्वतसानु कण्ठं, चण्डाति-नूपुर-ध्वनिमुखरं विभ्रान्तम्[1] ।
तस्मै नमामि सततं जगतो हिताय, विघ्नेश्वराय वरदाय वरप्रदाय ॥८॥
वामैकहस्तसततं कृतलड्डुकाय, सिद्धार्थकं सुरभिगन्धविलेपनाय ।
ब्रह्मेन्द्र-चन्द्र-वसु-शंकर-संस्तुताय, गंगाजलौघ इव दानमहाप्रदाय ॥९॥
इष्टार्थफलमीहितप्रदाय शिवाय, सम्पूजयस्व[2] मम देवशुभं शुभाय ।
विघ्नं विनाशय प्रभो सुरसिद्धचन्द्रं, शक्रस्य व्याधितदिवस्य शुभं प्रयच्छ ॥१०॥
स्तुत्वा तु शक्तितनयं प्रयतेन विष्णो, तुष्टः समीहितवरं ददते च तस्य ।
विष्णोस्तवार्थमिदं शैलवरं हरेण, सम्प्रेषितो रिपुहराय पुरन्दरस्य ॥११॥
मयोच्यतां[3] वद भवान् किमहं करोमि, त्रैलोक्यनिर्जितरिपुं तवाहं वदामि ।
श्रुत्वैवं तदा देवं विष्णुना प्रभविष्णुना, तुतुष्ट वरदोभूतो विघ्नस्य निधनाय च ।१२।

इति श्री देवीपुराणे विनायकस्तवो नाम त्रयोदशाधिकशततमोऽध्यायः[4] ।

---

१. वितान्तम् क ।
२. सम्पूरय क ।
३. यायाच्यताम् क ग ।
४. विनायकस्तवः क ग ।



# चतुर्दशाधिकशततमोऽध्यायः ।

मनुरुवाच ।

दत्ते विष्णा वरे ब्रह्मन् प्रतिपन्ने च वेदने । आद्दुर्ह[1]रब्रह्माणं वासवादित्य चन्द्रमाः ॥१॥
तुतोष विधिवत्भक्त्या पूजयित्वा यथाक्रमम् । ईश्वरो ददते पूर्वमर्धचन्द्रं महोदयम्[2] ॥२॥
ब्रह्मणा मेखला शुभ्रा भानुना चारुविभ्रमम् । विष्णुना शंखशार्ङ्गौ वासवो वज्रमुत्तमम् ॥३॥
यमो दण्डं विचित्रन्तु गदां धनदपाम्प[3]ती । अंकुशं पाशखडगञ्च रक्षेन्द्रो गमनं पुनः ॥४॥
दिग्गजानथ नागैश्च कटकाकटिसूत्रकैः । नक्षत्रा गण्डमालादि मातर आत्मतुल्यताम् ॥५॥
उमा देवी तु विज्ञानं शंकरो भोगमुत्तमम् । पितरो ग्रहरक्षाणि वह्निना च यथाक्रमम् ॥६॥
ऊर्जस्तेजश्च सिद्धिश्च योगिभिः प्रतिपादिता । ऋषिभिर्नदशैलैश्च समुद्रैश्च तथा पुनः ॥७॥
उपप्लवो च गाम्भीर्यं विधिवत् प्रतिपादितम् । एवं कृत्वा ततस्तस्य शंकरादि महाप्रभाम् ॥८॥

दत्तानि दिव्य चास्त्राणि समन्त्राणि वृतानि च ।
अभिषिक्तः शिवेनास्य सर्वेषां नायको भवान् ॥९॥
भवति सर्व कार्येषु त्वं च देवेषु नायकः ।
विनायकेति देवानां लोके ख्यातिं व्रजिष्यसि ॥१०॥

इति श्री देवीपुराणे विनायकाभिषेकवरदानं नाम चतुर्दशाधिकशततमोऽध्यायः[4] ।

---

१. आद्ये हरब्रह्माणो ख ।
२. क पुस्तके पद्यमिदं नास्ति ।
३. धनददम्पती क ।
४. ख पुस्तके पंक्तिरियं नास्ति ।
५. आद्ये विनायकाभिषेके वरदानम् क ग



# पञ्चदशाधिकशततमोऽध्यायः ।

वशिष्ठ उवाच ।

तुष्टे विनायके विष्णो ह्यभिषिक्ते गजानने । किं कुर्वन्देवराजेन्द्रः किम्वा शंकरकेशवौ ॥१॥

मनुरुवाच ।

पुरस्कृत्य तदा देवं गजवक्त्रं महाबलम् । विघ्नस्य घातनार्थाय प्रययावर्बुदाचलम् ॥२॥

यत्रासौ दनुशार्दूल सर्वदेव-भयावहः । अयुतोच्छ्रयमानेन योजनायाम[1]विस्तरः ॥३॥

दशांशेन च पादन्तां पद्मानि नव सप्त च । तथा तं सहसा दृष्ट्वा गजवक्त्रेण दानवान् ॥४॥

मायामयानि शत्रूणामयुतानि प्रचक्रिरे । आत्मनः समवीर्याणि सर्वशास्त्रविदानि च ॥५॥

कृत्वा तु तथा योधान् संग्राममभवन्महत् । दानवैर्निजिताः सर्वे विघ्नजैर्गजवाहिनी ॥६॥

देवाः पश्यन्ति संत्रस्ताः यदि भग्नो विनायकः ।
तदा न जानीमः कस्माद्रक्षा शक्रस्य संगरे ॥७॥

देवेन शूलिना तस्मात् वज्रिणा चक्रिणा तथा । मुक्तानि दिव्यान्यस्त्राणि तथा तेनैव शामितः ॥८॥

विवृद्धमन्युः संरब्धो गजेन्द्रः पुनरुद्यतः । तथा विनायकः क्रुद्धो गृहीत्वा शंकरायुधम् ॥९॥

विघ्नस्य चिच्छिदे कर्त्तं विघ्नान् पापान् निवारयेत् ।
विघ्नान् पाशेन रोधित्वा सर्वास्तानपि घातयेत् ॥१०॥
स्वयं हत्वा महावीर्यं तपच्छिद्र-समुद्भवम् ।
इन्द्रस्य च विपुलं[3] राज्यं प्रददावभयं सुरान् ॥११॥

इति श्री देवीपुराणे विघ्नवधो नाम पंचदशाधिकशततमोऽध्यायः[4]

१. योजनापादविस्तरः ख ।
२. पंक्तित्रयं ख पुस्तके नास्ति ।
४. इन्द्रस्य च रिपुं राज्यं ख ।
४. आद्ये देव्यवतारे विघ्नवधः क ग ।

# षोडशाधिकशततमोऽध्यायः ।

वशिष्ठ उवाच ।

कस्य छिद्रं भवेद् ब्रह्मन् तपस्य चरतो विभो । यस्मिन् विघ्नः समुत्पन्नः सर्वदेवभयावहः ॥१॥

मनुरुवाच ।

ब्रह्मणः सृष्टिकामस्य युगादौ चरतस्तपः । तपसामनुविद्धस्य महामोहः प्रजायत ॥२॥

तस्य मोह[1]प्रमुग्धस्य नष्टसत्त्वस्य गो द्विज । अवज्ञां शिवविष्णूनां कृत्वाहमिति देवता ॥३॥

कर्त्ता ग्रहश्च[2] भोक्ता च नान्योऽस्तीति सोऽब्रवीत् । ततोऽहसत् सुरेशानो यमवक्त्रेण दारुणम् ॥४॥

ततो ज्वाला समुत्पन्ना तस्मिन् घोरो महाबलः । कृष्णाञ्जननिभाकारो रक्ताभ्रो रक्तलोचनः ॥५॥

च क्रपाणितौ स्त्रिशूली च तर्ज[3]मानः पितामहम् । भयं जग्मुः सुरा सर्वे[4] दानवानां सुखावहः ॥६॥

तयोर्युद्धं सहस्रन्तु वर्षाणां ब्रह्मदैत्ययोः । न निर्जितो यदा सोऽरि ब्रह्मणा सत्त्वरूपिणा ॥७॥

तदा नारायणो जग्मुर्यत्र देव उमापतिः । खट्वा विनाशहेत्वर्थं सृजमानो महाबलाम् ॥८॥

देवीं त्रिशूलिनीं भद्रां महारौद्रीं कपालिनीम् । पिंगाक्षीं भाविनीं जम्भां सुजंभां विकृताननाम् ॥९॥

स्वागतं ते तदा दृष्ट्वा भक्तं देवं जनार्दनम् । शिवस्य मतिमाविश्य गान्धर्वं गीतमुद्यतः ॥१०॥

विष्णुरुवाच ।

ओंकारमूर्त्तिसंस्थं तु मात्रात्रयविभूषितम् । कालातीतं वरदं वरेण्यं गोपेन्द्रक संस्तुतं वन्दे ॥११॥

वां दुं स्वारं स्वारं जगति परन्तं वारं वारं वलितं स्वारम् ।
ओंकारमयं ऋक्साममयं मन्त्रार्थतत्त्वसुविदितपरमम्[3] ॥१२॥
सुश्रमे वचनं सुसोमपुजं यज्ञपरिपठितं-हवि-हव्यं होमम् ।
कुश-चरु-मंजुल यजमानमयं, यज्ञाधिपतिं नमामि परमं शिवम् ॥१३॥

---

१. मोहात् मुग्धस्य ख । २. हर्त्ता क ।
३. अतेदितपरमम् क । ४. सुरागाञ्च ख ।

सौम्यं च कान्तं शशिकुन्दधवलं पश्चिमवदनं सितवृषगमनम् ।
सिततनुरुद्रां त्रिशूलजटिलां त्रिनयनसौम्यां वरुणेन नुताम् ॥१४॥
त्रिभुवनव्यापीं त्रैलोक्यनमितं[1] क्षिति-जल-पवन हुताशननिलयम् ।
अनेकरूपमनेकवाचं पिनाकपाणिं शिवं[2] नमामि ॥१५॥

सौम्यमुखमुत्तराश्रयं संस्थितवदनं शुभ्र[3]कटाक्षम्,
गौरमुखं दर्पणवलय विभूषित बाहुम् ।
पीतार्चिवपुषं मुकुटमणिकुण्डलाञ्चितकायम्,
विविध कुसुमोपचर्चित[4] मुकुटसुचरित वरदे[4] रुद्र पातु सदा ॥१६॥
ऋग्यजुःसामवेदं सौम्यमुखं पूर्ववदनम् ।
हुतकनकसदृशं शशिरवि[5]–बिम्बनिभम् ॥१७॥

रक्तकाया रक्तोष्ठी या विकट मुकुटा, रक्ताक्तनयना या रक्ताम्बरधारिणी[6] रुद्रा ।
त्रिशूलपरशुगदां मुद्गर—भुसुण्डि—असिचक्रधरं प्रणतोऽस्मि सर्वदा ॥१८॥
रथगमना प्राग्दिशव्यापी अनेकरूपा, कुण्डलकनकविभूषित काया प्रमथवृन्द परिसंस्तुता ।
रूपधारिणः सर्वे जगताय हिताय भूतसंघपरिवारिता सिद्धयक्षपरिवन्दिता[7] ॥१९॥

रुद्रं नित्यं त्रिदिवं पातु कृष्णमुखं पिंगलकेशं दंष्ट्राविषमम् ।
अघोरचक्रं भ्रुकुटीतटं भीषण नादं जिह्वा करालं ज्वलितमुखम् ॥२०॥
रुद्रा भीमा उग्ररूपा घनतिमिर निभा ज्वलितनयना उद्यतत्रिशूला ।
विकृतारावा विकृतगमना प्रणतोऽस्मि सर्वदा ॥२१॥

इति श्रीदेवीपुराणे द्वितीयः पादः[8] ।

---

१. त्रैलोक्यपितरम् क ।
२. शिवाय क ख ग ।
३. सुभ्रूकयक्षम् क ।
४. मुकुटसुचरित क ग ।
५. शशिपदं नास्ति क ग पुस्तके ।
६. सदा ख।
७. क ग पुस्तके श्लोकोऽयं नास्ति ।
८. द्वितीयःपादः इति ग पुस्तके नास्ति ।

ओं जगति ये ओं वलितक आद्यम् । आद्यं देवमनुपमं पातु शिवम् ।
परमादिभवं पातु आप्रणतोऽस्मि शिवम् ॥२२॥
शिरां ओं जगति यवनितकदिशि निशिशिञ्जं महाकपालम् ।
प्रणत मनोगत निरूपमं सिद्धिदं भास्वररूपम् ॥२३॥
ऋजुं तु महागजेन्द्र त्रिगतिस्त्रिभुवन सिद्धिप्रवरम् ।
त्रिशूल भास्वरकरं संघातैस्त्रैलोक्यविदित निजमहिमानम् ॥२४॥
यं दुं रां ओं रक्ष पिशाच दानवसंघैः प्रणमितशासनमतिक्रान्तम् ।
जलनिधिनादं महाबलभीषणं परमेष्ठिभावम्[1] ॥२५॥
ज्ञं एं दुं ओं हारीतकृताहिभोगं मणिकिरण त्रिशूल विच्छुरितम्[2] ।
हृदयवरकण्ठं सितभस्मदेह ब्रह्मादिदेव परिपठितगुणम् ॥२६॥
रां ज्ञं दुं ओं दिव्यविलेपनभूषित शरीरं दिव्य कुसुम वासितसितमुकुटम् ।
दिव्यनिषेवितनिजचित्रवेषं निजदिव्याभरणम् ॥२७॥
दिग्वेषं शशिकान्तिधरं हरं विविधरूपपरिगतम् ।
वाञ्छितवर रथ जगति सर्वत्र सुरवरं निरतिशयं विविधगुणशतनिलयम् ।२८॥
ओं ओं ओं ओं ओं ओं ओं ओं ओं ओं ओं ओं,
ओं ओं ओं ओं ओं ओं ओं ओं ओम् ।
देवाधिदेव वेदांगपठित सूर्यशशि मार्ग वन्दित [3]तेजम् ॥२९॥
रां मं एं-ओं नाट्येऽभिरतं जगतं सुखदमहाबल शक्तिसुरसैन्यबलम् ।
भीषणनायकसर्वमहाबल उद्दामम् ॥३०॥
रां ज्ञं दुं ओं एकाक्षराक्षपरमजितं मन्त्रसर्वकृतास्तु ।
ज्ञानप्रभावं नानाकारं त्रिपथासुजटं क्रीडाभिरचितम् ॥३१॥

---

१. परमेष्ठितरम् क ग ।
२. पृथुलहृदयम् क ग ।
३. वर्धिततेजम् क ग ।

रां ज्ञं एं ओं- दंष्ट्राकरालं भीमातिवदनम् ।

घोरां गुहासकम्पितभुवनं चन्द्रार्धधरम् ॥३२॥

इच्छाविराजितरूपमचिन्त्यं तिथिगुहनक्षत्रं दुष्टविनायकविघ्नितसिद्धिदम् ।

सर्वजननिवहवाञ्छितसिद्धिदं सौभाग्यकान्ति बलपुष्टिकरं बाहुबलकरम् ॥३३॥

अजगजवरभुजं पितृवननिलयं किम्पुरुषगीत शोभितभुवनम् ।

सूक्ष्मासूक्ष्म वरमुखनयनं सुरयुवति चारु चामर धृतम् ॥३४॥

रां ज्ञं एं जगति यवनितक दिशिनिशि मन्त्रम् ।

आ आ आ आ आ आ आ आ आ आ आ आ ।

आ आ आ आ आ आ दिव्यशरीरं सर्व सुवेशम् ॥३५॥

आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ आ ।

अनुपममशिरसं वरदं नमामि सिद्धिकरम् ॥३६॥

इति गोपेन्द्रक विष्णुगीतं समाप्तम् ॥

---

मनुरुवाच ।

एवं गान्धर्वविधिना गायते मधुसूदन । तुतोष शंकरस्तस्य कामं कामानुबद्धमान्[1] ॥३७॥

वरं ब्रूहि सुरश्रेष्ठ विष्णो तुष्टस्तवानघ ।

कान्तोऽसि मम भक्तोऽसि किं करोमि[2] वदस्व नः ॥३८॥

विष्णुरुवाच ।

योऽसावुत्पादितो देव ब्रह्मस्य सृजतः प्रजा । तं घातय महादेव सर्वदेवारि कण्टकम् ॥३९॥

देवदेव उवाच ।[3]

मम क्रोधात्समुत्पन्नः परार्धं या च केशव । न विनाशो भवेत्तस्य किन्तु शैलोत्तमे स्थितः ।४०॥

भावनीग्ग सुता[4] गावो याः शशांक परिश्रवाः । तास्तेषां प्रीणनं वत्स निधास्यन्ति युगे युगे ।४१।

१. कामानुगा नरम् ग ।
२. करामः क ।
३. विष्णुरुवाच क ग ।
४. मृता ख ।

तेन तृप्ता न बाध्यन्ते ब्रह्मजा ब्रह्मणस्तथा। या च देवी महाभागा तव भूधरपृष्ठतः ॥४२॥
लक्ष्मी सहायेनागत्य ममतेजः समुद्भवः। उत्पत्ति[1] विघ्ननाशाय विघ्नेशं सा विधास्यति ॥४३॥
तदा लब्धवरो विष्णुर्भूयः पृच्छति शंकरम्।
कियन्तं पर्वते देव मया कालं सुरोत्तम। स्थातव्यं किञ्च सा देव्या तत्त्वरूपा[2] भविष्यति ॥४४॥

देव उवाच।

मालवे पर्वते विष्णो त्वया लक्ष्मी युतेन च। देव्यां शैवीं मने कृत्वा नाम्ना वै सर्वमङ्गलाम् ॥४५॥
स्थातव्यमेकरात्रन्तु मदीयं सुरसत्तम। तदा आगत्य देवी सा सर्व कारण कारणा ॥४६॥
हसमानस्य ते वत्स विधास्यति मया समम्। गजवक्त्रं नरकायं[3] सर्वविघ्नविनाशनम् ॥४७॥
सर्वं देवमयं देवं भविष्यति सुरोत्तमम्। नायकं सर्वदेवानामनायकं स्वयम्भुवम् ॥४८॥
मातृमण्डलमध्यस्थं मम तुम्बरुरूपिणे। इन्द्रानुवर्त्तिनं[4] पुत्रं तव धन्यं[5] भविष्यति ॥४९॥
त्वयापि[6] तदा दृष्ट्व्या स्तोतव्यं विविधैः स्तवैः। नियामकश्च विघ्नस्य गृह्ण् दं गदमायुधम् ॥५०॥
तं दृष्ट्वा विघ्नदैत्यं तु समं यास्यति भूधरम्। गजाननोऽपि मालव्ये विघ्नं हत्त्वा व्रजिस्यसि ॥५१॥
जम्भासुरविनाशाय हत्त्वा[7] दैत्यं सुलोमकम्। पुनः पादातिकं वत्स आगमिष्यति विघ्नजे ॥५२॥
तत्राग्रजेन[8] स्थातव्यं विघ्नेशस्य जनार्दनः। सुलोमं जम्भमायोत्था ये विघ्नेश शरीरजाः ॥५३॥
ते भूयोऽपि विवर्धन्ते यावन्नागमनं प्रति ॥५४॥

मनुरुवाच।

एवं दत्त्वा वरं देवः केशवस्य यथेप्सितम्। तां विद्यामंकगां कृत्वा तत्रैवान्तरधीयत ॥५५॥
एतत् विनायकोत्पत्तिर्विघ्न सम्भवहानिजा। स्तवं देव्यावतारश्च विष्णुगीतश्च रूपकम् ॥५६॥
कथितं मुनिशार्दूल सर्वपापप्रणाशनम्। यस्तु भक्त्या समुत्थाय प्रातः कीर्त्तयते नरः ॥५७॥

---

१. उपेत्य क ग।
२. तत्ररूपा क।
३. नरकाग्रम् क।
४. छन्दानुवर्त्तिनम् ख,
५. वंद्य क।
६. कृपायितम् ख।
७. दृष्ट्वा क।
८. तत्रागतेन क ग;

न तस्य भवते विघ्नं धर्म कामार्थ शान्तिषु । यः स्तवं विघ्ननाशस्य पठिष्यति अनुत्तमम्[1] ॥५८॥
विघ्नरोग विनिर्मुक्ता[2] दिव्यान् कामांल्लभिष्यति । गोपेन्द्रकं च यो देवमृषिसिद्धनरोऽवजाः ॥५९॥
पठते लक्षणोपेतं कण्ठतालैस्तु[3] गायति । न तस्य पुनर्बन्धस्तु भवते धर्मजा तनुः ॥६०॥
मोदते शिवलोके तु यत्र देवः सहोमया । सम्वत्सरकृतं पापं सकृच्छ्रुत्वा व्यपोहति ॥६१॥
त्रिश्रुत्वा द्विजहत्यादि अकामस्य व्रतस्य च । शमते नात्र सन्देहः सततं श्रवणाच्छिवः ॥६२॥
एवं पूर्व महाबाहो पृच्छतोर्ब्रह्मदक्षयोः । कथितं विष्णुना आसीत् तथा च ऋषिपुंगवः ॥६३॥
मन्वादिभिः श्रुतं तेभ्यो मया[4] वशिष्ठकाश्यपात् । प्राप्तं हे नृपशार्दूल तथा ते कथितं मया ॥६४॥

आद्ये खट्वावधे विष्णोर्वरलब्धिः[5] ।

---

वशिष्ठ उवाच ।

कथं खट्वासुरो ब्रह्मस्तपस्तप्यात् सुदारुणम् । येन ब्रह्मादयो देवा वशं कृत्वा स्वशासने ॥६५॥
एतद्वेदितुमिच्छामि महाकौतुहलं मम । कथ्यतामृषिमुख्यानां पृच्छतां संशयापहम् ॥६६॥

मनुरुवाच ।

या देवी सा पुरा विष्णोर्वरं दत्त्वा दिवं प्रति । इन्द्राय कृतवान् सख्यं सा शिवेन महात्मना ॥६७॥
ब्रह्मणः सृष्टिकामस्य प्रेषिता स्थितिकारिणी ।
तां दृष्ट्वा मोहसम्पन्नाः सर्वे दनुनरोत्तमाः । तपश्च तपते खट्वा देव्याराधनकाम्यया ॥६८॥

वशिष्ठ उवाच ।

यदि खट्वासुरो ब्रह्मा विष्णवादि विघ्नते सदा । कथं देव्यास्तु तोषाय तपस्तप्याद् द्विजोत्तमः[6] ।६९।

मनुरुवाच ।

सर्वेषामेव देवानां दानवानामनुत्तमा । देवी वन्द्या च पूज्या च सर्वकामार्थमोक्षदा ॥७०॥

---

१. मनुत्तमम् ख ।
२. सिद्धचारण ग ।
३. करतालैस्तु क ।
४. मम क ग ।
५. ख पुस्तके नास्ति ।
६. क ग पुस्तके श्लोकद्वयं नास्ति ।

विधिना पूजिता विप्र अचिराद् ददते शिवा ।

वशिष्ठ उवाच ।

तेन खट्वासुरो ब्रह्मन् जपते सततं शिवाम् ॥७१॥

तपस्तप्तस्य देवर्षे दनुनाथस्य शम्भुना । किं वा कृतं विघ्नं तस्य माण्डव्यो रक्षते कथम् ॥७२॥
कथं वा देवदेवस्य तुतुष्टा सहसा शिवा । तदहं श्रोतुमिच्छामि यथावन्मम कथ्यताम् ॥७३॥

मनुरुवाच ।

अतीव तपसा तस्य असुरस्य महात्मनः । सर्वे देवा भयं जग्मुः दृष्ट्वा दीप्ततरां श्रियम् ॥७४॥
ततो ब्रह्मादयो देवाः सर्वे विष्णुपुरोगमाः । शिवाय भावमास्थाय देव्याराधनकाम्यया ॥७५॥
बृहस्पतिर्महाप्राज्ञः सर्वशास्त्रार्थपारगः । उवाच मधुरां वाणीं प्रश्रयानुगतां शिवम्[1] ॥७६॥

बृहस्पतिरुवाच ।

भगवन् देवदेवेश सर्वदेवनमस्कृत । त्रायतां सुरराजेन्द्रं निमग्नं रिपुसंकटे ॥७७॥
यथा खट्वासुरं देव हत्वा सुरवरारिणम् । दिवमिन्द्रस्य सुखदं भवते तद्विधीयताम् ॥७८॥
एवं तस्य वचः श्रुत्वा ग्रहराजस्य हे नृप । मा भैषीर्वदते देवो देव्यास्तोत्रं नृसंज्ञितम् ॥७९॥

वशिष्ठ उवाच ।

कथं खट्वादयो[2] युद्धे दनुजा बलदर्पिताः । बहुमाया महावीर्याः शंकरेण निपातिताः ॥८०॥
कथं वा हरिश्चन्द्रस्य अपमृत्यावुपस्थिते । माण्डव्यः समयाघोरं राष्ट्रभंग उपस्थितः ॥८१॥

बृहस्पतिरुवाच ।

महाभये तदा घोरे अमरेन्द्र[3] क्षयंकरे । माण्डव्यो ऋषिशार्दूल शंकरायतनं गतः[4] ॥८२॥
सोमेशं नामतीर्थन्तु सरस्वत्यास्तटे शुभम् । अम्बिका तत्र रुद्राणी चामुण्डा ब्राह्मी वैष्णवी ॥८३॥
मातरं पञ्चकं तत्र सान्निध्यं ब्रह्म[5] पूजितम् । पूजयामास देवर्षिदिनान्ते तां स्वभावितः[6] ॥८४॥

---

१. शुभाम् ग ।
२. खट्वासुरो ग ।
३. नरकेन्द्र क्षयंकरे ख ।
४. शंकया चावनीं गतः ख ।
५. तत्र क ग ।
६. तत्सुभाषितम् ख ।

तयस्तुष्टा महाभागा स्वां शक्तिं सन्निवेशिरे । वरं ब्रूहि मुनिश्रेष्ठ यत्ते हृदि व्यवस्थितम् ॥८५॥
ततः स अवनीं गत्वा शिरसाभिप्रणम्य च । रक्षतां हरिश्चन्द्रस्तु यदि तुष्टा ममाम्बिके ॥८६॥

कौमारी उवाच ।

सम्पूर्णं मण्डलं ब्रह्मन् नृत्यमानं[1] शिवात्मकम् । विन्ध्याद्रौ तिष्ठते नित्यं तस्मिन् रक्षा नृपे तव ।८७॥
अपमृत्यु पुरा दक्षे यज्ञकर्मणि भूमिप । अत्यद्भुतं वलञ्चासीत् तदा रुद्रस्य विष्णुना ॥८८॥
राष्ट्रभंगे समुत्पन्ने अवृष्टौ द्वादशाब्दिकम् । मातृचक्रं महाभागे विष्णुना सन्निवेशितम् ॥८९॥
तां पूजय मुनिश्रेष्ठ हरिश्चन्द्र सुखप्रदम् । दिनादौ मध्यसन्ध्यासु रुद्रादिषु क्षणेषु च ॥९०॥
पूर्वात्तु या च विप्रेन्द्र पूजिता सुखदा शिवा । सुभक्त्या गन्धपुष्पैश्च[3] विल्वादि शाद्वलैर्दलै ॥९१॥
दीपधूपोपहारैश्च सुगन्धैः कुसुमादिभिः । पूजिता सा मुनिव्याघ्र भविष्यति ततः शुभा ॥९२॥
मृत्युपसर्गशमना ग्रहदुःखनिवारका । मांसाद्यैर्बलिदानैश्च पृथिवीं पाति सा शिवा ॥९३॥
एवं सः पंचकादेशात् कौमारीमतभावितः । गत्वा विन्ध्याद्रिशिखरे नर्मदातोयगूहिते ॥९४॥
पूजयामास तां देव्यां हरिश्चन्द्राय प्राणदाम्[4] । एकभक्तेन नक्तेन उपवास अयाचितैः ॥९५॥

सप्ताहाद् वरदा देव्या मुनेर्भूता तदा द्विज ।

वरं च सर्वदर्शित्वं विमलज्योतिर्दर्शनम् । द्वासप्ततिसहस्रैस्तु प्राप्तवांस्तपसा तदा ॥९६॥

इति श्री देवीपुराणे हरिश्चन्द्ररक्षणं नाम षोडशाधिकशततमोऽध्यायः[5] ।

---

१. नित्यमान ख तप्यमान ग ।
२. शमिता मनुना आसीत्तथा भद्रस्य विष्णुना ग ।
३. जातीयगद्यपुष्पैश्च ग ।
४. ताः देव्या प्राणदाः ग ।
५. आद्ये हरिश्चन्द्ररक्षणम् क ग ।



# सप्तदशाधिकशततमोऽध्यायः ।

वशिष्ठ उवाच ।

अन्येऽपि ये द्विजश्रेष्ठ द्विजराज्यो[1] विशोबलाः । श्रद्धा[2] वा भक्तिमाश्रित्य पूजयिष्यन्ति मातरः ॥१॥
न तेषां विप्र राष्ट्रेषु भयं किंचिद् भविष्यति । गावश्च भूरिपर्यतो द्विजाः यज्ञसमाकुलाः ॥२॥
निवृत्तवैरा भूपालाः भविष्यन्ति न संशयः । सुभिक्षं क्षेममारोग्यं पर्जन्यः कामवृष्टिदः ॥३॥
भवते सस्यनिष्पत्तिः मातरा पूजनात्सदा । चिरन्तनाश्च या देव्यो गिरि दुर्गेषु संस्थिता ॥४॥
ताः पूजय द्विजश्रेष्ठ नृपराष्ट्र-विवृद्धिदाः । अनाथा मलिना दीना बलिमाल्यविवर्जिताः ॥५॥
सकृत्संपूजिता विप्र सर्वकामफलप्रदाः । एकाहमपि भक्त्या च कन्यासंस्थे दिवाकरे ॥६॥
पूजयित्वा शिवाचक्रं दीपान्संबोधयति च । ते लभन्ते शुभान् भोगान् आयुरारोग्यसम्पदः ॥७॥
संध्याकाले तु सम्प्राप्ते पूजयित्वा तु मातरः । ये ददन्ति पुनर्दीपान् सिन्दूरं पललान्वितम् ॥८॥
न तेषां दुरितं किंचिद्विद्यते मुनिसत्तम । रुद्रो ब्रह्मा तथा ईशः स्कन्दो विष्णुर्यमो हरिः ॥९॥
परा च विघ्नसहिता स्त्रीरूपाः सप्त संस्थिताः । मातरा पूजनाद्विप्र सर्वदेवाश्च पूजिताः ॥१०॥
त्रिकालं सप्तकालं वा एकपंचमथापि वा । पूजयेन्न तु कन्यास्थे क्षणं पूषादि लंघयेत् ॥११॥
नातः परतरं किंचिद् त्रिषु लोकेषु विद्यते । यथा जीर्णस्य संस्कारात् तव राजन् शुभं भुवि[3] ॥१२॥

इति श्रीदेवीपुराणे मातृपूजानाम सप्तदशाधिकशततमोऽध्यायः[4] ।

---

१. विशोवला ग ।
२. शूद्रावा क ।
३. सुभक्तितः क ग ।
४. आद्ये मातृकापूजा क ।



# अष्टादशाधिकशततमोऽध्यायः ।

वशिष्ठ उवाच ।

मातरो भैरवं दुर्गां शीर्णं गेहसमाश्रिताम् । चालयित्वा तु प्रासादं कुर्याद्यस्तु द्विजोत्तमः ॥१॥
पक्वेष्टृदारुशैलं वा तत्र पूजाफलं[1] शृणु । ब्रह्मेन्द्ररुद्रविष्णूनां सूर्यस्य च द्विजोत्तम ॥२॥
नोत्तरं शस्यते मार्गं मातॄणां न च भैरव । दुर्गायाः सर्वकालं तु चालनं मातरासु च ॥३॥
नवभेदाः समाख्याताः एकमेकेन मातरः । तासान्तु[2] मातृकादेवी चामुण्डा रुरुघातिनी ॥४॥

कस्यास्ते चालनं कार्यमघोरास्त्रेण भो द्विज ।
कालिकावज्रघोराणां दमनी वा न राक्षसाः[3] ॥५॥
चालने विहिता वत्स समयं मातृजं पिवा ।
शतजप्तेन तोयेन स्नापयित्वा बलिं क्षिपेत् ॥६॥
वस्त्ररक्त-विमिश्रान्त मद्य मांसाकृतान्विताम् ।
दत्त्वा दिक्षु समस्तासु चालयेच्चर्चिकां तथा ॥७॥
आविष्टो[4] ह्यथवा मन्त्री यदा चालयते शिवाम् ।
तदा क्षेमं विजानीत राजा पाति वसुन्धराम् ॥
चालिता दक्षिणा नेया चोत्तरस्यां तु स्थापयेत् ।
पूज्यमाना सदा वत्स यावत् प्रासादनिर्णयम् ॥६॥
निष्पन्नेषु मुहूर्त्तेषु प्रतिष्ठाविधिना विशेत् ।
प्रतिमा वा यदा जीर्णा पीठिका वाथ चालयेत् ॥१०॥

---

१. पुण्यविधिम् क ।
२. तासांनु नायिका देवी क ग ।
३. दमनी वा नवाक्षरा क । बालवःक्षरा ग ।
४. आविष्णो क ।

हृदयं होमयित्वा तु तदा संचालनं भवेत् । हेमलांगूलकं कृत्वा शिवं चान्यं विपश्चिता ॥११॥
बालरज्ज्वा[1] निवर्त्तन्तु बृषस्य ककुदैर्द्विज । क्षीरवृक्षसमिधस्तु कृत्वा दारवीं दहेद्विभो ॥१२॥
शैलं महाम्भसि क्षिप्त्वा तदा चान्यं निवेशयेत् ।
प्रतिष्ठाविधिमाश्रित्य सर्वं कुर्याद् द्विजोत्तम ॥१३॥
स्वेन स्वेन विधानेन मंत्रैः सांङ्ग–समुद्भवैः । स्थापयेद्देवता वत्स मातृणां मातृकी विधिः ॥१४॥
शीर्णा देव्याया प्रासादा ये पुनः संस्कृता द्विज ।
अशोच्यास्ते विजानीयाद् धूतपापाः महाधिपः ॥१५॥
मूलाच्चतुर्गुणं पुण्यमाप्नुयात् जीर्णकारकाः । तस्मात् सर्वप्रयत्नेन जीर्णं पाल्यं विपश्चिता ॥१६॥
शून्यं देवालयं वत्स यस्मिन् देशेऽपि तिष्ठति । भयं तत्र विजानीयाद् दुर्भिक्षं तस्करं पिवा ॥१७॥
जीर्णं देहं यथा देही त्यक्त्वा चान्यं समाश्रयेत् ।
देवता जीर्णं प्रासादं त्यक्त्वान्यत्र तु यान्त्यपि ॥१८॥
तस्मिन् शून्ये पिशाचाद्या आश्रिता भयदा नृणाम् ।
उद्वासयन्ति तत्स्थानं कालं कुर्वन्ति दारुणम्[2] ॥१९॥
निःशौचास्तेऽभवन् वत्स तत्स्थाः लोका न संशयः ।
ग्रहापसृष्ट विद्विष्टा यान्ति नाशं महानपि ॥२०॥
तस्मात् तं संस्करेद्वत्स पूजार्थं चान्यथा न्यसेत् ।
देवं देवालयं वापि जीर्णाजीर्णं नियोजयेत् ॥२१॥
यथा सदा भवेत्पूजा तथा कार्यं विपश्चिता । मूलमेवाप्नुयात्पुण्यं द्रव्यांशेन महामुनिः ॥२२॥
कर्त्ता शताधिकं मूलादाप्नुयादविचारणात् । राजा षष्ठांशमाप्नोति प्रजाराष्ट्रं च शुध्यति[3] ॥२३॥

इति श्रीदेवीपुराणे जीर्णदेवताप्रतीकारो नामाष्टादशाधिकशततमोऽध्यायः ।[4]

---

१. वानरज्वा क । वालनन्द्वस्तु ग ।
२. दारुणम् स्वनम् क ग ।
३. विन्दति क ग ।
४. आद्ये जीर्णसंस्कार प्रतीकारविधिः क ग ।

# एकोनविंशत्यधिकशततमोऽध्यायः ।

इन्द्र उवाच ।

महादेवेन भो ब्रह्मन् महाबलपराक्रमः । हत्वा खट्वासुरेन्द्रं तु खट्वांग चरितन्तु किम् ॥१॥

ब्रह्मोवाच ।

ततो ब्रह्मादयो[1] जित्वा दनुनाथेन वासव । कैलाशं पर्वतेन्द्रं तु गतो देवाय शूलिने ॥२॥

योद्धुं सर्वबलोपेतस्तथा रुद्रेन मन्युना । आदाय तरसा शूलं क्रीडमानेन घातितः ॥३॥

विगतासुस्तथा कृत्वा महापशुसमुद्भवम् । धावितं वामसंस्थं तु खट्वांगं देवपूजितम् ॥४॥

कपालं याम्यहस्तेन कपाला शिरसा तथा । चन्द्रार्धं जाह्नवीमालां महाभूषण पन्नगः ॥५॥

हारादिकटिसूत्रञ्च उपवीतं महोरगम् । अनन्तं वासुकिं तक्षां सर्वनागविभूषितम् ॥६॥

कृत्वा रूपं महाघोरं देवदेवं नमस्कृतम् । भैरवं सर्वदेवानां[2] शमनं शत्रुनाशनम् ॥७॥

ततो ब्रह्मादयो वत्स भीता मोहवशं गता । पृच्छति को भवान् चात्र क्रीडते भूतले शुभम् ॥७॥

न विद्यते अपरं किंचित् समयो देवमुत्तमम् । ततो विहस्य देवेशं शिरस्ते ब्रह्मा यत्पुरा ॥६॥

क्षात्तं[3] युगकोटिं तु नारायण तनुरुहैः । माल्य नरशिरा धेयं धारयामि भवोद्भव ॥१०॥

नृपवाहन उवाच ।

कस्मिन् काले व्रतं देवो धृतवान् भैरवं महत् ।
कथं विष्णुशिरोमाला कपालं विधृतं प्रभोः ।
एतदिच्छामि विज्ञातुं तत्त्वतः कथ्यताम् विभो ॥११॥

---

१. विष्णवादयो ग ।

२. सर्वपापानां ग ।

३. वृन्तितं मृतकोटिन्तु ख ।

अगस्त्य उवाच ।

सर्वदेवेश्वरो देवो ब्रह्मा विष्णुतनुरुहैः । यथावत् क्रियते[1] वत्स तथा ते कथयाम्यहम् ॥१२॥
वृत्तोत्तमं महापुण्यं यत्र ज्ञातं सुरैरपि । सम्भवन्तु कपालस्य खट्वांगस्य च सुव्रत ॥१३॥

ईश्वर उवाच ।

यथानादि परो देवस्तथाहं वरवर्णिनि । संसारोऽपि तदवस्थः परमार्थेन वेदितुम्[2] ॥१४॥
तस्य देवातिदेवस्य कारणस्यामितद्युतेः । इच्छाधिकारणञ्चाहं इच्छा त्वं तस्य भाविनि ॥१५॥
माया च जगतः स्रष्टा[3] त्वं च सृष्टिर्वरानने ।
क्रियाख्या पच्यते येन तेन सृजसि वाङ्मयम् ॥१६॥
मूलप्रकृतिरूपेण सृष्टिस्त्वं पद्मजन्मनः । सोऽपि शतांशभागेन निमेषस्य मम प्रिये ॥१७॥
स्थित्वा विनाशमायाति पुनस्तत्रैव गीयते[4] । कपालं तस्य चादाय क्रीडामि विपुलेऽध्वनि ॥१८॥
एवं कपाल कोटिभिर्माला येयं विभाति मे । तस्य गात्रैव संख्यायैर्वृत्तान्तं वरवर्णिनि ॥१९॥
यदा मायोदरं[5] सर्वं कालेन प्रलयं गतम् । तदाहमीश्वरे तत्त्वे भवामि रमितः सुखी ॥२०॥
ब्रह्मणोऽनन्त कपालैस्तु धृत्वा मालां सुभैरवाम् । अनन्तं भैरवं रूपं कालं द्वादशलोचनम् ॥२१॥
अतिघोरं समाश्रित्य वियत्यस्मिन् रमाम्यहम् । एकाकी मातृभिर्युक्तः[6] स्ववीर्यबलशालिभिः ।२२॥
परार्धद्वय कालान्ते व्यतिक्रान्ते महेश्वरि । क्रीडयित्वा समस्ताभिः शक्तिभिर्घोररूपिभिः ॥२३॥
भावभूतमयं विश्वं सत्तत्त्वं गहनात्मकम् । कृत्वोदरगतं सर्वमन्न ग्राममनन्तकम् ॥२४॥
विनिकृत्य समारुद्धां[7] योगनिद्राश्रितः सुखी । शयामि शक्तिपर्यन्के वीरमाते ततो ह्यहम् ॥२५॥
पुनर्नेत्रोदये दिव्ये विनष्टे परमां चये । स्वशक्तिसंप्रबुद्धस्य वृताश्चित्रा प्रजायते ॥२६॥
भावैस्तत्त्वैस्तथाभूतैर्मालियं भुवनात्मकी । मायाद्यावनिपर्यन्तं युगपद् योगजं महत् ॥२७॥

---

१. यथा क्रीडयते वत्स ग ।
२. परमात्मेन चोदितम् ग ।
३. मया च जगत–स्रष्टा ख । जगतस्याम्य ग ।
४. नीयते ग ।
५. मायोदन ग ।
६. मातृभिर्मुक्तः सुवीर्यं ग ।
७. विनिशम्य तामनित्वम् ग ।

यद् यत्र विलयं याति मच्छरीरेऽखिलेश्वरी । तस्य तस्य तु तत्रैव सम्भवः परिकीर्त्तितः ॥२८॥
स्वकायात् स्वेदमुत्पाद्य कृत्वा तु करमध्यतः । बुद्बुदाश्चामृतमयः शीतलांभः स्वतेजसः ॥२९॥
मयांगुष्ठेन मथितो यावदन्यस्तु आगतः । बुद्बुदाकार सदृशं शतकोटिप्रविस्तरम् ॥३०॥
विभाति करमध्यस्थं मम तस्मिन् महात्मनि । तेजेन[1] कठिनीभूतं हेमभानुशतप्रभम् ॥३१॥
तदण्डमिति विख्यातं ब्रह्माण्डमिति निश्चितम् । परेच्छाक्षोभ्यमव्यक्तां व्यक्तिहेतुकृतं मया ॥३२॥
तत्रास्ते सप्त लोकानि पाताल नरकाणि च । कालानलावनिर्यानि अनेकाकारलक्षणम् ॥३३॥
विश्वरूपाण्यहं कृत्वा तत्रैवान्तरधीयत । ममेच्छयापि विसृष्टः स ब्रह्मा मम[2] गुरुर्महत् ॥३४॥

सत्तस्थस्तिष्ठतं स्वस्थो न परं किञ्च विन्दति ।
यच्छेषांसकरस्थं मे रजसा निश्चितं तु तत् ॥३५॥
विष्णुस्तत्रास्ति सुव्यक्तो अतिवीर्यो ममात्मकः ।
रजेन उदयामास तत्सत्त्वं ब्रह्मजं प्रिये ॥३६॥
विक्षुब्धस्तु ततो ब्रह्मा ज्वलितः स्वेन तेजसा ।
मया संचित्य तमसा[3] रजो वृद्धस्वरं भृशम् ॥३७॥
सोऽपि स्ववीर्यमुत्कृष्टं तीव्रां ज्वालां मुमोचति ।
सहस्र बाहुवदना सहस्रचरणं शिरः ॥३८॥

सर्वायुधकरौ द्वौ तु मर्षनानौ परस्परम् । तौ दृष्ट्वा भयसंत्रस्ताः पुराणपुरुषोत्तमाः ॥३९॥
क्षयाम्बुदाः समारब्धा वर्धिता गगनाम्बरे । घोररावाः करांलानि रुरोदन्ति दिशो दश ॥४०॥
क्षयार्चि विवशा दीर्घा चकासन्ति तडिल्लता । प्रचण्ड मारुताधारा[4] पतन्ति च समुद्यताः ॥४१॥
समं धरित्रीं सकलां दर्शयन्ति महातलम् । विस्तातिजलोद्वेगं यान्ति सप्तार्णवे भृशम् ॥४२॥

धूमार्च्चि सकलाश्चोच्चैः स्वरेणार्चितमुद्यताः ।
स्वमर्यादाविनिर्मुक्ता तिग्मातंका प्रकल्पिताः ॥४३॥

---

१. भोजनका चनभूतम ग ।
२. पटगुरुः ख ।
३. मनसा ख ।
४. प्रचण्डमारुतहता धाराः पतितुमुद्यताः ख ।

कठारावं विमुञ्चन्ति करिणोऽपि[1] मदच्युताः । गर्जिते च महातीव्रं न तु पतितुमिच्छति ॥४४॥
दुर्लक्ष्यं भ्रमतेऽतीव चक्रवद् दण्ड चोदितम्[2] । पतन्ति दिक्पालानि दनुपालानि कोटिशः ॥४५॥
प्रदीप्तांगारवृष्टिश्च सञ्जाता तीव्रभास्वरा । स्थूलधारा विमुञ्चन्ति घनाग्निकणजानि तु ॥४६॥
सिंहाकारा विलम्बन्ति वह्नेर्ज्वाला सुदारुणा । लेलिहाना भ्रमन्त्यन्ये व्यालरूपार्चिषो घनः ॥४७॥
क्षये चाग्निमुखैः घोरैः शिवाभिर्विप्लुतं जगत् । कल्पान्तगृध्रनिचितं देवि भूमिदिगाननम् ॥४८॥
विलुप्यमानं[3] सकलं भवानि भयविद्रुतम् '। ब्रह्मास्त्रैर्व्याकुलं सर्वं वायव्यं पार्थिवैश्चितम् ॥४९॥
वासवैः प्लाव्यमानं वै करालानलतापितम् । सर्वमेतन्महादेवि विपरीतं स्थितं जगत् ॥५०॥
सदेवगणगान्धर्वं सकिन्नरमहोरगम् । यक्ष– रक्ष पिशाचाद्यं स्थावराद्यं च पार्वति ॥५१॥

ब्रह्माण्डान्तर्गतश्चैतद् यथान्यत् स्थानमुत्तमम् ।
विनाशमुपगच्छन्ति दृष्ट्वा चैतच्चराचरम् ॥५२॥
ततस्त्वेकार्णवे घोरे हन्यमाने महोर्मिभिः ।
विष्फार्यमानो सन्नद्धो तर्ज्जयन्तौ परस्परम् ॥५३॥
अहंकारवशानित्यो तमसातीवभूरिणा ।
प्रेरितौ नष्टसंज्ञौ च विहितौ वत्तितेक्षणौ ॥५४॥
क्षपास्त्राणि समुद्गम्य कोपात् संरक्तलोचनौ ।
विवादं संस्थितौ द्वौ तु गदायुद्धं च पार्वति ॥५५॥
मत्स्वरूपमजानन्तौ मम मायाविमोहितौ ।
मातृत्वकारणार्थी च प्रज्ञार्थी च कृतः स्मृतः ॥५६॥
तयोः कार्यमिदं ध्यात्वा प्रजेशानां महामुने ।
दर्पोपशमनोपाय इति सञ्चिन्तितो मया ॥५७॥
कृति-कारण-कार्यार्थमुत्पत्तिनिधनं गतः ।
ततो विविधहेतुत्वं लिंगरूपातितेजसा ॥५८॥

१. अतिघोरं ग । २. चंडव गंडे चोदितम ग । ३. विवभ्यमानं ग ।

लेलिहानोऽर्च्चिसंघेन अतिभूयात्तु संस्थितिः ।
विद्रुता महत्तेजेन भीताश्च वरवर्णिनि ॥५९॥
मांगल्यश्चोर्ध्वरूपं मे न च विन्दति मोहिताः ।
ततः स्तुवन्ति मां भीता भक्तिमास्थाय निश्चिताः ॥६०॥

दिव्यं वर्ष सहस्रन्तु ऋक्साम यजुषैः स्तवैः । ततस्तुष्टैस्तु वीरेश स्वरूपं दर्शितं मया ॥६१॥
कपालमालिनं भीमं खट्वांग करभास्वरम् । सर्पैर नन्तकल्पैश्च कोटिचक्रं करालिणम् ॥६२॥
पश्यन्ति तत्रमनसः दंष्ट्राश्च क्षुरितं मुखम् । मा भीर्वेदं मया चोक्तं पृच्छन्ति व्रतमुत्तमम् ॥६३॥
किमेतदद्भुतं रूपं किमेतद्भूषणं विभो । किमेतद्राजते व्योम्नि त्रिशिखं शूलमुज्ज्वलम् ॥६४॥
उत्तमागं शुभं कस्य यत्ते करतले स्थितम् । ततोऽहं प्रत्युवाचेदं तयोर्दर्पहरं वचः ॥६५॥

अनेक मुण्डकोटिभिर्येयं माला विभाति च ।
तदीयैस्तनुभिर्ब्रह्म विनष्टस्य पुनः पुनः ॥६६॥
यानि चान्यान्यनेकानि[1] ग्रीवाहस्तकटिस्थिताः ।
नारायणस्य तनवो विनष्टस्य पुनः पुनः ॥६७॥
याश्चैत्तद्दक्षिणे हस्ते खट्वांगं नाम विश्रुतम् ।
अस्योत्पत्तिं विधास्यामि शृणुष्वेकमना विभो ॥६८।
अतीते युगकोट्यैस्तु अहं योगमुपागतः ।
चिन्तयामि शिवं देवं यत्तत् कारणमुत्तमम् ॥६९॥
यावत्तस्मिन् समुत्पन्नो योगविघ्नोऽतिदारुणः ।
ततो माया सुरुष्टेन हुंकारेण निपातितः ॥७०॥
उक्तश्च त्वं महाबाहो खं विभागे जनार्दन ।
विघ्नेशस्य महाविघ्नं कृत्वा मोक्षं गमिष्यसि ॥७१॥

---

१, यदेन:क्षिणं हस्ते ग ।

खट्वेन खट्वानामा स हतश्च बलदर्पितः। कपालस्य समुत्पत्तिः खट्वांगस्य च सुन्दरि ॥७२॥
कथितन्तु समासेन सर्वपाप प्रणाशनी।

अगस्त्य उवाच।

सृष्टे पादे पुरा वत्स मया खट्वांगलक्षणम् ॥७३॥
अधिदैवतविन्यासं कथितन्तु नृपोत्तम। शिवस्थित्वा[1]तु ब्रह्मस्य गन्धवत्यास्तटे नृप ॥७४॥
नारायणस्य धारायां[2] रक्तधारा च या कृता। देवी तत्र समुत्पन्ना स्तवराजप्रतोषिता ॥७५॥

इति श्रीदेवीपुराणे खट्वावधो नामैकोनविंशत्यधिकशततमोऽध्यायः[3]।

१. शिरःछित्त्वा ख।
२. वाहोऽयं ग।
३. आद्येदेव्यतारे खट्वावधः समाप्तः ग।



# विंशत्यधिकशततमोऽध्यायः ।

नरवाहन उवाच ।

देव्योत्पत्तिविधानं च व्रतचर्या पृथग्विधा । विहितं श्रोतुमिच्छामि तनुशुद्धिं हुताशने ॥१॥

अगस्त्य उवाच ।

जप्त्वा तु चतुरष्टन्तु[1] अष्टाविंशमथापि वा । श्रूयते[2] लक्षमात्रेण यदि ब्रह्महनोऽपितु ॥२॥
शाकयावकक्षीराशी करमूलफलाशनः । पदमालां जपन्वत्स तनुशुद्धिमवाप्नुयात् ॥३॥
त्रितयं वा जपेन्मन्त्रः गायत्रीं लक्षमन्विताम् । मुच्यते सर्वपापैश्च यमनियमोपसेवनात् ॥४॥
ब्रह्मचर्यं दया क्षान्तिः ध्यानं सत्यमकल्कता । अहिंसा सत्यमाधुर्यं दमश्चेति यमाः स्मृताः ॥५॥
स्नानमौनोपवासेज्या स्वाध्यायोपस्थ निग्रहः । नियमात् गुरुशुश्रूषा शौचोऽक्रोधोऽप्रमादता ॥६॥
पंचगव्यं तु गोक्षीरं दधि मूत्रं शकृद् घृतम् । जप्त्वा परेऽह्यूपवसेत् कृच्छ्रं सांतपनं चरन् ॥७॥
पृथक कर्ता पर्णद्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महासांतपनः स्मृतः ॥८॥
पर्णोदुम्बर राजीवः विल्वपत्र कुशोदकैः । प्रत्येकं प्रत्यहाभ्यस्तैः पर्णकृच्छ्रः उदाहृतः ॥९॥
तप्तक्षीरघृताम्बूनां एकैकः प्रत्यहं पिबेत् । एकरात्रोपवासश्च तप्तकृच्छ्रन्तु पावनम् ॥१०॥
एकभक्तेन नक्तेन तथैवायासितेन च । उपवासेन चैवायं पादकृच्छ्रः उदाहृतः ॥११॥
यथाकथचित् त्रिगुणः प्राजापत्योऽयमुच्यते । अयमेवाति कृच्छ्रः स्यात् पाणिपुरान्नभोजनैः ॥१२॥
कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् । द्वादशाहोपवासेन पराकः परिकीर्त्तितः ॥१३॥
त्रीण्येकाचामतक्राम्बु पशूनां प्रतिासरम्[3] । एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥१४॥
एषं त्रिरात्रमभ्यासादेकैकं प्रत्यहं पिबेत् । तुलापुरुष इत्येष ज्ञेयः पञ्च दशाहिकः ॥१५॥

---

१. वर्णाचतुर्थंतु क ग । २. शुध्यते क ग ।
३. पणिकं वनक्रात्यु च शत्रूणां प्रतिवसरैं क । पिण्याकं वातकात्युपसक्तूनां प्रतिवासरः क ग ।

तिथिवृद्धौ चरेत् पिण्डानशुल्के शिखण्ड[1]सस्थितान् । एकैकं दापयेत् कृष्णः पिण्डं चान्द्रायणं चरेत् १६।
यथा कथंचित् पिण्डानां चत्वारिंशत् शतद्वयम् । मासेन चोपयुञ्जीत चान्द्रायणमथापरम् ॥१७॥

कुर्यात् त्रिषवणस्नानं कृच्छ्रं चान्द्रायणं चरन् ।
पवित्राणि जपेत् पिण्डान् ह्यमन्त्रेनाभिमन्त्रितान ॥१८॥

अनादिष्टेषु पात्रेषु शुद्धि चान्द्रायणेन तु । धर्मार्थं यश्चरेत् एतच्चन्द्रस्य याति सलोकताम् ॥१९॥
कृच्छ्रं तद्धर्मं कामन्तु महतीं श्रियमश्नुते । यथा शास्त्रविधानेन फलं होमादवाप्नुयात् ॥२०॥

इति श्री देवीपुराणे यम-नियम शुद्धिर्नाम विंशत्यधिकशततमोऽध्यायः[2] ।

---

२. शिखरेस्थिताम् क ।

३. आद्ये यम-नियम-तप-सिद्धिः । क ग



# एकविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

वह्नेर्विधानं परमं सर्वकामप्रसाधकम् । कथयामि सुरश्रेष्ठ नाम–भेद–क्रियादिभिः ॥१॥
अग्नेः परिग्रहः कार्यः सर्वशास्त्रार्थ वेदकैः । वाम-दक्षिण-सिद्धान्त-वेदान्त-गुह्य–पारगैः ॥२॥
कार्यः परिग्रहो वह्नेः सर्वसम्पत्ति वेदिभिः । अन्यथा अन्तरायस्तु भवन्ति धन-आयुषौ ॥३॥
नित्यं व्याधिरधन्यो वा सर्वलोकनमस्कृतः । अविदित्वा यदा वत्स ज्ञात्वा सर्वं भवेद् बुधः[1] ॥४॥
तस्मात्सर्वप्रयत्नेन बहुविघ्ने क्रिया मता । कुण्डाष्टकं समाख्यातं त्रिभेदन्तु मया तव ॥५॥
बहुवह्निविधानन्तु एकस्यैवोपचारतः । स्त्री-बाल-वृद्ध-शूद्रैस्तु[2] होतव्यं प्रत्यहं तथा ॥६॥
मठे महानसे वापि न कुण्डे तु कदाचन । संस्कृते नामभेदैश्च रक्षयित्वा हुताशनम् ॥७॥
महाविद्यार्थवेत्तारैः होतव्यं फलकांक्षिभिः । श्रूयते च पुरा वत्स अविदित्वा वसोः सुतः ॥८॥
संस्कृतेऽहवमानस्य राज्यभ्रंशमवाप्नुयात् । तथा वा अनहोतारमचिरान्मृत्युमवाप्नुयात् ॥९॥
तस्मादस्थिरवह्नौ तु न होतव्यमवेदिना ।
वेदनन्तु प्रवक्ष्यामि येन सिद्धिः प्रजायते ॥१०॥

बृहस्पतिरुवाच ।

अग्निचक्रविधिं पुण्यं देवतानां च स्थापनम् । श्रोतुमिच्छाम्यहं तात कथयस्व प्रसादतः ॥११॥

ब्रह्मोवाच ।

चतुष्कोणे ह्यहं वत्स मण्डले मधुसूदन । धनुषाकृतिको रुद्रः सर्वदेव नमस्कृतः ॥१२॥

---

१, उपप्नुते क ।
२. मुर्खैस्तु क ग ।
३. अवनिहोतारम् क ग ।

चतुरस्ने[1] भवेदग्निर्मण्डले तु हुताशनः । अर्धचन्द्रेऽनलो ह्यग्निरेवं यज्ञः प्रतिष्ठितः ॥१३॥
द्विजानाँ देवता सद्य आचार्यो योगवेदनम् । उदके वरुणो देवो दर्भेषु च महोरगाः ॥१४॥
स्रुचायान्तु महादेवी श्रुवो देवस्त्रिलोचनः । तत्संयोगपरो देवः सर्वदेवनमस्कृतः ॥१५॥
प्रणीता पृथिवी ज्ञेया स्वाहा कारे महामरवाः । पुष्पेषु ऋतवो विद्धि पात्रेषु च महोदधिः ॥१६॥
वेदीमध्ये तु गायत्री सोमो अभ्युक्षणे स्थितः । ईन्धने मणिभद्रस्तु शिखं वज्रधरायुधः ॥१७॥
होतारन्तु विजानीयात् चमसादिषु पर्वताः । उच्छ्रवे देवता रुद्रस्तालवृन्ते तु वासवः ॥१८॥
मन्त्रणेषु गणाः सर्वाः भस्मे भूयोऽपि शंकरः । लोकपालास्तु कोणेषु ओंकारे सर्वदेवताः ॥१९॥
मातरो होमभागे तु पूतना विष्फुलिंगदा । आदित्यादिस्थिता तेजे यो देवोऽपरः परः ॥२०॥
देवानां प्रात र्होमन्तु प्रहरार्धेन भूतिदम् । मध्यान्हेतु मनुष्याणां होमहेतु प्रियादिकम् ॥२१॥
अपराह्ने पितृणाञ्च सन्ध्यायां ग्रहभौतिकम् । रात्रौ पापविनाशार्थं दिव्यसिद्धि प्रसाधकम् ॥२२॥
प्रहरार्धेन होतव्यमर्धरात्रे च आयुदम् । शेषे पुत्रप्रदं वत्स उदये सर्व कामदम् ॥२३॥
दक्षिणा सर्वकामेषु सर्वप्राप्तिप्रदायकम् । क्षणाधि देवता देया प्रथमाचरणाहुतिः ॥२४॥
अन्यथा विफलं विप्र भवते हवनं सदा । वार्क्षमृण्मयताम्राद्यैः रौप्यहेममयोद्भवैः ॥२५॥
दशधा पुण्यवृद्धिस्तु हवनस्नान भोजनैः । देवांकैः शूल पद्मांकैः शंखचक्रहुताशनैः ॥२६॥
घृत-क्षीर-वसादीनि ग्रहीतव्यानि बुद्धिमान् । देव्यास्नापन यज्ञियै र्वसोर्धारा प्रभावितैः ॥२७॥
द्रव्यैर्होमं प्रकर्त्तव्यमन्यथा वा विधानतः । आप्त वेदेषु साम्तृप्ति पुष्टा दास्यन्ति देवताः ॥२८॥
वेला हीनेषु सुराणामधिदेवभुजं फलम् । एवं ते कथित वत्स सर्वलोकसुखावहन् ॥२९॥
होतारो मन्त्रहीनास्तु अशुचिर्भवते सदा । तस्मादसंस्कृते वह्नौ न होतव्यमवेदकैः ॥३०॥
मन्त्रविदश्च होतारो[2] आप्यायन्ति देवताः । अवेदकस्तु होतारो नैव प्रीणाति वै सुरान् ॥३१॥
होमात्सर्वफलावाप्तिः सर्वेषामपि जायते ।
तस्मान्मन्त्रविधानज्ञः प्रातरेव शुभप्रदः ॥३२॥

---

१. क ग पुस्तके ग इत आरभ्य दश श्लोका न सन्ति ।
२. मन्त्राविन्दक होतारो क ग ।

पूर्वाग्नि देवता विष्णुर्दक्षिणेन हरः स्थितः । पश्चिमेन स्थितो ब्रह्मा एते अग्निस्थ देवताः ॥३३॥

तेजे रुद्रं विजानीयाज्ज्वालायां चापि चर्चिका । त्रयायुषं[1] च विप्राणां लक्ष्मीस्तत्रापि देवताः ॥३४॥

एवं प्रतिष्ठितं होमंमग्नयश्च त्रयस्तथा । त्रयो देवास्त्रयः काला त्रयोग्नि गृहमन्त्रिताः ॥३५॥

गार्हपत्यं दक्षिणाग्निः आहवनीयश्च ते त्रयः ।
एकस्यैव समुत्पन्ना बहुभेदा द्विजोत्तम ॥३६॥

इति श्री देवीपुराणे त्रिरग्निविधिर्नाम एकविंशत्यधिकशततमोऽध्यायः[2] ।

---

१. क्रियायुषम् ख ।
२. आद्ये देव्यवतारे त्रिरग्निविधिः क ग ।



# द्वाविंशत्यधिकशततमोऽध्याय : ।

बृहस्पतिरुवाच ।

एकस्त्रिगुण आख्यातः सर्वदेव सुखावहः । बहुधा तत्कथं कर्म योजयन्ति द्विजोत्तमा ॥१॥
दक्षिणाग्नि विभागं तु प्रसूतिर्बहुधा तथा । नामभिः कर्मभिर्द्देव कथयस्व समासतः ॥२॥
एवमुक्तस्तु गुरुणा ब्रह्मा लोकपितामहः । उवाच मधुरां वाणीं शृणुष्वावहितो द्विज ॥३॥

ब्रह्मोवाच ।

पुरा कृतयुगे विप्र एक एव हुताशन । रुद्रमूर्त्ति स्थितो नित्यं तेजो नाम महात्मनः ॥४॥
त्रेतायां दक्षिणेशो वै यज्ञार्थं विसृजन्महान् । गार्हपत्यं तमो जातं हवनीयं ततोऽभवत् ॥५॥
हवनीय प्रसूतिस्तु भरताद्या महौजसः । एकपञ्चाशतं नाम चराचरविधायकाः ॥६॥
तेषां वै नाम कर्माणि बहुधा ब्रूहि भो द्विज । सप्त सप्त विभागेन तेषां सन्ततिजातयः ॥७॥
[2]भरती वरमांगल्ये विभुश्च बल अंगिराः । समुद्भवो जयो रुद्रः संयुगः कालिको भवः ॥८॥
सूर्यो जनः[3] शशांकश्च विश्वेदेवाः परावसुः । कल्माषः संचयो घोरो वडवाग्नि वरान्तकः ॥९॥
दक्षो निधीश्वरः कामः कालान्तक परान्तकौ । बीभत्सो विजयो धूम्रः कृष्णवर्णोऽथहाटकः ॥१०॥
अजितः शंकरः[4]शंखः शुद्धिदो जयदो गुरुः । अपरोऽपराजितः कश्च प्रतापो बहुदः शुभः ॥११॥
आरण्यः सर्वगः शम्भुः कामिको रिपुहा शिवः । गर्भाधानादिसंस्कारैः स भवेत् सर्वदकामदः ॥१२॥
परिग्रहानुरूपेण[5] तथा होमवशेन च । लघ्वाहारो विशुद्धश्च नित्यहोता प्रकीर्त्तितः ॥१३॥
कृत्वा हुताशने पंच कर्माणि भवते सदा । सर्वसिद्धि प्रदायित्वादन्यथा हवने चरुः ॥१४॥

---

१. स्थापितानि क ग ।
२. भवतो परमांगल्ये विभावचलसंज्ञकः ग ।
३. जलः ग ।
४. गह्वरः ग ।
५. अविग्रहान्नरूपेण त था होतृवशेन च ग ।

आधाने भवते ह्यग्निर्बर पुंसवने स्थितः । सीमन्ते मंगलो नाम जातकर्म विभुः स्मृतः ॥१५॥
नामे बलः समाख्यातः प्राशने अंगिरा मतः । चूडे समुद्भवो वह्निर्जयो व्रतनिबन्धने ॥१६॥
रुद्रो गोदानिको नाम विवाहे संयुगः स्मृतः । अग्निश्च कालिको नाम अग्निहोत्रे विधीयते ॥१७॥
आवसथ्ये भवो ज्ञेयः पितृणां विश्वदेवकः । अनलो जठरो वह्निः कल्माषोऽमृतभक्षणे ॥१८॥
सूर्यो वह्निर्महाहोमे जलो जलनिवेशने । शशांकः पूर्णिमाहोमे क्षये सम्वर्त्तको मतः[1] ॥१९॥
घोरः काष्ठ समृद्धश्च परान्तो वेणुसम्भवः । समुद्रे वडवाग्निस्तु दक्षः पाकविधो मतः ॥२०॥
निधीशो वसुधारायां कामदेवोऽथ धूमजः । तूषजः कामहा त्वग्नौ रथ्यायान्तु परान्तकः ॥२१॥
बीभत्सु क्षुत्करो वह्निर्विजयो नृपगेहजः । धूमजो वृक्षसमुत्थस्तु दीपे कृष्णपथो मतः ॥२२॥
हेमं तापे भवेद्दाद्ये अजितो मातृवेश्मजः । संगरो म्लेच्छलोकेषु शंखो वै चेष्टपाकजः ॥२३॥
आदित्ये शुद्धि विजानीयाज्जयः शुक्रनिवेशने[2] । गुरुदीक्षाविधौ वह्निरपरो तिण्डिलेषु च ॥२४॥
कण्ठानुकूलजो विद्धि लक्षहोम पराजितः । प्रतापो नृपदीक्षायां वहुदानजशोणजः ॥२५॥
शुभो ग्रहविधौ ह्यग्निरारण्ये अरणीभवः । सर्वगो वैद्युतो वह्निः शम्भुर्मणिसमुद्भवः ॥२६॥
कामिकः साधकाग्निश्च रिपुहा अभिचारजः । कोटिहोमे शिवो वह्निः सर्वकाम प्रसाधकः ॥२७॥
शिवतेजोद्भवो विप्र कालाग्निः स च कीर्त्तितः । एको बहुप्रकारैस्तु नाम कर्मैर्यथास्थितः ॥२८॥
कथितः पावको वत्स किं भूयः परिपृच्छति ॥२९॥

इति श्री देवीपुराणे वह्निभेदोनाम द्वाविंशत्यधिकशततमोऽध्यायः[3] ।

१. पद्यमिदं ग पुस्तके नास्ति ।
२. इलोकपंचकं ग पुस्तके नास्ति ।
३. इत्याद्ये वन्हिभेदः क ग ।



# त्रयोविंशत्यधिकशततमोध्यायः।

नृपवाहन उवाच ।

वह्निकर्मफलं विप्र कथितञ्चावधारितम् । पुष्पगन्धविशेषन्तु श्रोतुमिच्छामि तत्त्वतः ॥१॥

अगस्त्य उवाच ।

पात्राणां हेमरौप्योत्थैः यथा प्रोक्तो नृपोत्तम । घृतहोमे वरं यद्वत् तिलाश्च मदलेपने ॥२॥
चन्दनागुरु कर्पूर नखं धूपे वरं मतम् । मद कर्पूर काश्मीरं रोचना च चतुष्टयम् ॥३॥
एतेन लेपयेद्देव्याः सर्वकामानाप्नुयात् । जाती कंकोल-पत्रैला-कुष्टकुंकुम पत्रिका ॥४॥
जातीफलो लताख्या च स्नानगन्धा सदाधरा । नाग केशर कर्पूर सुरामांसी सबालकाः ॥५॥
उद्वर्त्तनाः समाख्याताः सदैव मातरप्रियाः । धूपं कल्याण नागन्तु नित्यं देव्या प्रियं नृप ॥६॥
चन्द्राख्यं लेपनं देयं सर्वसिद्धिप्रदायकम् । मणिमौक्तिक मालाश्च वितानञ्च दुकूलजम् ॥७॥
घण्टादि सर्वदा दत्त्वा हेमपुष्पफलं लभेत् । पुष्पैर्वारण्य सम्भूतैः पत्रैर्वा गिरिसम्भवैः ॥८॥
अपर्युषितान्यच्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः । आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेच्छिवाम् ॥९॥
पुष्पजाति विशेषेण भवेत्पुण्यं विशेषतः । तपः शीलगुणोपेते पात्रे वेदस्य पारगे ॥१०॥
दश दत्त्वा सुवर्णानि यत्फलं कुसुमेषु तत् । मातराणां सकृद्दत्त्वा लभते नृपसत्तम ॥११॥
तस्मात् पुष्पान् प्रवक्ष्यामि पत्राश्च सुरभीश्चये । केतकीश्चातिमुक्तश्च बक-बन्धू-बकुला ऋषिः ॥१२॥
कदम्बः कर्णिकारश्च सिन्धुवारः समृद्धये । पुन्नाग चम्पकं कुन्दं यूथिका नवमल्लिका ॥१३॥
दमना पद्मपत्रश्च शतधा पुण्यवृद्धये[1] । तारार्जुनमल्ली च बृहती शतपत्रिका ॥१४॥
करवीर कुसुम कह्लार बिल्वपाटल मालती । जवा विजो किलाशोको रक्तनीलोत्पलाः सिताः ।१५।

१. ग पुस्तके नास्ति ।

पंकजः शतपत्रश्च दशधा पुण्यवृद्धये । एतैस्तु अर्च्चयेद्देवीमाशुसिद्धिः प्रयच्छति ॥१६॥
द्रोणपुष्पी शमी क्षीरी नीलापमार्ग पत्रिकाः । सुरसा बर्वरा भद्रा सुरभी कर्णमल्लिका ॥१७॥
कदम्बैरर्चयेद्रात्रौ मल्लिका उभयोः समा । दिव्यशेषाणि पुष्पाणि यथालाभेन पूजयेत् ॥१८॥
कीटकेशोपविद्धानि शीर्णपर्युषितानि च । संपतितानि च पुष्पाणि त्यजेदुपहतानि च[1] ॥१९॥
मुकुलैर्नार्चयेद्देव्याः अपक्वं न निवेदयेत् । फलं क्वथितं विद्धञ्च यत्नात् पक्वमपि त्यजेत् ॥२०॥
अलाभेन च पुष्पाणां पत्राण्यपि निवेदयेत् । पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ॥२१॥
फलानामप्यलाभे तु तृणगुल्मौषधान्यपि । औषधीनामलाभे तु भक्त्या भवति पूजिता ॥२२॥
प्रत्येकमुक्तपुष्पेषु दशसौवर्णिकं फलम् । सन्निबद्धेषु तेष्वेव द्विगुणं फलमुच्यते ॥२३॥
यः सुगन्धै रक्तपुष्पैः सम्यग्देवीं प्रपूजयेत् । मालाभिर्वापि सुमनैः सोऽनन्तं फलमाप्नुयात् ॥२४॥
बिल्वपत्रैरखण्डैर्यः सकृल्लिगं प्रपूजयेत्[2] । सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥२५॥
यः कुर्याच्च शिवाराममाम्रबिल्वादि शोभितम् । जाती विजयराजार्क–करवीराब्ज–कुब्जकैः ॥२६॥
पुन्नाग नाग बकुलै अशोकोत्पल चम्पकैः । कदली हेमपुष्पाद्यैस्तस्य दानफलं शृणु ॥२७॥
यावत् तत्पत्र कुसुम बीजयुति फलानि च । तावद्वर्षसहस्राणि देव्यालोके स मोदते ॥२८॥

इति श्री देवीपुराणे पुष्पविधिर्नाम त्रयोविंशत्यधिकशततमोऽध्यायः[3] ।

१. ग पुस्तके नास्ति।
२. ख पुस्तके नास्ति।
२. इ० देवी पु० पुष्पविधिः क ग।



# चतुर्विंशत्यधिकशततमोऽध्यायः ।

नृपवाहन उवाच ।

समस्त धर्म कथनं तव वक्त्राद्विनिःसृतम् । श्रुतं भूयोऽपि पृच्छामि देव्या गुरुपूजनम् ॥१॥

अगस्त्य उवाच

भूगृहे गृहमध्ये वा रक्ताख्ये गिरिकन्दरे । नदी-नद-समुद्रे वा प्रकोष्ठे कूपवर्जिते ॥२॥

सुभक्त-जन-संकीर्णे[1] शुभवास्तूप संस्थिते । स्नात्वा शास्त्रविधानेन मंत्रपूर्वं नृपोत्तम ॥३॥

देव्यामूलांग षटकंतु न्यस्य शस्त्रेण[2] संस्थितः । मृदु चर्म कृते शस्त्रे तूलकार्पासपूरिते ॥४॥

एवंविधे स्थितो मन्त्री सुधूपासितवाससः । वितानध्वजसंछन्ने कटवस्त्रविभूषिते ॥५॥

मनोरमे कृते स्थाने देव्या स्नानादिकाः क्रियाः । कृत्वा पूर्वविधानेन हैमराजतताम्रजैः ॥६॥

कलशैस्तोयगंधाद्यैः पृथक्धूपसुधूपिताः । मदादिलेपिता देव्यो दुकूलपरिवारिताः ॥७॥

मुक्ताफलकृताहाराः पद्मराग विभूषिताः । खड्गखेटकपाशादि छुरिकादि निवेशयेत् ॥८॥

घृतपूर्णानि मांसानि नैवेद्यमुपपादयेत् ।
पूर्वोक्तविधिना वत्स पूजयेत् परमेश्वरीम् ॥९॥
ध्यात्वा देवीं शुभां वत्स विग्रहामपरां पराम् ।
प्रणिपत्य तथा देवीमात्मानमपि तादृशम् ॥१०॥
कृत्वा जपादिकं कार्यं विविधं कार्यसिद्धये ।
ततो निवेदयित्वा तु वह्निकर्म सुरक्षितम् ॥११॥
कार्यं पूर्वविधानेन स्त्रुवस्त्रुच्यादिरक्षिते ।
कुण्डे सुलक्षणोपेते वसोर्धारां प्रतिष्ठयेत् ॥१२॥

---

१. सुविभक्तजलसंकीर्णे क ।    २. तुल्यस्तवासने स्थितः क ग ।

प्रतिष्ठा रसपात्राणि होमे सा च विधिः शुभाः ।
बलिदानं प्रदातव्यं गृहेषु विविधेषु च ॥१३॥
शुभानां लोकपालानां नानायक्षविनायकान् ।
कृमि कीट पतंगेभ्यो भूमौ तोयान्नकल्पनाम्[3] ॥१४॥
कृत्वा क्षमापयेद्देवीं गुरुपूजां तथा कुरु ॥१५॥

इति श्री देवीपुराणे पूजाविधिर्नाम चतुर्विंशत्यधिकशततमोऽध्यायः[4] ।

---

१. मम क ग ।
२. शौचविधिः क ग ।
३. तोयानुकारणम् क ।
४. इत्याद्ये पूजाविधिः क ग ।



# पञ्चविंशत्यधिकशततमोऽध्यायः ।

अगस्त्य उवाच ।

देवाग्निगुरुविद्यायाः पूजायाः सदृशं फलम् । गुरुस्तेषां भवेत्पूज्यः सर्वकाम प्रसाधकः ॥१॥
विद्याग्नि देवतानाञ्च विशेष उपदेशकः । यर्थार्थो न्यायवादी च संदेह–विनिवर्त्तकः ॥२॥
तस्योक्तानि च वाक्यानि श्रद्धेयानि विपश्चितैः । यथार्थं पुण्यपापेषु तदश्रुत्वा व्रजत्यधः ॥३॥
तस्मात् सर्वप्रयत्नेन शिवं सम्पूजयेत् गुरुम्[1] । नृभिः परोपकाराय आत्मनश्च विमुक्तये ॥४॥
देव्या यागविधानेन तस्य पूजा विधीयते । हेम-गौ-मणि-भूम्यादि दानानि विनिवेदयेत् ॥५॥
गृहमण्डपविद्यादि शय्यादण्डाशनादिभिः । देयं गुरोर्विशेषेण यद्यदिष्टतमं भुवि ॥६॥
तेन सर्वमवाप्नोति तुष्टेन नृपसत्तम । अशक्तेषु[2] च सर्वेषु पार्वैविश्लेषितोऽपि वा ॥७॥
गुरोर्भावगतं वित्तं महद्भक्त्योपभोजयेत् । दक्षस्य यज्ञविघ्नं तु न तस्य[3] कृतवेदिने ॥८॥
तथापि न चलेद्भक्तिः पार्थस्य च तपोधने । जनमेजयस्य यज्ञे तु अन्येषां च महात्मनाम् ॥९॥
भवन्ति विघ्नकर्त्तारो धैर्यात्तेषु वरप्रदाः ॥१०॥

इति श्रीदेवीपुराणे गुरुदेवपूजाविधिर्नाम पञ्चविंशत्यधिकशततमोऽध्यायः[4] ।

---

१. शिववाक्यप्रवक्तारं शिववत्पूजयेद्गुरुम् क ग ।
२. अव्यक्तेषु क ।
३. वलस्य क ।
४. आद्ये देव्यवतारे गुरुपूजाविधिः क ग ।



# षड्विंशत्यधिकशततमोऽध्यायः ।

नृपवाहन उवाच ।

जपाध्ययनयुक्तानामन्तराया भवन्ति ये । तेषां संशमनं तात श्रोतुमिच्छामि तत्त्वतः ॥१॥

अगस्त्य उवाच ।

देव्याः संस्मरणं वत्स सर्वविघ्नविनाशनम् । अनेकधा समाख्यातं तथापि कथयामि ते ॥२॥

जपेन चात्मनः शुद्धिः अग्निकार्येण सम्पदः । सम्पदा चेह कर्माणि सिध्यन्ति मुक्तिदानि च ॥३॥

तस्माज्जपादि संशुद्धो अग्निकार्यं समारभेत् । आश्रयं सर्वसिद्धिनामिहामुत्र फलप्रदम् ॥४॥

पूर्वोक्तलक्षणे कुण्डे पूर्वनाम्नि हुताशने । श्रुवद्रव्यादिसंभार सम्पन्नस्तु ततोऽग्नये ॥५॥

प्रोक्षयित्वा पुरा प्राज्ञः कुण्डं मन्त्रोदकेन तु । ततस्तु वेष्टयेत् पश्चात् कवचेन यथाक्रमम् ॥६॥

पुनरुल्लेखनं कुर्यात् अस्त्र बीजेन भो नृप । दक्षिणोत्तरवारुण्यां मध्ये तिस्त्रस्तथोत्तरे ॥७॥

पुनरभ्युक्षणं पश्चात् कवचेन विधानवित् । विस्तरं कुण्डमध्ये तु प्रणवेन पुनर्न्यसेत् ॥८॥

ततः शक्तिं न्यसेत् तस्मिन् तडित्सहस्र सन्निभाम् । क्रतुमयीं[1] विशालाक्षीं सततं योनिमुद्रया ॥९॥

युगकेशवसं भिन्तं द्वितीयाश्रमसंमं स्थितम् । केशवान्तर्हितो देवो देवी एषा हुताशने ॥१०॥

गंधपुष्पार्चितं कृत्वा अर्पयित्वा विधानवित् । देव्याः संतर्पणार्थाय ततो वह्निं प्रकल्पयेत् ॥११॥

तेनैव स विनिर्मुक्त वेष्टगं नियोजितः । स एव परसंज्ञस्तु वह्निः सर्वार्थसाधकः ॥१२॥

ताम्रपात्रे शरावे वा आनयित्वा हुताशनम् । अस्त्रेण प्रोक्षयेत् तत्तु पुनर्बीजं नियोजयेत् ॥१३॥

ततस्त्वावेष्टयेत् पश्चात् कवचेन यथाविधिः । स्थापयित्वा[2] शिवा कुण्डे योनिमार्गेण निक्षिपेत् ॥१४॥

जयाख्येन तु मन्त्रेण हृदयन्तु पुनर्यजेत् । गर्भाधानं भवत्येवं जातवेदस्य पार्थिव ॥१५॥

---

१. भानुमती क। ऋतुमती ग।

२. भ्रामयित्वा तथा क।

शिरसाभ्यर्चयित्वा तु जयां देवीं ततो यजेत् । कृतं पुंसवनं ह्येवं सीमन्तोन्नयनं शृणु ॥१६॥
अजितामर्चयेत् पूर्वं शिवाबीजं ततो यजेत् । सीमन्तकरणं वह्नेः कृतं भवति वैदिकम् ॥१७॥
अस्त्रेण तु समभ्यर्च्य जपेद्देव्यापराजिताम् । जातकर्म कृतं ह्येवं ततो नाम विनिर्दिशेत् ॥१८॥
विघ्नेशमर्चयित्वा तु कवचस्य विनिर्दिशेत् । ततोऽस्य श्रावयेन्नाम देव्यग्निस्थः हुताशनः ॥१९॥
नादेव्यो देव्याश्च कर्माणि साधयन्ति कदाचन । तेन कार्येण राजन्ते कार्यो देवाग्निपावकः ॥२०॥
जननेव च शूद्राश्च[2] अभयाख्या नियोजने । बोधेन अंकुशाद्या तु वीणाख्या सर्वकर्मसु ॥२१॥
एवं वह्निस्तु संस्कृत्य मुद्रामंत्रैर्यथाक्रमम् । ततो होमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा ॥२२॥
हृद्बीजे नास्तरेद् दर्भान् परिधींश्च निधापयेत् । प्रागग्रानुत्तराग्रांश्च पुनर्देवान् प्रपूजयेत् ॥२३॥
ब्रह्माणं शंकरं विष्णुं मन्त्रेशं समन्वितम् । पूर्वादारभ्य गायत्र्या विष्टरस्थान् यथाक्रमम् ॥२४॥

आग्नेयीं दिशमाश्रित्य आज्यभागन्तु दापयेत् ।
अधिश्रयणं पुरा कृत्वा पश्चादुत्प्लवनादिकम् ॥२५॥
प्रोद्देशमात्रकं दर्भं प्रोच्छिन्ने तु नखेन तु ।
अंगुष्ठानामिके गृह्य घृतस्योत्प्लवनं कुरु ॥२६॥

ततः संप्लवने मन्त्री सम्मुखं घृतमुत्पुनः । दर्भचूडिकया सम्यक् अरण्योक्तं ज्वलं तया ।
नैराजनन्तु बाह्येन उदकेन स्पृशेत्ततः ॥२७॥

श्रुवस्रुचां प्रतापाग्नौ परिगृह्य समन्ततः । संस्पृश्य च कुशं सर्वान् अग्रमध्यानलौकिकान् ॥२८॥
स्थापयेद्दक्षिणे पार्श्वे आज्यादीनि तथोत्तरे । हृदयेन विधानज्ञः सर्वकर्म समारभेत् ॥२९॥
ततोऽपि धारयेत् वस्त्रान्[1] देव्याभिस्त्वनुपूर्वशः । पुनरूद्घाटनं कुर्यात् अस्त्रबीजेन पार्थिवः ॥३०॥
निस्कृतिं तु महास्त्रेण दत्वा सर्पि निरूपयेत् । शिवे सोमे तथा वह्नौ ततस्त्रिधा परिकल्पयेत् ॥३१॥

---

१. याचकः क ।
२. शूद्रास्य ख ।

तर्पयित्वा ततो वह्निं दत्त्वा पूर्णाहुतिं क्रमात् ।
ततस्त्वासनविन्यासं प्रागुक्तं परिकल्पयेत् ॥३२॥
पूर्वोक्तेन विधानेन गंधपुष्पैरनुक्रमात् ।
पूजयित्वा महादेव्या ततो होमं समाचरेत् ॥३३॥
बहुहव्ये धने शुद्धे सुसमिद्धे हुताशने ।
विधूमे लेलिहानेच वह्निना यः समिध्यति ॥३४॥
मृत्युंजयविधानेन क्षीरहव्यो[1] प्रपूजयेत् ।
विरेजो विगते वत्स देवीनां संमता भवेत् ॥३५॥

इति श्री देवीपुराणे होमविधिर्नाम षड्विंशत्यधिकशततमोऽध्यायः[2] ।

१. द्रव्येण क ग ।   २. आद्यं होमविधिः क ग ।



# सप्तविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

जगद्धिताय नृपतिं देव्या धर्मे नियोजयेत् । तन्नियोगादयं लोकं शुचिःस्याद्धर्मतत्परः ॥१॥
यं यं धर्मं नरश्रेष्ठः समाचरति नित्यशः । तं तमाचरते लोकस्तत्प्रामाण्याद् भयेन[1]च ॥२॥
धर्मनिष्ठः कृते राजा[2]धर्मपादैकशासितः । युगत्रयं संविज्ञेयस्तस्माद्राजा चतुर्युगम् ॥३॥
धर्मज्ञः सततं राजा प्रजां न्यायेन पालयेत् । न्यायतः पालयमानास्तु ध्यायन्ति स्वामिनं शिवम् ॥४॥
धर्ममर्थञ्च कामञ्च मोक्षं च प्राप्तुमिष्यते[3] । तत्तद् प्राप्नोत्ययत्नेन प्रजा धर्मेण पालयेत् ॥५॥
प्रजासु धर्मयुक्तासु चतुर्थांशं भजेन्नृपः । अधर्मिष्ठाऽथधर्मस्य चतुर्थांशेन लिप्यते ॥६॥
तस्मादधर्मे मज्जंतं लोकं राजा निवारयेत् । धर्मे नियोजयेन्नित्यमुदयार्थं विचक्षणः ॥७॥
धर्मशीले नृपे यस्मात् प्रजा स्वधर्मतत्पराः । नृपतिं बोधयेत्तस्मात् सर्वलोकानुकम्पया ॥८॥
उपायेन भयाल्लोभान्मूर्खं छन्देन बोधयेत् । मन्त्रौषधिक्रियाद्यैर्वा लब्धं धर्मं नियोजयेत् ॥९॥
स चेदन्यायतः पृच्छेन्न तस्योपदिशेद् गुरुः । यः श्रृणोति शिवं ज्ञानं न्यायतस्तत् प्रवक्ति च ॥१०॥
तौ गच्छतः शिवं ज्ञानं नरकं तद्विपर्यये । तस्माद्भक्ति समास्थाय गुरुदेव्या[4] प्रपूजने ॥११॥
विद्यायाः परमो यत्न कार्यः शास्त्रस्य वेदने । श्रद्धापूर्वाः स्मृता धर्मा श्रद्धामध्यान्तसंस्थिता ॥१२॥
श्रद्धा निष्ठा प्रतिष्ठाश्च [5]धर्माःश्रद्धैव कीर्त्तितः: । श्रुतिभावगताः सूक्ष्माः प्रधानपुरुषेश्वरा ॥१३॥

---

१. भवान च क ग । २. धर्मिष्ठस्य सुतो राजा क ग ।
३. यद्राव्यत् प्राप्तुमिष्यते क ग । 'मोक्षं इति नास्ति क ग पुस्तके ।
४. गुरुदेवाग्नि क ग ।
५. न करेण ग ।

श्रद्धाभावेण गृह्यन्ते न तर्केन न चक्षुषा । कायक्लेशेन बहुभिर्न चैवार्थस्य राशिभिः ॥१४॥
धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि[1] । श्रद्धा धर्मः परः सूक्ष्मः श्रद्धाज्ञानं हुतं तपः ॥१५॥
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत् । सर्वस्वं जीवितञ्चापि यदि दद्यादश्रद्धया ॥१६॥
नाप्नुयात् सफलं किञ्चित् श्रद्धधानस्ततो भवेत् । एवं श्रद्धा समास्थाय देव्यागुरुहुताशने ॥१७॥
पठंस्स्तवोत्तमं वत्स सर्वकामानवाप्नुयात् । हिमवच्छिखरे रम्ये सिद्धचारणसेविते ॥१८॥
वसिष्ठो नाम धर्मात्मा तपस्तप्यैस्तपोधनः । अतिदीर्घस्य कालस्य पावकस्य सुतो बली[2] ॥१९॥
तमुवाच महात्मानमृषिं परमधार्मिकम् । ब्रूहि धर्मभृतां श्रेष्ठ यत्ते मनसि वर्त्तते ॥२०॥
एवमुक्तः कुमारेण वसिष्ठश्च महामुनिः । प्रत्युवाच तदा हृष्टो भावितेनान्तरात्मना ॥२१॥

वसिष्ठ उवाच ।

[3]यदाहं समनुग्राह्यस्तव दैत्यनिषूदन । सर्वकामप्रदं नित्यं स्तवराजं ब्रवीहि मे ॥२२॥
एवमुक्तो वसिष्ठेन कुमारस्तु महातपाः । उपस्पृश्य शुचिर्भूत्वा प्राञ्जलिर्नियतासनः[4] ॥२३॥
नमः सुराधिपतये देवाय परमात्मने । नमस्कृत्य तथा रुद्रं देवीञ्च परमेश्वरीम् ॥२४॥
अमृतत्वं भवेद् येन तं ब्रवीमि महामुने । सुखासीनं महात्मानं महासेनं महाद्युतिम् ॥२५॥
विनयेनोपसंगम्य शिवमभिप्रणम्य च । उपसंगृह्य चरणौ वसिष्ठः परिपृच्छति ॥२६॥
देवाश्चैव तु संवादं शिवस्य च महात्मनः । उत्पत्तिः कारणं पृष्टं पार्वत्याः किल शंकर ॥२७॥
तन्ममाचक्ष्व निखिलं मयूरवरवाहनः । एवं पृष्टस्तु ऋषिणां स्कन्दो वचनमब्रवीत् ॥२८॥

स्कन्द उवाच ।

शृणुष्वावहितो विप्र यन्मां त्वं परिपृच्छसि । ममापि कथितं पूर्वं ज्वलनेन महात्मना ॥२९॥
पार्वत्या सह संवादं शर्वस्य च महात्मनः । तदहं कीर्त्तयिष्यामि त्वयि सर्वं महामुने ॥३०॥
कैलाशशिखरे रम्ये नाना धातुविचित्रिते । तरुणादित्य संकाशे तप्तकाञ्चनसंप्रभे ॥३१॥
वज्रस्फटिक सोपाने चित्रपट्टशिलातले । जाम्बुनदमये दिव्ये नानारत्नविभूषिते ॥३२॥

---

१. द्विजैरपि क ग ।
२. ख पुस्तके नास्ति पंक्तिरियम् ।
३. ग पुस्तके नास्ति पंक्तिरियम् ।
४. नियतात्मनः क ।

नानाद्रुमलताकीर्णे अप्सरो गीतवादिते । क्रीडते भगवाँस्तत्र सपत्नीको वृषध्वजः ॥३३॥
स्तूयमानो महातेजो देवदानवकिन्नरैः । रराज सा महादेवी रुद्रैरात्मसमैर्वृतः ॥३४॥
वरदः शूलधृग्देवः सर्वभूतग्रहाश्रयः[1] । तमासीनं महात्मानं देवीवचनमब्रवीत् ॥३५॥

देव्युवाच ।

भगवन् श्रोतुमिच्छामि प्रश्नमेकं सुरेश्वर ।
तत्समाचक्ष्व देवेश अत्र मे संशयो महान् ॥३६॥

उपपन्नास्मि देवेशं ब्रूहि तत्त्वेन शंकर । देव्याश्च वचनं श्रुत्वा प्रहस्य सुचिरं प्रभु ॥३७॥
उवाच मधुरां वाणीं ब्रूहि किं करवाणि ते । अहं ते कथयिष्यामि यन्मां पृच्छसि शोभने ॥३८॥

वर्त्तमानमतीतञ्च भविष्यं वरवर्णिनि ॥३९॥

देव्युवाच ।

कुतोऽहं कस्य वा देव उत्पन्नास्मि कथं प्रभो ।
ऐश्वर्यमतुलं चैव कुत एतद् ब्रवीहि मे ॥४०॥
मातरं पितरं चैव स्वजनान्[2] बान्धवानपि ।
एतदिच्छामि विज्ञातुं कथयस्व महेश्वर ॥४१॥

श्रीभगवानुवाच ।

न तेऽस्त्यविदितं किंचित् त्रिषु लोकेषु सुन्दरि ।
त्रैलोक्यज्ञानसंपन्ने त्वया विज्ञापितो ह्यहम् ॥४२॥
अथवा शृणु धर्मं तं पृष्ठोऽहं यत् त्वया शुभे ।
उत्पत्तिश्च प्रभावश्च तव वक्ष्यामि सुव्रते ॥४३॥

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥४४॥
न देवा दानवा वापि न भूमिर्वानिलोऽनलः । न सूर्यश्चन्द्रमा वापि नाकाशं सलिलं तथा ॥४५॥
विष्णुः प्रजापतिर्वापि ब्रह्मा नैव तु जायते । तत्राहं मनसाचिन्त्यं प्रजाकामो मनस्विनी ॥४६॥

---

१. ग्रहप्रियः क ग ।
२. स्वजनसुत बान्धवान् क ख ।

दक्षिणांगेऽसृजद् वायुं ब्रह्माणं सहुताशनम् । वामपार्श्वे तथाविष्णु चन्द्रश्चैव अपाम्पतिम् ॥४७॥
सृष्ट्वैता देवता देवि नाहं प्रीतिमुपागतः । ततोऽहं चिन्तयन् भूयः स्वां तनुं स्वेन तेजसा ॥४८॥
ततश्चिन्तयमानस्य प्रोद्भूतमर्चिचमण्डलम् । प्रोद्भूतन्तु मम ध्यानाद् घोररूपं भयावहम् ॥४९॥
दुष्प्रेक्ष्यं ब्रह्मविष्णुभ्यामनिलानलयोस्तथा । ततस्त्वां देवेदेवेशि ज्वालामालान्तरे[1] स्थिताम् ॥५०॥
पश्यामि परया दृष्ट्या ज्वलन्तीं स्वेन तेजसा । कालरात्रिं महामायां शक्तिशूलासिधारिणीम् ॥५१॥
सर्वायुधधरां रौद्रीं खट्वापट्टिशधारिणीम्[2] । करालदंष्ट्रां विम्बोष्ठीं सर्वलक्षणसंयुताम् ॥५२॥
सूर्यकोटिसहस्रेण अयुतायुतवर्चसा । विचित्राभरणोपेतां दिव्यकाञ्चनभूषिताम् ॥५३॥
दिव्याम्बरधरां दीप्तां दीप्तकाँचनसंप्रभाम् । [3]मुकुटेन विचित्रेण हेमरत्नविभूषिताम् ॥५४॥
कुण्डलाभ्यां विराजन्तीं हारकेयूरभूषिताम् । दिव्याम्बरधरां तीव्रामुद्यतास्त्रविराजताम् ॥५५॥
सर्वैश्वर्यमयीं देवीं कालरात्रिमिवोद्यताम् । लीलाधरां[4] महाकायां प्रेङ्खत्काँची गुणप्रभाम् ॥५६॥
खड्गमेकेन हस्तेन करेणान्येन खेटकम् । धनुरेकेण हस्तेन शरमन्येन बिभ्रतीम् ॥५७॥
तर्ज्जयन्तीं त्रिशूलेन ज्वालामालाकृतिप्रभाम् । एतद्रूपं तदा दृष्ट्वा भवत्या भवनाशिनि ॥५८॥
सर्वे सुरगणा भीता मां तदा शरणं गताः । न शक्नुवन्ति तां द्रष्टुं निमिषन्तोऽपि ते सुराः ॥५९॥
तेजसा मोहितास्तुभ्यं ज्ञानयोगबलेन च । अथ त्वैश्वर्यमेतत्ते तदातीव भयावहम्[5] ॥६०॥
दृष्ट्वा भीतं विसंज्ञन्तु त्रैलोक्यं सचराचरम् । ततो मूढा महात्मानो ब्रह्मविष्णुरनिलानलाः ॥६१॥
तेजसा मोहितास्तुभ्यं न प्रवदन्ति तेऽसुराः । ततो मया महादेवि स्तवमेतदुदाहृतम् ॥६२॥
देवानां हितकामाय तवाप्याराधनाय च । अमृतं ज्ञानमुत्पाद्य बुद्धितेजोबलेन च ॥६३॥
तेभ्यश्चैव प्रदत्तं मे स्तवमेतत् तु शोभने । उत्तिष्ठ त्वं सुरेन्द्रेशो गृह्यतां स्तोत्रराड् त्विदम् ॥६४॥
येन द्रक्ष्यसि देवेशीं वरान् श्रेष्ठान् प्रयच्छति । तेषां पुरा मया दत्तं स्तवराजं महायशे ॥६५॥
ब्रह्मविष्णुपुरस्कृत्य सर्वेषां देवतास्तथा । ततस्तु प्रणता सर्वे मया सार्धं वरानने ॥६६॥

---

१. ज्वालामालार्णवे स्थितम् क ग ।
२. ग पुस्तके नास्ति पंक्तिरियम् ।
३. ख पुस्तके पंक्तित्रयं नास्ति ।
४. लीलाधरा ग ।
५. अहर्निशम् क ।
६. द्रक्ष्यथ क ग ।

विनयेनोपसंगम्य शिरसाभिप्रणम्य च । प्रयता नियतात्मानः सर्वे चामिततेजसः ॥६७॥
जपन् स्तोत्रं वरं पुण्यं येन सर्वसुखास्तदा ॥६८॥

स्कन्द उवाच ।

एवमुक्त्वा सुरश्रेष्ठ सर्व देवगणैर्वृतः । नमस्कृत्य महादेवीं स्तवमेतदुदाहरन् ॥६९॥
अतीतैश्च भविष्यैश्च वर्त्तमानैस्तथैव च । नामभिः कीर्त्तितैश्चैव इदं स्तोत्रमुदीरयेत् ॥७०॥

भगवानुवाच ।

नमोस्तु ते महाविद्ये अजिते तेजगामिनि । सांख्ययोगोद्भवे वीरे वरदे देवपूजिते ॥७१॥
त्वं गतिः सर्वभूतानामव्यक्ताव्यक्तरूपिणी ।
कालरात्रि महारात्रि कालक्षयकरी ध्रुवा ॥७२॥
ज्वालाभरण दीप्तांगी ज्वालाज्वालितलोचना । भूतधात्री च भूतानामगतिर्गतिरेव च ॥७३॥
शरण्ये सर्वदेवानां ब्रह्मादीनां न संशयः । नमोस्तु ते महाभोगे मम ध्यानाद्विनिःसृते ॥७४॥
सूर्यकोटि सहस्राभे अग्नि ज्वालासमप्रभे । हेमदण्डधरे रौद्रि त्राहि भक्तान् सुरेश्वरि ॥७५॥
हेमरत्नविचित्रांगी असितासितलोचने । त्वं हि धात्री विधात्री च जननी ब्रह्मणः शुभे ॥७६॥
विष्णुमाता महातेजा त्वमेव परिपठ्यसे । नमोस्तु ते शतवक्त्रे सहस्रचरणेक्षणे ॥७७॥
चतुर्दंष्ट्रे महाजिह्वे हिमवच्छिखरालये । कैलाशनिलये देवि मेरुमन्दरवासिनि ॥७८॥
विन्ध्ये च वससे नित्यं मलये गंधमादने । पूज्यसे देवदेवेशी ऋषिभिर्देव मानवैः ॥७९॥
तेभ्यश्चैव वरं दिव्यं देवि त्वन्तु प्रयच्छसि । सृष्टिरक्षणसंहारं त्वमेव परिकुर्वसि ॥८०॥
भूतं भव्यं भविष्यञ्च त्वं पदं परमं स्मृतम् । अर्च्यसे स्तूयसे चैव दैवतैर्मत्पुरोगमैः ॥८१॥
त्वन्तु ह्रीः श्रीर्द्युतिलक्ष्मीर्मेधा कान्तिः सरस्वती । धृतिर्मतिर्गतिश्चैव मोक्षमार्गावलम्बिनी ॥८२॥
वरदा च प्रसन्नानामिष्टमार्गानुसारिणी । ऋद्धिर्वृद्धिः परा मूर्त्तिर्दक्षकन्यापराजिता ॥८३॥
अनुसूया क्षमा लज्जा कीर्त्तिर्दीप्ति र्वपुश्रिया ।
शाश्वती च भूतमाता लोकधात्री ह्यनिन्दिता ॥८४॥
विशिष्टा वरदा मान्या पवित्रा लोकसम्मता ।
स्मृतिः प्रज्ञाश्रुति र्धीरा विमला ह्यनिलानला ॥८५॥

अधृष्या शाश्वती धन्या कृष्णा श्यामारूणा सिता ।
प्रकृतिर्महती ज्योतिर्धर्मकामार्थसाधिका[1] ॥८६॥
गणमाताम्बिका पुण्या वरा[2] वागीश्वरी तथा ।
तुष्टि पुष्टिश्च शान्तिश्च शिवा चाक्षरमा लिनी[3] ॥८७॥

ददामि विविधान् भोगान् प्रणतेषु विशेषतः । मूढान् बोधयसे[4] नित्यं येषां प्रीतास्मि सुव्रते ॥८८॥
नमोस्तु ते सुराध्यक्षे ब्रह्माध्यक्षे[5] बलाधिके । त्वं देवमाता ब्रह्माणी षष्ठी सावित्रिरेव च ॥८९॥
रुद्राणी कृष्णपिंगा च नक्षत्रैश्चाप्यलंकृता । यमस्य भगिनी ज्येष्ठा नीलकौषेयवाससा ॥९०॥
प्रदोषप्रत्यूषभुजा अर्धरात्रस्तनोदरी । कृत्तिका कृतवेणी च रोहिणीमुखपद्मिका ॥९१॥
मृगशीर्ष सुखस्नाना[6] आर्द्रागन्धानुलेपना । पुनर्वसुः कृता पुण्यैः पुष्याश्लेषा च विश्रुता ॥९२॥
मघाविमलकेयूरे उभे फाल्गुनि कुण्डले । हस्ता हस्ततले तुभ्यं चित्राभरणभूषिता ॥९३॥
स्वाती श्रीकीर्त्तिसम्पन्ना विशाखाकृतमेखला । अनुराधामुक्तदामा ज्येष्ठामूले स्तनान्तरे ॥९४॥
आषाढश्रवणोपेतौ धनिष्ठांगुलि मुद्रिका । शतभिषा मेखलादाम भाद्रपदौ च हारकम् ॥९५॥
रेवती तिलकं देवि अश्विनी कर्णपूरिकौ । भरणीनुपूरौ द्वौ च[7] तथैव रजनी तथा ॥९६॥

शुक्रौ दक्षिणहस्ते तु वामहस्ते वृहस्पतिः ।
ललाटे चन्द्रमा भाति नाभ्यां तु बुध उच्यते ॥९७॥

अंगारकः प्रभाषायां शनिर्विलास[8] उच्यते । दिवाकर प्रभातुल्यं राहुर्वै बलमुच्यते ॥९८॥
केतुः पराक्रमो देवि ग्रहनक्षत्र भूषिते । स्कन्दस्य जननी माता रुद्राणी धात्रीरेव च ॥९९॥

माता मरुद्गणानाञ्च वृष्टिः सृष्टिस्तथैव च ।
तपनी भद्रकाली च विष्णुमाता बहुश्रुता ॥१००॥

---

१. साधनी ख ।
२. वरा क ग ।
३. चाम्बर गामिनी ग ।
४. मोहयसे क ग
५. नमोस्तु ते क ग ।
६. मुखस्नाना क ।
७. तुभ्यं ग ।
८. विनाश ग ।

गायत्री च वरेण्या च तथैव च सरस्वती ।

कान्तास्ते कृत्स्नतो[1] देशाः कथ्यमान् निबोध तान् ॥१०१॥

नैमिषे दृश्यसे देवि कुरुक्षेत्रे च दृश्यसे । त्वया क्रान्तास्त्रयो लोकाः स्त्रीरुपेण न संशयः ॥१०२॥

अग्निहोत्रे कुले पुण्ये सिद्धचारण सेविते । अग्नेः कोणे सुरावर्त्ते[2] सोमस्यैव च लक्षणे ॥१०३॥

त्रैलोक्यधारिणी देवी त्वं हि विन्ध्यनिवासिनी ।

त्वन्तु मन्दाकिनी पुण्या मया च शिरसा धृता॥१०४॥

अष्टाशीति सहस्त्रैस्तु ऋषिभिरूर्ध्वतेजसैः ।

स्तूयसे सततं देवि तपः सिद्धैस्तपोधनैः ॥१०५॥

पादौ तु पृथिवी देवि रोमाण्योषधिगुल्मकाः । गंगायमुनयोर्मध्ये त्वं हि त्रैलोक्यसंगमे ॥१०६॥

द्वौ भुजौ भद्रवान् शैलो द्वीपाः प्रत्यन्तवर्त्तिनः । समुद्राः सरितश्चैव सिन्धुनद्यस्तथाम्बिके ॥१०७॥

सुरुपे सुभुजे[3] शुभ्रे सुजंघे शूलपाणिनी । बालार्कसमवर्णेन पूर्वायान्तु प्रदृश्यसे ॥१०८॥

जीमूताञ्जनवर्णेन दक्षिणायान्तु दृश्यसे । पद्म–कुन्देन्दु वर्णेन पश्चिमायां तु दृश्यसे[4] ॥१०९॥

वैडूर्यस्य तु वर्णेन उत्तरायान्तु दृष्यसे । पर्वते मलयपृष्ठे चित्रकूटे तथा भवे[5] ॥११०॥

अग्निजिह्वे दर्भरोमे ब्रह्मशीर्षे महोदरि । उत्कृष्टव्रते निरते शरण्ये ब्रह्मणः प्रिये ॥१११॥

त्वं हि नारायणी देवी चीरवल्कलधारिणी । दुर्गे दुर्गे तथा देवि तपस्तप्यति सुव्रते ॥११२

दिशो जंघे दिशो बाहू सुरुपे अमृतप्रिये । निशुम्भ अन्धकादीनामसुराणां भयंकरी ॥११३॥

ओंकारनित्ये सावित्रि चतुर्वेदस्मृते युगे । कंसादीनां वधार्थाय उत्पन्ना लोकपावनी ॥११४॥

शरवर्वरैश्चापि पुलिन्दैश्चापि पूज्यसे । विन्ध्यवासिनी वामौघे अमोघे अम्बिके शुभे[6] ॥११५॥

अष्टादशभुजैश्चैव नित्मं गगन चारिणी । ऋग्यजुः सामवेदैश्च तथा चाथर्ववेदगैः ॥११६॥

स्तूयसे सततं देवि तपः सिद्धैस्तपोधनैः । भीमवक्त्रा महावक्त्रा अनला कृष्णपिंगला ॥११७॥

---

१. कृच्छ्रनो देशा क ।
२. अरावर्त्ते क ग ।
३. अरुपे अभुजे ग ।
४. तथाम्बरे ग ।
५. गपुस्तके पंक्तिरियं नास्ति ।
६. ग पुस्तके पद्यमिदं नास्ति ।

कृष्णमूर्धा महामूर्धा घोरमूर्धा भयानना । घोरवक्त्रा महाजिह्वा घोरवेगा[1] महाव्रता ॥११८॥
दीप्तास्या दीप्तनेत्रा चप्रचण्ड प्रहरणोद्यता । सुरभी सौरभेयी च उमा दुर्गा तथैव च ॥११९॥
सर्ववादित्र निर्घोषैः[2] सर्वप्रहरणोद्यता । कृष्णाम्बरधरा कृष्णा शार्ङ्गायुधधनुर्धरा ॥१२०॥
त्रासनी मोहिनी चैव मृत्युरूपा भयावहा । भीषणी दानवेन्द्राणां तथा चैव भयङ्करी[3] ॥१२१॥
अभया सर्वदेवानां पितृणां मानुषामपि । पृथिवी केशिनी साध्वी मृत्युदेहजरादिका ॥१२२॥
रक्षा पवित्रा अक्षोभ्या ह्लादिनी मेखला तथा । कन्यादेवी सुरादेवी भीमादेवीति कीर्त्यसे ॥१२३॥
शाकम्भरी महाश्वेता धूम्रा धूम्रेश्वरी तथा । वीरभद्रा सुभद्रा च मम[4] देहाद्विनिःसृता ॥१२४॥
श्मशाने वससे नित्यं प्रदीप्ते चितिसंकुले । कपालहस्ता खट्वांगी सर्वलोकभयावहा ॥१२५॥

कान्तारवासिनी देवी विमाने चारुशोभने ।
श्रीः पद्मा योगमाता च योगमार्गानुसारिणी ॥१२६॥
धूमकेतुर्महाहास्यां कृतमेव युगक्षये ।
धूमवर्त्तिस्तथा ज्वाला अंगारिण्यस्तथोच्यसे ॥१२७॥
वेताली ब्रह्म वेताली महावेतालिरेव च ।
विद्याराज्ञी वराङ्गी च तथा माहेश्वरी मता ॥१२८॥

अरण्या च शरण्या च भक्तानां भक्तवत्सला । त्वमेव मातरःसर्वा भूतमाता तथैव च ॥१२९॥
पर्वतेषु समुद्रेषु दुर्गेषु विषमेषु च । चोरेषु चैव रक्षःसु तरक्षूणां भयेषु च ॥१३०॥
व्यालेभ्यो[5] दुष्टचित्तेभ्यः सर्वतः परिरक्षसि । सिंहव्याघ्रभये चैव समे निम्नोन्नते तथा ॥१३१॥
त्वं हि नः[6]सर्वकार्येषु ददास्यभयदक्षिणाम् । वज्राशनिनिपातेषु तथा समरकंटके ॥१३२॥
गजेन्द्रदशनप्रोतो दष्टो ह्याशीविषेण वा । शृंखलावेष्टितग्रीवः पादयोरुभयोरपि ॥१३३॥
बद्धो वा कालपाशेन मृत्योर्वा वशमागतः । कीर्त्तनात् तव देवेशि मुच्यते नाना संशयः ॥१३४॥
भूतं भव्यं भविष्यञ्च साँख्ययोगस्तथैव च । अध्यात्मञ्चाधिभूतञ्च त्वयि सर्वं प्रतिष्ठितम् ॥१३५॥

---

१. घोरवेशा क ग ।
२. वादित्रहस्ता ख ।
३. क्षयङ्करी ग ।
४. महादेवात् क ग ।
५. रक्ष मां क ।
६. त्वं हिता क ग ।

त्वं दिशो विदिशश्चैव अदितिर्दितिरेव च । चण्डिका चण्डकारी च चण्डरूपा च कीर्त्यसे ॥१३६॥
घण्टारवा विरूपाक्षी शिखिपिच्छध्वजप्रिया[1] । शंखशूलगदाहस्ता महिषासुरमर्द्दिनी ॥१३७॥
मातंगी मत्तमातंगी कौशिकी ब्रह्मवादिनी । जननी सिद्धसेनस्य उग्रतेज महाबला ॥१३८॥

जया च विजया चैव विनता कद्रुरेव च ।
धात्री विधात्री विक्रान्ता इच्छा मूर्च्छा च मूर्च्छनी ॥१३९॥
दमनी दामनी चैव छेदनी भेदनी तथा ।
वन्दनी वन्दिनी चैव अमृता सत्यवादिनी ॥१४०॥

घोररूपा च कापाली मानवी मानवप्रिया । [2] मानसी मन्यमाना च मातृणां जननी तथा ॥१४१॥
अघोरा घोररूपा च घोरा घोरतरा तथा[3] । मृतसंजीवनी चैव विशल्यकरणी तथा ॥१४२॥

सञ्जीवनी औषधी च त्वमेव परिपठ्यसे ।
सन्ध्या चैव महासन्ध्या त्वं देवि परिकीर्त्तिता ॥१४३॥
हरणी हारणी चैव धरणी धारणी तथा ।
दिव्यमूर्त्तिर्महामूर्त्तिरैश्वर्यमूर्त्तिरुच्यसे ॥१४४॥

पाशहस्ता महाहस्ता कुमारी कलहप्रिया । संधिनी च विसंधि च मेनका उर्वशी तथा ॥१४५॥
मायादेवी सुराणाञ्च त्वं देवी परिकीर्त्तिता । पुरा सुरगणाः सर्वे असुरेन्द्रभयार्द्दिताः ॥१४६॥
त्वां जग्मुः शरणं देवा मत्पुरोगा वरानने । ततस्त्वां क्रोधसंतप्तां युगान्ताग्निसमप्रभाम् ॥१४७॥
देवानां तेजसावृत्यासृजद् विश्वेश्वरी तनुम् । महिषस्य वधार्थाय ज्वालामालेति विश्रुता ॥१४८॥
हत्वा सुररिपून् सर्वान् शक्रो राजा नियोजित। विष्णुना च पुरा देवीं त्वामाराध्येति सुव्रते ॥१४९॥

दानवा निहता सर्वे त्वया मायाविमोहिता ।
अवध्यः सर्वभूतानां पुत्रो वै कालनेमिनः ॥१५०॥

---

१. शिखपिजध्वजप्रिये क ।
२. क पुस्तके पंक्तिरियं नास्ति ।
३. घोरतराननना क ।
४. क ग पुस्तके श्लोकोऽयं नास्ति ।

कंसश्च निहतो दैत्यः उग्रसेनसुतो बली ।
त्वं देवि सर्वभूतानां शरण्या भक्तिवत्सला ॥१५१॥
अभया सर्वलोकस्य बुद्धिः शुद्धिश्च पठ्यसे ।
छन्दसाञ्चैव गायत्री अनुष्टुप् त्रिष्टुब् एव च ॥१५२॥
पंक्तिश्चैव यतिश्चैव शंकुर्यष्टिस्त[1]थैव च ।
त्वं देवि सर्वभूतानां हृदि नित्यं प्रतिष्ठिता ॥१५३॥
त्राहि त्रहि सुरान्[2] सर्वान् दैत्यभूतान् समानुषान् ।
ज्योतिषां त्वं परं ज्योतिः सुव्रतानां गतिः शुभा ॥१५४॥
योगिनां योगसिद्धिश्च त्वमेव परिकीर्त्यसे ।
त्वं कृतज्ञा[3] विधिज्ञा च सर्वज्ञा सर्ववित्तमा ॥१५५॥
भूतविद् ब्रह्मविद् ज्येष्ठा कन्या कल्पासिरेव[4] च ।
निद्रा मोहस्तथा ज्ञानं क्षुत्पिपासा तथैव च ॥१५६॥
धर्मोऽधर्मं सुखं दुःखमलक्ष्मीलक्ष्मीरेव च ।
रेवती कालकर्णी च तथा दुष्टग्रहाश्च ये ॥१५७॥
तृषा च तुष्टि कामस्य त्वया ह्युत्पादिता पुरा । हिरण्यवर्णे देवेशि नमस्ते स्कन्दपूजिते ॥१५८॥
तरणी तारणी गुप्ते चलनी चालनी शुभे । किंकिणी चण्डनिर्घोषे क्रन्दनी क्रन्दन प्रिये ॥१५९॥
ताडनी क्रन्तनी रौद्री गोप्त्री धात्री धनेश्वरी ।[5]
खड्गिनी खड्गनिर्घोषे पूर्णमात्रा[6] विशोषनी ॥१६०॥
नारायणी च भूतानां प्राणिनां प्राणदा मता ।[7]
संक्रोधनी क्रोधहरा निष्क्रोधा क्रोधहारिणी ॥१६१॥

---

१. वषट्कारस्तथैव च क ।
२. त्रासि पासि क ग ।
३. कृतिज्ञा क ।
४. कचानिरेवच ख ।
५. ग पुस्तके पद्यानि खण्डितानि सन्ति ।
६. पूर्णसागरशोषिनी ग ।
७. क्रोधचाग्निनी क ।

कल्याणी दुर्मदा चैव सुमुखा दीनवत्सला ।
विरजा जननी भद्रा क्षमा क्षान्ता वरप्रदा ॥१६२॥
शिवा[1] शान्तिर्दया दान्ता सत्या चैव तु विश्रुता ।
क्रोधेश्वरी महावीर्या कालनिद्रा गणेश्वरी[2] ॥१६३॥
पद्माक्षी पद्मगर्भा च पद्मखण्डनिवासिनी ।
त्रिगुणी त्वं महाभागे भृगुवेशसदाप्रिये ॥१६४॥
तपस्वी ब्रह्मचारिण्ये ऋषिकन्ये जितेन्द्रिये । जितद्वन्द्वे जितक्रोधे महती भक्तवत्सले ॥१६५॥
स्मृतिश्च सर्वभूतानां त्वमेव हि शुभानने । आहुतिश्च हुतिश्चैव त्वं देवि परिकीर्त्यसे ॥१६६॥
कृष्णा च कृष्णरूपा च कृष्णपक्षस्य चोत्सवा । चतुर्थी पंचमी चैव नवम्येकादशी तथा[3] ॥१६७॥
ब्रह्मरूपा स्वरूपा च कामदा कामरूपिणी ।
कामदेवप्रणाशी[4] च विश्वरूपा सुचित्रता ॥१६८॥
एकाक्षी च शताक्षी च नरनारायणी तथा ।
गोमुखी सुमुखी चैव दक्षयज्ञ क्षयंकरी ॥१६९॥
खेचरीं गोचरी क्षान्तिर्भगनेत्रापहारिणी । योगयोगी महायोगी योगिनां योगमुत्तमम् ॥१७०॥
महामारी च विघ्नघ्ना सर्वपापप्रणाशिनी ।विशालाक्षी समृद्धिश्च धर्मिष्ठा ब्रह्मचारिणी ॥१७१॥
अजिता पूजिता पुष्पा पूष्णोदन्तविनाशिनी ।
अप्रसन्ना प्रसन्ना च तृप्ता प्रीता प्रियम्वदा[5] ॥१७२॥
जटिला लक्षणा लक्ष्मीरनन्ता कनकेश्वरी ।
त्वं स्मृतिः सर्वभूतानामचला लोकनाशिनी ॥१७३॥
तुष्टि कान्तिस्तथा शोभा शोभना कमलोद्भवा ।
भ्रमणी भ्रामणी चैव भरणीस्तम्भनी तथा ॥१७४॥

---

१. सिता क । २. कालनिर्णासनेश्वरी क ।
३. क ग पुस्तके पंक्तिरियं नास्ति । ४. कामदेव प्रणाशाय क ग ।
५. श्रियः प्रदा क ग ।

जम्भनी शुम्भनी चैव काली गान्धारी एव च । महारूपा महातेजा विष्णु वक्त्रोद्भवा शुभा ॥१७५॥
वैरोचनी तथा त्वाष्ट्री विरजा कैटभेश्वरी । हेमवर्णा सुवर्णा च श्यामा दीप्तायतेक्षणा ॥१७६॥
रतिः प्रीतिः कमलाक्षी दक्षिणामूर्तिरिष्यते ! सुकन्या महती चैव शालंकायनिरेव च॥१७७॥
कराली विकराली च सकला निष्फला तथा । सिनीवाली कुहुश्चैव राका चानुमती तथा ॥१७८॥
तापनी वर्षणी चैव विद्युज्जिह्वानलोद्भवा । देवदेवी महादेवी हिमवच्छैलराट् सुते ॥१७९॥
अविद्या सर्वविद्यानां सिद्धिनां सिद्धिरुत्तमा । अप्रमेयासि भूतानामिति मे निष्चिता मतिः ॥१८०॥
देवदानवमर्त्त्येषु तिर्यग्योनिगतेषु च । न तत् पश्यामि देवेशि यत् त्वया रहितं भवेत् ॥१८१॥
अहं ते हृदयं देवि त्वं नु मे हृदि संस्थिता ।अहं तव पिता देवी त्वन्तु माता मम स्मृता ॥१८२॥
अहं भ्राता च भर्त्ता[1] च बन्धुर्गोप्ता तथैव च । त्वं मे भगिनी देवी पत्नी च परिकीर्त्यसे ॥१८३॥
अहमिष्टो महायज्ञ पूर्त्त[2]यज्ञस्त्वमुच्यसे । अहमग्निश्च होता च यजमानस्तथैव च ॥१८४॥

स्वाहा स्वधा च शुभ्राणि त्वयि सर्वं प्रतिष्ठितम्[3] ।
अहं विष्णुर्महाग्ज्ञो यज्ञमूर्त्तिस्त्वमुच्यसे ॥१८५॥
अहं ग्रहपतिश चन्द्रस्त्वं तु नक्षत्रमण्डलम् ।
पुरुषोऽहं वरारोहे प्रकृतिश्च त्वमुच्यसे ॥१८६॥

सूर्यश्चाहं महादेवि त्वं प्रभा परमेश्वरी । अहं सागरस्त्वक्षोभ्यस्त्वन्तु वेलोर्मिरेव च ॥१८७॥
अहं ब्रह्मा सुरश्रेष्ठ सावित्री त्वं निगद्यसे । अहं विष्णुर्महावीर्यस्त्वं श्रीर्लोकभाविनी ॥१८८॥
अहमिन्द्रो महातेजस्त्वं[3]शची परमेश्वरी । अहं भृगुर्वसिष्ठश्च जमदग्निस्तदेवच ॥१८९॥
त्वं विद्या रेणुका चैव अरुन्धती पतिव्रता । दिवसोऽहं वरारोहे रजनी त्वं निगद्यसे ॥१९०॥
दिवसोऽहं मुहूर्त्तन्तु त्वं सन्ध्याकाल एव च । अहं तेजोधिकः सूर्यः त्वं सुषमा निगद्यसे ॥१९१॥
वरुणोऽहं महातेजास्त्वन्तु गौरी प्रकीर्त्तिता । अहं वैश्रवणो राजा यक्षेशो लोकपूजितः ॥१९२॥
त्वन्तुः ऋद्धिर्महाभागा उपमा चाप्यनुत्तमा । अहं सेनापतिः स्कन्दो देवसेना त्वमुच्यसे ॥१९३॥

---

१. कर्त्ता च क ।
२. पूर्वयज्ञः क ग ।
३. क ग पुस्तके पंक्तिरियं नास्ति ।

अहं बीजवरं श्रेष्ठं त्वन्तु क्षेत्रवरा स्मृता । अहं वृक्षपतिः सूक्ष्मस्त्वं वनस्पतिरुद्भवे ॥१९४॥
शेषमूर्त्तिरहं भद्रे फणीशपतिचेष्टिते । रेवती त्वं विशालाक्षि मदविभ्रान्तलोचने ॥१९५॥
मोक्षोऽहं त्रिदशश्रेष्ठे त्वं देवि परमा गतिः । अपांपतिरहं भद्रे त्वं देवि सरितांवरा ॥१९६॥
वडवाग्निरहं शुभ्रे त्वन्तु दीप्तिरनेकशः । प्रजापतिरहं स्रष्टा त्वं प्रजा सृष्टिरेव च ॥१९७॥
नागानामधिपश्चाहं पातालतलवासिनाम् । नागिनी नागकन्या त्वं फणोच्छत्र विभूषिता ॥१९८॥
निशाचरपतिश्चाह त्वं श्रेष्ठा रजनी स्मृता । कामोऽहं वामदेवी त्वं रतिः प्रीतिरेव च ॥१९९॥

दुर्वारश्चाप्यहं क्रोधस्त्वं क्षमा मम धारिणी ।
लोभो मोहतमश्चाहं त्वं तृष्णा तमसि स्मृता ॥२००॥
तापसश्चाप्यहं देवि त्वं तपस्वि तपस्विनी ।
ककुद्वान् वृषभश्चाहं त्वन्तु गौः क्षीरधारिणी[1] ॥२०१॥
वायुरप्यहमग्निश्च त्वं गतिर्मन्त्रसूचनी ।
अहं क्षपयिता[2] लोके निर्ममा त्वं यशस्विनी ॥२०२॥
नमो ह्यहं सर्वकार्येषु नीतिस्त्वं कमलेक्षणे ।
अहमग्निश्च धूमश्च त्वमुष्ण ज्वाला एव च ॥२०३॥
अहं संहारकर्त्ता च त्वं सृष्टिः सर्वदा शुभे ॥२०४॥
अहं शुष्कः स्थिरश्चैव त्वमार्द्रजलमेव च ।
स्रष्टाहं तव देवेशि त्वं भूतान् सृजसे सदा ॥२०५॥

शरीरी ह्यहं शरीरस्त्वंतु बुद्धीन्द्रियाणि च । अहं भोक्ता महादेवि त्वन्तु भोज्यं न संशयः ॥२०६॥
पर्जन्योऽहं महातेजास्त्वन्तु विद्युन्महाचला । अहं कृतयुगे धर्मस्त्रेता त्वं परिकीर्त्त्यसे ॥२०७॥

युगोऽहं द्वापरः श्रीमान् त्वं कलिः परमेश्वरि ।
आकाशश्चाप्यहं भद्रे पृथिवी त्वं निगद्यसे ॥२०८॥

---

१. मम चारिणी क ग ।
२. संचयिता क ग ।
३. क ग पुस्तके पंक्तिरियं नास्ति ।

अहमदृश्यमूर्त्तिश्च दृश्यादृश्यञ्च उच्यसे ।
विरजोऽहं महाभागे सम्राट् भद्रे अनिन्दिते ॥२०९॥
वाक्पतिश्चाप्यहं कृष्णे त्वं वाग्मी ऋषिभिः स्मृता ।
अहं स्रष्टा च भर्त्ता च[1] त्वन्तु मृत्युः सदानघे ॥२१०॥
अहं रसयिता घ्राता त्वं रसो घ्राण एव च ।
अहं स्पर्शयिता कर्त्ता स्पर्शस्त्वं कर्म एव च ॥२११॥

अहं वक्ता च भोक्ता त्वं बुद्धिर्गतिरेव च । अहं सर्वमिदं भूतं त्वञ्च देवि न संशयः ॥२१२॥
त्वया मया च देवेशि ओतप्रोतमिदं जगत् । एकधा बहुधा चैव तथा शतसहस्रधा ॥२१३॥
देवदानवमर्त्येषु सकलेषु विशेषतः । निष्कलेषु च सर्वेषु अबुधेषु बुधेषु च ॥२१४॥
अहं त्वञ्च विशालाक्षि सततं सुप्रतिष्ठितौ । ऐश्वर्यगुण सम्पन्नौ सर्वप्राणि व्यवस्थितौ ॥२१५॥
क्रीडामि सततं देवि त्वया सार्धं वरानने । मेरुमन्दरपृष्ठे च हिमवत्कन्दरेषु च ॥२१६॥

स्कन्द उवाच ।

एवं स्तुता महादेवी शिवेन परमात्मना ।
गुह्यैस्तु नामभिर्दिव्यैः सर्वलोकेश्वरेश्वरी ॥२१७॥
एतद्धि सर्वमाख्यातं निरुक्तं पापप्रणाशनम् ।
य इदं धारयेत् स्तोत्रं पवित्रं लोकसम्मतम् ॥२१८॥

स जित्वा सर्वलोकानि शिवलोके महीयते । देव्याश्चैव भवेत्पुत्रो दीप्तकुण्डलभूषितः ॥२१९॥
वरदः सर्वदेवानां देवदानवदर्पहा । अजितः सर्वलोकेषु दुर्निरीक्ष्यो भयावहः ॥२२०॥
अक्षयः कामरूपश्च रुद्रसुतुर्महाबलः । पूज्यते सर्वलोकेषु शूलपाणिर्यथा शिवः ॥२२१॥
यः पठेत्श्लोकमेकन्तु पंच षटसप्त एववा । विमुक्तः सर्वपापेभ्यो न भूयो जन्म आप्नुयात् ॥२२२॥
इष्टांश्च लभते कामान् यः पठेच्च शृणोति वा । शुचिस्तु प्रयतो भूत्वा देवीदेवपरायणः ॥२२३॥
मोक्षार्थी लभते मोक्षं परे परमशोभनम् । सिद्धिकामोऽप्यवाप्नोति सिद्धिमिष्टां न संशयः ॥२२४॥

---

१. कीर्त्तिश्च क ग ।

अर्थकामो लभेदर्थं पुत्रकामो बहून् सुतान् ।
विद्यार्थी लभते विद्यां जयकामो लभेज्जयम् ॥२२५॥
यान् यान् कामान् प्रार्थयते मानवः संशितव्रतः ।
जपन् स्तोत्रवरं पुण्यं सर्वमाप्नोति निश्चयात् ॥२२६॥
विदितः सर्वदेवानां मासस्यान्तरेण वै । सर्वपापविशुद्धात्मा गच्छते परमां गतिम् ॥२२७॥
पुण्यं यशस्यमायुष्यं सांख्ययोगसमन्वितम् । पठेद्वै श्रद्धया युक्तो अनन्तं फलमश्नुते ॥२२८॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च । फलं लभते धर्मात्मा यः पठेत् श्रद्धया द्विज[1] ॥२२९॥
दशानां राजसूयानामग्निष्टोमशतस्य च । कीर्त्तनात्फलमाप्नोति इत्याह भगवान् शिवः ॥२३०॥
यत्पुण्यं सर्वतीर्थेषु गंगादीनां द्विजोत्तम ।
जपतः सर्वमाप्नोति प्राप्तो धर्मफलानि तु ॥२३१॥
अधृष्यः सर्वदेवानां[2] ब्रह्मादीनां न संशयः ।
जीवेद् वर्षशतं साग्रं यः पठेत् सततं शुचिः ॥२३२॥
गोघ्नश्चैव कृतघ्नश्च ब्रह्महा गुरुतल्पगः । शरणागतघाती च मित्रविश्रुतघातकः[3] ॥२३३॥
दुष्टकर्म समाचारो पितृहा मातृहा तथा । सकृदावर्त्तयेत् स्तोत्रं मुच्यते सर्वकिल्बिषात् ॥२३४॥
द्विरधीत्य दहेद्दोषान् सप्तजन्मकृतानपि । त्रिरावर्त्तयते यस्तु गाणपत्यमवाप्नुयात् ॥२३५॥
षण्मासात् सिद्धिमाप्नोति मानवः संशितव्रतः । संवत्सरेण मुक्तात्मा योगसिद्धिं परां लभेत् ॥२३६॥
शिवेन ब्रह्मणे प्रोक्तं ब्रह्मा प्रोवाच विष्णवे । विष्णुःप्रोवाच सोमाय सोमः प्रोवाच वायवे[4] ॥२३७॥
वायुश्चैव हुताशाय हुताशाच्च मया गतम्[5] ।
मयापि कथितं तुभ्यं निरुक्तं पापनाशनम् ।
पुराणं पावनं दिव्यं देवदेवेन भावितम् ॥२३८॥

इति श्रीदेवीपुराणे देवदेवीसंवादे देवीस्तवराजो नाम सप्तविंशत्यधिक- शततमोऽध्याय[6]: ।

---

१. श्रद्धयान्वित क ग । २. सर्वभूतानां क ।
३. मित्रसंघातघातकः क । ४. मृत्यवे क ग ।
५. समागम्य ततः परम् क ग । ६. इत्याद्यं स्तवराजः समाप्तः क ग ।

# अष्टाविंशत्यधिकशततमोऽध्यायः ।

ब्रह्मोवाच ।

सर्वार्थसाधकं शास्त्रं ब्रह्मवक्त्रात् विनिसृतम् । तेनापि नृपशार्दूल कीर्त्तितं नरवाहने ॥१॥
इन्द्रेण विधिना[1] प्राप्तमगस्त्येन तथागतम् । दशलक्षप्रमाणन्तु शिवो ब्रह्मणे प्रोक्तवान् ॥२॥

लब्धं शक्रस्य लोकस्य विद्या देवेन भाषितम् ।
घोरोत्पत्ति वधादीनि[2] देव्याराधनमुत्तमम् ॥
कर्मयोगश्च योगश्च चतुर्वर्गप्रसाधकम् ॥३॥
आद्यं देव्यवतारं च वाचयेद् यः शृणोति वा ।
स संसाराद्विनिर्मुक्तः प्राप्नोति परमं पदम् ॥४॥
विद्यासिंहासने मध्ये वस्त्रपुष्पादि शोभिते ।
पूजयित्वा शिवं ज्ञातं शृणुयाद्वाचयेत् तथा ॥५॥
श्रीमद्दंडासनं वापि कृत्वा हेमं सुशोभनम् ।
हेमपट्टपरिच्छन्नं नानारत्नविभूषितम् ॥६॥

राजतं ताम्र कास्यं वा ब्रह्मरीत्या विनिर्मितम् । तरुसारसमुद्भूतं शृंगवंशादिसम्भवम् ॥७॥
रत्न[3]हेमसमायुक्तं शंखस्फटिक मोक्तिकैः । यथासम्भव सम्भूतैरधश्चोर्ध्वं विभूषितम् ॥८॥
समुत्कीर्णं विचित्रं च सूत्रचिन्ह[4] निबन्धनम् । द्विगुणे द्विप्रमाणेषु[5] पूर्णचन्द्रनिभेषु च ॥९॥
चित्रोत्कीर्णं सुवर्णेषु प्रतिपादेषु संस्थितम् । दुकूलं पट्टदेवांगं चित्रपट्टादिसम्भवम् ॥१०॥

---

१. ब्रह्मदक्षप्रजापतये शिवो ब्रह्मणि प्रोक्तवान् क ग ।
२. घोरोत्पत्ति वधार्थाय क ग ।
३. मणि क ।
४. सूत्रचित्रम् क ।
५. अर्द्धप्रमाणे क ग ।

विद्धं कुसुमरक्तं वा प्राकार शिखरान्वितम् । चतुर्भिश्चन्द्रकैर्युक्तं पंचवर्णैः सुशोभनैः ॥११॥

किंकिणीरव[1] कोपेतैः चतुष्कोण–समाश्रितैः ।

गिरिप्राकारशिखरैः सुलक्षैः पंचवर्णकैः ॥

सर्ववस्त्रसमुद्भूतैः कन्दुकैश्च प्रलम्बिभिः ॥१२॥

इत्थमाश्रवणं कृत्वा विन्यसेत् दण्डकासने । तस्योपरि महाशास्त्रं देव्याख्यं स्थाप्य पूजयेत् ॥१३॥

विद्यादानोपहारेण[2] शोभां कृत्वा प्रयत्नतः । गन्धादिवासितकरः श्रीमदासनसंस्थितः ॥१४॥

भावयित्वा शिवं देव्याः शास्त्रेऽस्मिन् परमेश्वरम् ।

स्वयं तिष्ठति देवेशी पतिं[3]देवनमस्कृतम् ॥१५॥

स्वकायेन[4] तीर्थेषु नरेन्द्र-भवनेषु च । भावयेत्परमं धर्मं गृहग्रामे पुरेषु च ॥१६॥

श्रोतारं च गुरुध्यानं[5] शिवं ध्यात्वा यथाविधिः । गन्धपुष्पैश्च सम्भारैः प्रत्यहं तु युगे युगे ॥१७॥

पूजयित्वा नमित्वा च कृतांजलिपुराः स्थिता । सर्वे नीचासनाः शान्ता यथावृद्ध क्रमानुगाः ॥१८॥

धर्मतः श्रोतुमिच्छन्ति कथान्तरविवर्जिताः । ज्ञानारम्भे समाप्तौ च श्रोतृभिर्वा चकेन च ॥१९॥

देव्या मंत्रं शिवाख्यं च उच्चार्यं सर्वसिद्धये ।

आनयेद् धूपपुष्पाद्यै एकैकः श्रावकः क्रमात् ॥२०॥

सर्वसाधुजनार्थाय ज्ञानमन्त्रप्रदोऽपि वा । आचारेभ्यः[6] करं दद्यात् वाचकः कुसुमत्रयम् ॥२१॥

तेऽपि तैरादिमध्यान्तैः कुर्युः पूजां तु मस्तके ।

इति शक्त्या च भक्त्या च पूजां कृत्वा सदक्षिणाम् ॥२२॥

प्रवर्त्तयति यः कश्चित् देव्याः पुस्तक वाचनम् । सर्वसत्त्वोपकाराय आत्मनश्च विमुक्तये ॥२३॥

तस्य पुण्यफलं वक्ष्ये श्रोतृणां वाचकस्य च । धनमायुः प्रजा कीर्त्तिः प्रज्ञां बुद्धिं प्रियं सुखम् ॥२४॥

इह सम्प्राप्य विपुलं देहान्ते शान्तिमाप्नुयात् । असम्पूज्य महाज्ञानं प्रदेशे चाप्यसंस्थिते ॥२५॥

वाचयन्नरकं याति तस्मात् संस्कृत्य वाचयेत् । असम्पूज्य तथा[7] वाक्यं देवाग्निगुरुसन्निधौ ॥२६॥

---

१. वरकोपेतैः क ग ।
२. विद्यादानोपचारेण क ग ।
३. यातां क ।
४. सुकायेन क ।
५. ज्ञानं क ग ।
६. आचान्तेभ्यः क ग ।
७. अपि वाच्यं क ।

मुने धर्मप्रवाहस्य उपकाराय बुद्धिमान् । यथा प्रवर्त्तितो धर्मो अधर्मं च परित्यजेत् ॥२७॥
लोभाद्भूयान्न वाच्येदं देव्याः शास्त्रं शिवात्मकम् । वाचनात्तु जगच्छान्तिरवधार्यं दिने दिने ॥२८॥

गच्छेयुः कुशपुष्पार्थं शिवोमापूजनाय च ।
ततः शास्त्रं समाप्यं तु पूजां कृत्वा विशेषतः ॥२९॥
देव्या विद्यागुरूणां च भक्त्या च शिवयोगिनाम् ।
कन्यका द्विजबन्धूनामन्येषामपि बुद्धिमान् ॥३०॥

भोजनं कल्पयेच्चैषां दीनार्थानां च सर्वशः । मित्रस्वकुलसाधूनामन्ते भृत्यजनस्य च ॥३१॥
गुरवे दक्षिणां दद्याच्छिवो गोमिथुनं शुभम् । वस्त्र युग्मांगुलीयकं घृतपूर्णं तु भोजनम्[2] ॥३२॥
वाचकाय प्रदातव्यं दक्षिणा पूर्वभाविता । अभाषितस्य दातव्या गुरोरर्धेन दक्षिणा ॥३३॥

शेषाणां च यथाशक्त्या दक्षिणां शिवयोगिनाम् ।
दद्यात् प्रबोधयेत् पश्चात् प्रदीपादेः शतं बुधः ॥३४।
वितानश्च ध्वजं देयं देवी देवस्य भोजनम् ।
यथा मन्त्रवतः कार्यं पूजा नार्चा विवर्जिता[3] ॥३५॥
निवेदयेच्छिवे देव्यै अशेषं पुण्यवादिनाम्[4] ।
ज्ञानं पुण्यं महाशान्ति श्रवणान्नात्र संशयः[5] ॥३६॥
एवमुद्योतनं कृत्वा देव्याः शास्त्रस्य भक्तितः ।
शिव - दीप - प्रदाता च प्रनष्ट-तम-संचयः ॥३७॥
विधूतपापकलिलो विशुद्धस्ते न संशयः ।
भवन्ति सर्वलोकास्तु भाविता देव योनयः ॥३८॥
अशेषपापनिर्मुक्तः शृणु यत् फलमाप्नुयात् ।
कुले निशंकमुद्धृत्य भार्या पुत्रादिभिर्युतः ॥३९॥

---

१. श्वेत क ग ।
२. सुभाजनम् क ।
३. क ग पुस्तके श्लोकत्रयं नास्ति ।
४. पुण्य वारिणा क ।
५. ततः स्यादक्षयफलम् क ग ।

बहुभि स्वजनैः स्निग्धै र्भृत्यदासैः[1]समाश्रितैः ।
इत्येभिः सहितैः सर्वैः श्रीमच्छिवपुरे व्रजेत् ॥४०॥

महाविमानरारूढः सर्वकामसमन्वितः । तत्र भुक्त्वा महाभोगं यावदाचन्द्रपावकम्[2] ॥४१॥

दाता हर्त्ता च कर्त्ता च यावत्साक्षाल्लये महत् ।
प्रलयान्ते ततः ज्ञानं प्राप्य योगमनुत्तमम् ॥४२॥

ततो देव्या[3] प्रसादेन मुच्यते नात्र संशयः । यस्मादवगतं कुर्यात् देव्याः पुस्तकवाचनम् ॥४३॥
भोगापवर्गफलदं शिवभक्त्या दिने दिने । न मारी न च दुर्भिक्षं न रक्षांसि न व्याधयः ॥४४॥
नाकाले म्रियते राजा हन्यते न च शक्तिभिः । शृणोति यश्च सततं शिवधर्मं नराधिपः[4] ॥४५॥
तत्र देशे महापुण्ये देव्याः सन्निहिता नृप । श्रुत्वा सकृन्निगदतो मनोयोगान्नराधिप ॥४६॥
शिवः सहोमया तत्र क्रीडते भक्तिमतां पुरे । ददाति सर्वकामानि मनसेप्सितफलानि च ॥४७॥
सकृच्छ्रुत्वा महापुण्यं प्रतिष्ठा याज्ञिकं नृप । हेमन्ते ब्रह्मलोकं तु शिशिरे विष्णुना सह ॥४८॥

तस्मिन् दिने महापुण्ये तस्य चन्द्रमसो भवेत् ।
इह भुक्त्वाखिलान् भोगान् परिवारेण स नृपः ॥४९॥
अन्ते देव्या पुरवरे शिवेन विद्युता सह ।
क्रीडते विपुलैर्भोगैर्यावदाचन्द्रतारकम्[5] ॥५०॥

वसन्ते भूष्यते देवी उमा सर्वसुखप्रदा । निदाघे वह्नि[6]र्लोकन्तु सर्वकामसमन्वितम् ॥५१॥

तस्मिन् भोगान् महान् भुक्त्वा देवीलोके महीयते ।
प्रावृट् काले रुद्रलोकं श्रुणुयाद् याति पार्थिवः ॥५२॥
शरत् सर्वानवाप्नोति कामान्राज्यं नृपोत्तम ।
त्रिः श्रुत्वा भक्तिमास्थाय मुच्यते सर्वपातकैः ॥५३॥

विशुद्धश्च भवेद्वंशः सर्वकामफलावहः । पंच श्रुत्वा महाध्यायी स्वर्गलोके महीयते ॥५४॥

---

१. मर्त्यदासैः क ।
२. इच्छया शिवमन्दिरे क ।
३. परमेशप्रसादेन क ।
४. ख पुस्तके पद्यद्वयं नास्ति ।
५. क ग पुस्तके नास्ति पद्यद्वयम् ।
६. ब्रह्मलोकस्तु ख ।

मातृसंघं यमो नित्यं तुष्यते अविचारणात् । तस्य भोगं वर्णयितुं मम वाणी न शक्नुयात् ॥॥५५॥
इहलोके शुभं भुक्त्वा तदन्ते शिवलोकतः । खट्वावधं तथा श्रुत्वा विनायकस्य जन्म च[1] ॥५६॥
मातृलोकमवाप्नोति क्रीडते च चिरं सुखी ।
देवीं सम्पूजयित्वा तु विधिना नृपसत्तम ॥५७॥
प्रसादश्च प्रकुर्वीत प्रत्यक्षा च भवेत् शिवा । सदाचारः शुभाहारः सर्वसंगविवर्जितः ॥५८॥
वाचयन् पुराणमेतत्तु सर्वकाममवाप्नुयात् । वाचयन् शतमर्धं वा प्रत्यक्षं प्राप्नुयाच्छिवम् ॥५९॥
एतच्चाभ्युदयपादं शतैस्त्रिभिर्नरोत्तमैः ।
सहस्रैर्द्वादशैर्वत्स कथितं सर्वसिद्धिदम् ॥६०॥

। ओं नमो दुर्गायै ।

इति श्री देवीपुराणे वाचनविधिर्नाम[2] अष्टाविंशत्यधिकशततमोऽध्यायः ॥

## ॥ आद्ये देव्यवतारे देवीपुराणं सम्पूर्णम्[3] ॥

१. भवते विगतामयः क ग । २. आद्ये देव्यवतारे देवीपुराणं समाप्तमिति क ग ।
३. क ग समाप्तः सम्पूर्णम् ।



# अकारादिक्रमेण श्लोकानुक्रमणिका ।

## आ

## इ

ई



उ

## ऐ

## ओ



## औ



## क

## च

## झ



## त

## भ

## म

## य

**ष**



**स**